॥ श्रीरस्तु ॥

॥ श्रीमते रामानुजाय नमः । श्रीमल्लोकगुरवे नमः । श्रीमद्वरवरमुनये नमः ॥

सर्वज्ञलोकगुरुनिर्मितस्य आर्यभाग्यस्य श्रीवचनभूषणदिव्यशास्त्रस्य वज्रकवचायमानम्

# ॥ श्रीवचनभूषणमीमांसाभाष्यम् ॥

---

श्रीकुन्नत्तूरय्यन समाख्यानां श्रीमदनन्तार्यवर्यगुरुचरणानामनवग्रहानुग्रहफलभूतम्

श्रीकाञ्ची प्रतिवादि भयङ्कर अण्णङ्गराचार्येण परिशोध्य, ग्वालियर राज्यान्तर्गत मन्दसोर नगरोद्भव परमभागवत वेंकटलाल पसारी नामकस्य श्रीवैष्णवदासस्य ऋणसाहाय्येन प्रोत्साहनेन च

देवकोट्टै - राजाजी मुद्रणालये सम्मुद्र्य प्रकाशितम् ।

१९४९

मूल्यम् २—०—०

प्राप्तिस्थानम् ग्रन्थमाला आफीस् कांचीपुरम् ॥
P. B. Annangaracharya, Granthamala Office, Kancheepuram.

Sri.

Jaya Vijayeebhava Lokacharya.

Jaya Vijayeebhava Sri Varavaramuneendra.



# Srivachanabhooshana-meemamsabhashya.

OF

(SRI KUNNATHOOR AYYAN SWAMI.

Edited by

P. B. Annangaracharya,

KANCHEEPURAM.

GRANTHAMALA OFFICE

1949

Price Rs. 2

श्रीः ॥

श्रीमते रामानुजायनमः ।

श्रीमल्लोकगुरवे नमः । श्रीमद्वरवरमुनये नमः ॥

श्रीकुन्नत्तूरय्यन् समाख्यैः श्रीमदनन्तार्यवर्यैर्गुरुचरणैरनुगृहीतम्

# * श्रीवचनभूषणमीमांसाभाष्यम् ॥ *

*************************************

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् । यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥

लोकाचार्याय गुरवे कृष्णपादस्य सूनवे । संसारभोगिसंदष्टजीवजीवातवे नमः ॥

साङ्गाखिलद्रविडसंस्कृतरूपवेदसारार्थसंग्रहमहारसवाक्यजातम् ॥

सर्वज्ञलोकगुरुनिर्मितमार्यभोग्यं वन्दे सदा वचनभूषणदिव्यशास्त्रम् ॥



सर्वप्रकारैराचार्यसंप्रीत्येकप्रयोजनम् । अनन्तार्यान्वयोत्तंसमाश्रयेऽनन्तदेशिकम् ॥



## विषयनिरूपणाधिकारः प्रथमः

[ मूलम् . सू. १. वेदार्थमरुदियिडुवदु स्मृतीतिहासपुराणङ्गळाले. ]

इदं शास्त्रं प्रपत्तिपरिच्छेदवृत्तिपरिच्छेदात्मना परिच्छेदद्वयात्मकम् । पूर्वस्मिन्परिच्छेदे द्वयस्य पूर्ववाक्यार्थो विचार्यते । उत्तरे उत्तरवाक्यार्थः ॥

अत्र ( वेदार्थम् ) इत्यारभ्य ( मुर्पट्टु ) [ वा – ४ ] इत्यन्तं, शास्त्रस्यारम्भणीयत्वसमर्थनात् शास्त्रोपोद्घातः । ( इतिहास ) [ वा– ५ ] इत्यारभ्य ( अळकाले तिरुत्तुम् ) [ वा– १३ ] इत्यन्तेन * श्रीशब्दार्थो निरूप्यते । ( अरियाद् ) [ वा– १४ ] इत्यारभ्य ( इवळुक्काक ) [ वा– २२ ] इत्यन्तेन द्वितीयप्रकरणेन * नारायण * चरण * शरणशब्दानामर्थः ॥ ( प्रपत्तिक्कु ) [ वा– २३ ] इत्यारभ्य ( तिरुक्कुळलोशैयिलुम् काणलाम् ) [ वा– ५६ ] इत्यन्तेन * तृतीयप्रकरणेन मतुप्प्रत्ययोत्तमपुरुषयोरर्थः । ( इदुतन्नै ) [वा– ५४ ] इत्यारभ्य * ( एकान्ती व्यपदेष्टव्यः ) [ वा– ७९ ] इत्यन्तेन चतुर्थप्रकरणेन * प्रपद्ये इति क्रियापदार्थो निरूप्यते ॥

तत्र, उपोद्घाते प्रथमाधिकरणे, विषयप्रयोजनाद्यभावाच्छास्त्रस्यानारम्भणीयत्वमाशङ्क्य तत्समर्थनं क्रियते ॥ अत्रैवं संशयः: इदं शास्त्रमनारम्भणीयम्, उतारम्भणीयमिति; तदर्थं अस्य विषयादिर्न संभवति, उत संभवति वेति; तदर्थम्, * मुमुक्षुर्वै शरणमहं प्रपद्ये * अमृतस्यैष सेतुः * यमेवैष वृणुते तेन लभ्यः * न्यास इति ब्रह्मा *

इत्यादिवाक्यविशेषाणां एतत्संग्रहरहस्यत्रयस्य च वेदान्तशास्त्र एवान्तर्भावः, उत तद्भिन्नशास्त्रत्वमिति; तदर्थम्, * असारम् * इत्यादिवचनं तद्भिन्नत्वे प्रमाणं न भवति, उत भवतीति ॥ यदा न भवति, तदा उदाहृतवाक्यानां वेदान्तशास्त्रभिन्नशास्त्रत्वे प्रमाणाभावात् भिन्नशास्त्रत्वासिध्द्या विषयाद्यभावात्, निर्विषयं शास्त्रमनारम्भणीयमिति पूर्वपक्षे फलफलिभावः ॥

यदा, असारम् इत्यादिवचनम् उदाहृतवेदान्तवाक्यविशेषाणां वेदान्तशास्त्रात् भिन्नशास्त्रत्वे प्रमाणं भवति, तदा तेषां शास्त्रान्तरत्वाद्विषयादिसंभवेन प्रकृतं शास्त्रमारम्भणीयमिति सिद्धान्ते फलफलिभावः ॥

पूर्वपक्षस्तु, न तावदिदं शास्त्रमारम्भणीयम्, वेदान्तं शास्त्रत्वाभावात्; न चेदं भक्तिशास्त्रम् । ब्रह्मसूत्रस्य तथात्वेन कृतकरत्वप्रसंगात् । नापि प्रपत्तिशास्त्रम्; * नानाशब्दादिभेदात् * इत्यादिभिः प्रपत्तेरपि चिन्तितत्वेन तस्यैव प्रपत्तिशास्त्रत्वात् । तत्राचिन्तितानां तदुपयुक्तानां च भगवच्छास्त्रादिषु प्रपत्त्यध्यायेषूपबृंहितत्वात् । नापि तदुभयातिरिक्तं शास्त्रम्; भक्तिप्रपत्तिव्यतिरेकेण अतिरिक्तमोक्षसाधनाभावात्; तत्साध्यमोक्षविशेषासिद्धेश्च ॥

न च आचार्यहृदयादिषु वेदान्तशास्त्रात्सारस्य शास्त्रान्तरत्वेन प्रतिपादनात्तत्सिद्धिः । भक्तिशास्त्रापेक्षया प्रपत्तिशास्त्रस्यैव सारतया तत्र प्रतिपादितत्वात् ॥ न च * शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम् । उपदेशाद्धरिं बुद्ध्वा विरमेत्सर्वकर्मसु * ॥ इत्यत्र उपदेशशास्त्रं भिन्नमुक्तमिति वाच्यम् । न ह्यत्र शास्त्रोपदेशयोः भिन्नं विषयादि प्रतीयते; किंतु, तदभेद एव । शास्त्रे क्लेशेन साध्यं यज्ज्ञानं तदत्र अक्लेशेन भवतीति प्रतिपादनात् । * अनन्तपारं बहु वेदितव्यमल्पश्च कालो बहवश्च विघ्नाः । यत्सारभूतं तदुपाददीत हंसो यथा क्षीरमिवाम्बुमिश्रम् * इत्येतदप्युक्तार्थाभिप्रायमेव ॥

ननु, * असारमल्पसारं च सारं सारतरं त्यजेत् । भजेत्सारतमं शास्त्रे रत्नाकर इवामृतम् ॥ * इति वैकुण्ठदीक्षितीयोपात्तं वचनमस्तीति चेत्; ततः किम्? अत्र असारशब्देन — वेदबाह्यकुदृष्टिशास्त्रमुच्यते; अल्पसारमित्यनेन — पूर्वभागे ऐहिकफलतत्साधनप्रतिपादकांश उच्यते; सारशब्देन — आमुष्मिकफलतत्साधनप्रतिपादकांशः; सारतरशब्देन — आत्मप्राप्तितत्साधनप्रतिपादकांशः; सारतमशब्देन — परमात्मप्राप्तितत्साधनभक्तिप्रपत्तिप्रतिपादकांशश्च उच्यते ॥

किंच, * वेदाच्छास्त्रं परं नास्ति * न वेदान्ताच्छास्त्रम् * इत्यादिना अतिरिक्तशास्त्रान्तरं निषिध्यते; तस्मात् उदाहृतवेदान्तवाक्यानां रहस्यत्रयस्य च वेदान्तशास्त्रादुत्तीर्णशास्त्रत्वे मानाभावात् अस्य विषयप्रयोजनाद्यभावेन अनारम्भणीयत्वमिति ॥

अत्रोच्यते ( वेदार्थमिति ) अत्र, व्युत्पादनीयास्सर्वेऽप्यर्थाः वेदान्तसारवाक्यसिद्धा इति इदं शास्त्रं वेदशास्त्रमित्यर्थः । वेदान्तसारवाक्यार्थः स्मृतीतिहासपुराणैः निर्णीयते इत्यर्थः । वेदान्तसारेति वक्तव्ये वेदेति सामान्योक्तिः वेदमात्रस्यैकशास्त्रत्वमङ्गीकृत्य । पूर्वभागावसेयकर्मस्वरूपस्य परार्थकैङ्कर्यत्वम्; उपरिभागवेद्यब्रह्मणो निर्हेतुकोपायत्वम्, तत्रोक्तभक्तेः प्राप्यरुचित्वम्, तदुक्तप्रपत्तेः स्वरूपयाथात्म्यज्ञानरूपत्वं, तदुभयसाध्यानुभवकैङ्कर्ययोः केवलपरार्थत्वञ्च अस्मिन् शास्त्रे प्रतिपाद्यत इति सूचनार्था । ततश्चैवमर्थपञ्चकयाथात्म्यप्रतिपादनात् सारं शास्त्रम् । सिद्धोपायफलभूतशरणागतिप्रतिपादनात् षडङ्गप्रपत्तेरुत्तरवृत्तितया फलत्वप्रतिपादनाच्च फलप्रपत्तिशास्त्रमित्युच्यते ॥

ननु, एतत्सर्वं तदा शोभते; यदा उदाहृतवाक्यानां तत्संग्रहरहस्यत्रयस्य चोक्तार्थपरत्वेन भिन्नशास्त्रपरं प्रमाणमस्ति; तदेव नास्तीत्युक्तमिति चेत् न, * असारम् * इत्यादेः प्रमाणत्वात् ॥ अत्र तावत् असारशब्दस्य— बाह्यकुदृष्टिशास्त्रपरत्वं नोपपद्यते; असारं शास्त्रं त्यजेदिति हि योजना । तत्र बाह्यकुदृष्टिशास्त्रस्य शास्त्रत्वमेव नास्ति; अलौकिकफलतत्साधनाधिकाराद्यनुबन्धप्रतिपादकं हि शास्त्रम्; शासनाच्छास्त्रमित्युक्तेः । शासनं च विधिः । न हि बाह्यकुदृष्टिशास्त्रेषु साक्षाद्वा शीक्षादिवत् परम्परया वा [ वेदोदित ] पुरुषार्थसंबन्धोऽस्ति । * या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि तास्स्मृताः * इत्युक्तेः ॥

न च सांख्ययोगादिष्वविरुद्धांशस्य परम्परया वेदोदितपुरुषार्थसंबन्धित्वाच्छास्त्रत्वोपपत्तिरिति वाच्यम्; तथाविधानां तेषां वेदान्तशास्त्र एवान्तर्गततया सारतमशब्दार्थत्वेन भजनविषयत्वात् । किंच, बाह्यकुदृष्टिशास्त्रस्य शास्त्रत्वम्, * वेदाच्छास्त्रं परं नास्ति * इत्यादिना निषिद्धम् । न चात्र परशब्दः – उत्कर्षवाची; तथात्वे समाभ्यनुज्ञानापत्तेः । अतोऽत्र परशब्दः अन्यवाची । अपि च, अत्र रत्नाकरस्य दृष्टान्तितत्वात् दार्ष्टान्तिकेऽपि त्याज्योपादेयविभागविषयस्य एकावयवित्वमवगम्यते । न च बाह्यादिशास्त्रस्य शीक्षादिवद्वेदशास्त्रांशत्वम् । अतोऽत्र वेदशास्त्र एव दार्ष्टान्तिकत्वेन विवक्षिते त्याज्योपादेयविभागः क्रियत इति वक्तव्यम् । तस्मादसारशब्दो न बाह्यकुदृष्टिशास्त्रपरः । एवमल्पसारसारशब्दयोरप्यैहिकामुष्मिकफलतत्साधनप्रतिपादकांशपरत्वं दुरुपपादम् । * एते वै निरयास्तात * स्वर्गेऽपि पातभीतस्य * इत्यादिभिः विषयानुभवस्यासारत्वोक्तेः । यदि भ्रान्तिसिद्धसुखविवक्षया सारशब्दः तदा प्रकरणस्थसारशब्दानामर्थवैरूप्यम् । अभ्रान्तिसिद्धसुखमेव ह्यत्र सारशब्दवाच्यम् । तच्चात्मानन्द एव । * रसो वै सः * इति श्रुतेः । अन्यथा, सारशब्दस्य नानार्थत्वापत्तिः । सारतरशब्दस्य क्षुद्रकप्रायातिक्षुद्रात्मप्राप्तिपरत्वमप्यनुपपन्नम् । तस्मात् अत्रासारशब्देन ऐहिकामुष्मिकैश्वर्यप्रतिपादकांशः; अल्पसारशब्देन आत्मप्राप्तितत्साधनप्रतिपादकांशः; सारशब्देन परमात्मप्राप्ति-तत्प्रापकभक्तिप्रतिपादकांशः; सारतरशब्देन अनुभवपरीवाहरूपस्वार्थकैङ्कर्य-तत्साधनात्मसमर्पणप्रतिपादकांशः, सारतमशब्देन परार्थकैङ्कर्य-तत्साधनसिद्धोपायप्रतिपादकांशश्चोच्यते । उक्तार्थपरत्वे पदानां स्वारस्यातिशयो द्रष्टव्यः । न च, * वेदसारोपनिषत् * इत्यादिना आचार्यहृदयवाक्येन विरोधः, तस्य शब्दप्राधान्यविवक्षया कृतत्वेन तदभावात् ॥

किंच, अत्र शास्त्रचतुष्टयत्यागपूर्वकस्सारतमशास्त्रस्वीकारो हि विधीयते । तत्र त्यागस्यानुवाद्यत्वं न संभवति । कैवल्यशास्त्रस्योपादेयवेदान्तशास्त्रगतत्वेन तत्त्यागस्याप्राप्तत्वात् । विधेयत्वं च न संभवति; बाह्यकुदृष्टिशास्त्राणामनवसरग्रस्तत्वेनाप्राप्तत्वात् । कर्मकाण्डस्य अल्पास्थिरफलत्वनिर्णयेन तत्त्यागस्य स्वतः प्राप्तत्वाच्च । भजेदिति विधिश्चाज्ञातज्ञापनम्, उत अप्रवृत्तप्रवर्तनम्? आद्ये * अधीतवेदः पुरुषस्स्वयमेव प्रवर्तते * श्रोतव्य इति चानुवादः * इति भाष्यविरोधः । न द्वितीयः, प्रथमसूत्रवत् अत्र श्लोके सिद्धे व्युत्पत्त्यादेरप्रतिपादनात् ॥

न च, अमुमुक्षुविषयोऽयं विधिः; तदा अधीतसाङ्गसशिरस्कवेदश्शक्तत्रैवर्णिको ह्यत्र नियोज्यः; तं प्रति कर्मविचारत्यागो न विधेयः; ब्रह्मविचार इव कर्मविचारेऽप्यस्याधिकारित्वात् । न चात्र त्यागोऽनुवाद्यः; अकृतकर्मविचारत्वेन निर्वेदाभावप्रसंगात् । तस्मात्कर्मणामल्पास्थिरफलत्वनिर्णयसहितानन्तस्थिरफलापातप्रतीतेर्वेदान्तशास्त्राधिकारत्वात् । अत्र तत्त्यागपूर्वकतत्स्वीकारो न विधीयते । किंतु, साङ्गाध्ययनेन तरतमभावापन्नानेक-

पुरुषार्थ - तत्साधनापातप्रतीतियुक्तं तत्र निरतिशयपुरुषार्थं परमसुकृतविशेषादपेक्षमाणं तत्त्यागपूर्वकतत् शक्तं त्रैवर्णिक-मुद्दिश्य, परार्थकैङ्कर्यसिद्ध्युपायपरं निरतिशयपुरुषार्थप्रतिपादकं सारतमत्वादुपादेयम्; अन्यत्सर्वं सातिशयपुरुषार्थ-तत्साधनाववोधित्वात् त्याज्यमिति विधीयते ॥

अत्र, वेदान्तसारशास्त्रे कर्मशास्त्राधिगमस्यानधिकारत्वात्तत्त्यागविधिर्युक्तः । न च कर्मब्रह्मशास्त्रयो-स्त्यागस्य विधेयत्वे तदुभयाप्रामाण्यापत्तिरिति वाच्यम्; निरतिशयपुरुषार्थ, शास्त्राकाङ्क्षारहितानां मन्दभाग्यानां सुकृततारतम्येन तत्र तत्राधिकृतत्वसंभवात् । तस्मादत्र कर्मशास्त्रत्यागपूर्वकं स्वीकार्यत्वेन विधेयं सारतमशास्त्रं वेदान्तशास्त्रं न भवति । किंतु वेदान्तसारशास्त्रं तद्भिन्नमिति सिद्धम् ॥

न चात्र सारतमशब्देनोपदेशशास्त्रं रहस्यत्रयमभिधीयते; तस्य कर्मविचारानधिकारत्वादिति वाच्यम् । उत्तरोत्तरं पुरुषार्थातिशयपरत्वप्रक्रमभङ्गप्रसंगात् । एवं शक्तत्रैवर्णिकं निरतिशयपुरुषार्थकाममुद्दिश्यानेन वचनेन वेदान्तशास्त्रविलक्षणं तत्सारशास्त्रं विहितम् । अस्यापि शास्त्रस्यासारादिशास्त्रमिश्रितत्वेन दुर्विवेचत्वात् एतदु-पदेशरूपमेतत्समानार्थकं सुग्रहं रहस्यत्रयं ग्राह्यमिति कतिपयवचनैरुच्यते * अनन्तपारम् * शास्त्रज्ञानम् * इत्यादिभिः। ततश्च वेदान्तशास्त्रादतिशयितपुरुषार्थ – तत्साधनाववोधितत्सारशास्त्रसंग्रहरूपं रहस्यत्रयलक्षणमुपदेशशास्त्रं वेदान्त-शास्त्राद्भिन्नमिति सिद्धम् ॥

किंच वाक्यगुरुपरम्परापूर्वकमिदं रहस्यत्रयं फलप्रपत्तिपरम्: न तु साधनप्रपत्तिसंग्रहपरत्वेन वेदान्त-शास्त्रान्तर्गतम् । अत्रैवर्णिकोपदिष्टत्वात् ।

यद्यपि रथकारादेरग्न्याधानादाविव विशेषवचनात्तदधिकारस्संभवति । * नार्हन्त्याचार्यतां क्वचित् * इत्याचार्यत्वनिषेधेऽपि * न च हीनवयोजातिः प्रकृष्टानामनापदि * इति आपद्विषये आचार्यत्वं च संभवति । तथापि * मन्त्रं नियतमग्र्याणां यो हीनाय प्रयच्छति । स वै हीनगुरुर्निन्द्यस्तेन सार्धं पतत्यधः * ॥ इति प्रणव-ग्रहणतदुपदेशयोर्निषिद्धत्वेन अस्य साधनप्रपत्तित्वे प्रणवान्वितमन्त्रोपदेष्टृत्वानुपपत्तेः तदुपदिष्टमिदं फलप्रपत्तिपरं भवितुमर्हति; तत्परत्वे तु मुक्तानामिव स्वयम्प्रयोजनत्वेन सप्रणवे अधिकारस्संभवति । अत एवापशूद्राधिकरणे अध्यापनकर्मानुष्ठानानुगुणज्ञानाभावादनधिकार उच्यते । तेषां प्रबन्धे विशिष्टप्रणवमन्त्रानुच्चारणं तु लोकसंग्रहार्थम् । अन्यथा जन्मान्तरसंस्कारवशात् स्वाध्यायज्ञानवतां श्रीविदुरादीनां * धारणे शरीरभेदः * इति प्रत्यवायापत्तिः । श्रीभक्तिसारादिषु * कृष्णानां व्रीहीणां नखनिर्भिन्नम् * इति वेदधारणं प्रत्यक्षम् । एवं धारणेऽपि प्रत्यवायाभावे साधनानुष्ठानोपयोगिज्ञानद्वारा तद्भूतवेदस्य साधनत्वविरहः प्रयोजकः । अतस्सर्वत्र साधनत्वाकारस्यैव वर्णादि-सापेक्षत्वात् फलरूपप्रणवोपदेष्टृत्वं पराङ्कुशादीनामुपपद्यते । अतः फलप्रपत्तिपरं, अत एव स्वयं फलरूपं रहस्य-त्रयं सप्रणवं सर्वाधिकारमिति सिद्धम् । भगवदुपदिष्टरहस्यत्रयविवरणरूपाः दिव्यप्रबन्धा अस्य शास्त्रस्य विषयाः । तदुभयमीमांसारूपमिदं च फलप्रपत्तिशास्त्रम् । तस्माद्विषयप्रयोजनसत्त्वादारम्भणीयमिति ॥

ननु * श्रुतिपथविपरीतं क्ष्वेलकल्पं श्रुतौ च प्रकृतिपुरुषभोगप्रापकांशो न पथ्यः । तदिह विबुधगुप्तं मृत्यु-भीता विचिन्वन्त्युपनिषदमृताब्धेरुत्तमं सारमार्याः ॥ * इति वेदान्ताचार्योक्तिः कथमिव संगच्छत इति चेत्, यथा वीतरागाणां परकर्मण्यश्रद्धावारणाय ब्रह्मशास्त्रं कर्मशास्त्रशेषभूतं तदन्तर्गतं जैमिनिना वर्णितम्; तथा आत्म-

याथात्म्यज्ञानरहितानां साध्योपायशास्त्रे अश्रद्धा मा भूदिति सिद्धोपायशास्त्रमतिरिक्तमपि साधनभक्तिप्रपत्तिशास्त्रे अन्तर्भावितमिति तात्पर्यात् ॥ एवं यद्यपि * आ भगवतः प्रथिताम् * गुरुभ्यस्तद्गुरुभ्यश्च * इत्यनुसंहित-वाक्यगुरुपरम्परा मन्त्रस्य फलप्रपत्तिपरत्वे संगता, न षडङ्गप्रपत्तिपरत्वे । तथापि साधनप्रपत्तिशास्त्रस्यासंप्रदायत्वे, तन्निष्ठानां तत्राश्रद्धा स्यादिति वाक्यगुरुपरम्परा साधनप्रपत्तिशास्त्रेऽपि योजिता ।

अत्रायं संग्रहः :—

विषयस्सारभागोऽस्य वेदान्तात्पर इष्यते । परत्वं सारशास्त्रस्य 'असार' मिति मानतः ॥
तत्रासारपदं नैव बाह्यशास्त्रपरं भवेत् । अपूर्वार्थहिताज्ञादिबोधकं शास्त्रमीरितम् ॥
'शासनाच्छास्त्र' मित्युक्तेर्नैतद्बाह्यागमादिषु । 'या वेदबाह्या' इत्युक्तेः 'वेदाच्छास्त्र' मिति स्मृतेः ॥
किंचात्रार्णवदृष्टान्ताद्वेदे त्याज्यं हि गम्यते । सारात्पसारशब्दाभ्यामैश्वर्यं नाभिधीयते ॥
नित्यत्वस्मृतेर्नो चेल्लक्षणासारशब्दयोः । अबाधितात्यल्पसुखं नापि सारतरं भवेत् ॥
तस्माद् सारादिपदैरधिचिद्ब्रह्मवृत्तिषु । शास्त्राण्यधिकृतान्यत्र क्रमेणाभिहितानि हि ॥
सिद्धोपायपरं शास्त्रमुक्तं सारतमं त्विति । किंचात्र पूर्वकाण्डस्य त्यागपूर्वकसेवनम् ॥
वेदान्ते संगतं नैव तद्विचाराधिकारके । किंचोपदेशशास्त्रं च पराङ्कुशमुखोदितम् ॥
साधनत्वपरं नैव प्रपत्तेः प्रणवान्वितम् । तस्मादारभ्यतां शास्त्रमिदं सविषयादिकम् ॥ इति ॥

इति विषयनिरूपणाधिकारः ॥ १ ॥

## ॥ २ ॥ अथ मीमांसानिरूपणाधिकारः ॥

(अस्तिदिधिदुवद्) करणसत्त्वेऽपि परिकराभावादनारम्भणीयमिति शङ्कया संगतिः । संशयस्तु, इदं शास्त्रमनारम्भणीयमुतारम्भणीयमिति । तदर्थं मीमांसालक्षणपरिकरसंपत्तिर्नास्ति – उतास्तीति । तदर्थमस्य प्रबन्धस्य अबाधितन्यायनिबन्धनात्मकत्वं नास्ति, उतास्तीति । तदर्थमेतत्कर्तुः प्रतितन्त्रार्थज्ञानं बाधितम्, उताबाधितमिति । तदर्थम् अस्य ज्ञानस्य स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वोपदेशमूलकत्वम्, अस्य मनन-सामर्थ्यं च नास्ति, उतास्तीति । यदा नास्ति, तदा एतत्प्रतितन्त्रार्थज्ञानस्य बाधसंभवात् एतत्प्रबन्धस्य अबाधित-न्यायनिबन्धनत्वाभावेन मीमांसालक्षणपरिकरशून्यत्वादिदं शास्त्रमनारम्भणीयमिति पूर्वपक्षे फलफलिभावः ॥

यदा चास्य स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वोपदेशमूलकं प्रतितन्त्रार्थज्ञानं मननसामर्थ्यं चास्ति । तदा एतद्दृष्टन्यायस्य तत्त्वज्ञानस्य च अबाधिततया उक्तप्रबन्धस्य अबाधितन्यायनिबन्धनत्वसंभवात् मीमांसा (त्व) संभवेन परिकरसत्त्वादिदमारम्भणीयमिति सिद्धान्ते फलफलिभावः ॥

पूर्वपक्षस्तु; वेदान्तसारवाक्यसंग्रहरहस्यत्रयस्य विषयत्वात्प्रतितन्त्रार्थप्रमायां करणसंभवेऽपि तावन्मात्रा-न्नार्थनिर्णयः कर्तुं शक्यते । मीमांसालक्षणपरिकराभावात् । व्याकरणादिवत् मीमांसायाः परिकरत्वम् * पुराणन्याय-मीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश * इत्यादिभिरुक्तम् । * धर्मे प्रतीयमाने हि वेदेन करणात्मना । इति कर्तव्यताभागं मीमांसा पूरयिष्यति ॥ * इत्यभियुक्तैरप्युक्तम् ॥

न चास्य प्रबन्धस्य मीमांसात्वसंभवः । अर्वाचीनजडमतिभिः लौकिकवाक्यानामिव वेदान्तसारभूताना- मत्यन्तालौकिकार्थानां वाक्यानां स्वोत्प्रेक्षितन्यायैरर्थनिर्णयस्य कर्तुमशक्यत्वात् । प्रत्युत एतत्प्रबन्धनिबद्धन्यायानां धर्मत्यागप्रापकान्तरसाधनत्वादिसाधकानां वेदविरुद्धत्वेन तर्काभासत्वमेव । तदुक्तम् *आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः * इति । अतः परमर्षिभिः न्यायप्रज्वलितचेतोभिरेव अलौकिकवाक्यमीमांसाकार्या । भवदभिमतप्रतितन्त्रासिद्धार्थाः न केनापि महर्षिणा मीमांसिताः । न वा वेदान्त- वाक्यविचारेणै (रै) दंपर्येण प्रवृत्तैस्सूत्रकारैर्दिङ्मात्रं वा सूचितम् ॥

न च इतिहासश्रेष्ठश्रीरामायणमहाभारताभ्यां अर्थनिर्धारणात् परमर्षिवचनानुगुण्यमस्तीति वाच्यम्; मीमांसया निर्णीते वेदार्थे तदुपबृंहणस्य तत्संवादितया तत्स्थिरीकरणार्थत्वेन मीमांसाया एवान्तरङ्गत्वात् । साधन- प्रपत्तिपरवेदान्तवाक्यजातं तु, *नानाशब्दादिभेदात् * पुरुषविद्यायामपि चेतरेषामनाम्नानात् * इत्यादिभिस्सूत्रकारैः श्चिन्तितम् । ततश्च साधनप्रपत्तेस्सूत्रकारेण सूचितत्वात् आधुनिकैः तदनुसारेण एतद्विषयप्रबन्धनिर्माणमुपपद्यते । तस्मात् त्वदभिमतप्रतितन्त्रार्थपरत्वेन वेदान्तवाक्यस्य कस्यापि केनचिन्महर्षिणाऽपि चिन्तितत्वादर्शनात् । इदानीं स्वोत्प्रेक्षितन्यायानां तर्काभासत्वसंभवाच्च मीमांसाविरहान्नेदमारम्भणीयमिति ॥

अत्रोच्यते – (अरुदियिडुवदु) – वक्ष्यमाणप्रबन्धेन न्यायनिबन्धनात्मना वेदार्थनिर्णयं करोमीत्यर्थः ।

अयं भावः — सूत्रत्वं नाम न तावज्जातिविशेषः । किंतु, *अल्पाक्षरम् * इत्यादिलक्षणयुक्तत्वम् ॥ तच्च आधुनिकवाक्येष्वपि संभवति । अत एवाद्यापि भाषान्तरविषये, काव्यालङ्कारादिविषये च बुद्धिसौक्ष्म्याल्लक्षणसूत्र- प्रणेतारो दृश्यन्ते । ततश्च अप्रतिहतन्यायनिबन्धनत्वमेव सूत्रत्वम् । तच्च वक्ष्यमाणस्याप्यव्याहतम् ॥

न च वेदान्तसारवाक्यानामत्यन्तालौकिकानां आधुनिकजडमतिभिरशक्यार्थदर्शनत्वात्तद्विषयसूत्रप्रणयना- संभवः । उक्तचोद्यस्य व्यासादावपि तुल्यत्वात् । न च तस्य स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वतयाऽलौकिकार्थ- विषयसूत्रप्रणयनं संभवतीति वाच्यम्; योगसिद्धौ तत्त्वज्ञानम्, तत्त्वज्ञाने सति योगसिद्धिरित्यन्योन्याश्रयात् ॥

यदि, व्यासेन पूर्वाचार्यपरंपराप्राप्तपरावरतत्त्वज्ञानवतः पराशरादेस्सकाशादेव वेदार्थान् श्रुत्वा, श्रुतानां जगद्ब्रह्मणोश्शरीरशरीरिभावादीनां प्रतितन्त्रार्थानामनुगुणन्यायैः स्वयोगमहिमकृतबुद्धिसौक्ष्म्यकृतैः श्रुतार्थमननरूप- न्यायनिबन्धनं कृतमिति मन्यसे, तर्हि, निर्हेतुकभगवत्कटाक्षलब्धपरावरतत्त्वयाथात्म्यविद्भिः पराङ्कुशादिसूरिभिरुप- देशतः प्रबन्धैश्च प्रोक्तानां तत्तदाचार्यपरम्पराप्राप्तानां प्रतितन्त्रार्थानां भगवन्निर्हेतुकरक्षकत्वादीनां स्वाचार्यमुखाच्छ्रुतानां स्वयोगमहिमलब्धबुद्धिविशेषेणोत्प्रेक्षितन्यायविशेषैः श्रुतप्रतितन्त्रार्थानुगुणमननरूपन्यायनिबन्धनात्मकसूत्रसंदर्भशास्त्र- निर्माणमुपपद्यत इति पश्यतु भवान् ॥

न च वेदविरुद्धार्थत्वात्तर्काभासता, तदविरोधस्य तत्र तत्र वक्ष्यमाणत्वात् । तस्मादस्मिन् शास्त्रे वाक्य- विचारात्मकाः प्रमाणाविरुद्धा न्याया व्युत्पाद्यन्त इति अस्य मीमांसारूपत्वादिदं शास्त्रमारम्भणीयमिति ॥

अत्रायं संग्रहः :—

प्रमितौ प्रतितन्त्राणां सारो यद्यपि साधनम् । मीमांसारहितं नेदमारभ्यमिति चेन्न तत् ॥

निर्हेतुककृपालब्धतत्त्वयाथात्म्यदर्शिनाम् । शठजिन्मुनिमुख्यानामुपदेशात्क्रमागतात् ॥
संसिद्धाः प्रतितन्त्रार्थान्यादवज्वलितचेतसाम् । न्यायैर्निरूपिताश्चात्र तस्मादारभ्यतामिति ॥

इति मीमांसानिरूपणाधिकारः ॥ २ ॥

॥ ३ ॥ अथोपबृंहणनिरूपणाधिकारः ॥

( स्मृतीतिहासपुराणङ्गळाले ) मीमांसारूपेतिकर्तव्यतासिद्धावपि संवाद्युपबृंहणाभावादनारंभणीयमिति शङ्कया संगतिः । इदं शास्त्रमनारम्भणीयमुतारम्भणीयमिति संशयः । तदर्थं न्यायनिर्णीते प्रतितन्त्रार्थे उपबृंहणसंवादो नास्ति? उतास्तीति । तदर्थं व्यासादीनां स्मृतिप्रणेतॄणामुक्तप्रतितन्त्रार्थज्ञानं नास्ति? उतास्तीति । तदर्थं निष्ठाभावो ज्ञानाभावद्योतकः, उत नेति । यदा निष्ठाभावो ज्ञानाभावद्योतकः; , तदा महर्षीणां प्रतितन्त्रार्थज्ञानाभावात् तद्विषयस्मृतिप्रणयनं न संभवतीति उपबृंहणाभावादिदं शास्त्रमनारम्भणीयमिति पूर्वपक्षे फलफलिभावः ॥

यदा निष्ठाभावात् ज्ञानाभावोऽवगन्तुं न शक्यते तदा तेषां प्रतितन्त्रार्थज्ञानसंभवात् तद्विषयस्मृतिप्रणयनसंभवेनोपबृंहणसत्त्वादिदं शास्त्रमारम्भणीयमिति सिद्धान्ते फलफलिभावः ॥

पूर्वपक्षस्तु नेदं शास्त्रमारम्भणीयम् । वेदान्तसारशास्त्रात्मकस्य वाक्यनवकरूपस्य एतत्प्रबन्धस्यैव मीमांसात्वेन प्रतितन्त्रार्थविशेषप्रमित्युत्पत्तावपि महर्षिसंवादाभावे जातेऽपि सा संशयपदमापन्ना भवतीति, उपबृंहणस्यापि अर्थनिर्णयसामग्रीत्वं वर्तते । तदुक्तम् * इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ * इति । * पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः * इति च । न च स्मृतीतिहासपुराणेषु प्रकृतशास्त्रप्रतिपाद्यप्रतितन्त्रार्थानुगुणानि वचनानि संभवन्ति । भवदभिमतप्रतितन्त्राणां महर्षिभिरदृष्टत्वात् । महर्षिभिरपीतः पूर्वमदृष्टाः वेदान्तप्रतिपन्नास्तत्तात्पर्यसिद्धाः भगवन्निर्हेतुककटाक्षविशेषेण तत्त्वदर्शिभिरुपदेशादागताः अस्मिन् शास्त्रे प्रतिपाद्यन्त इति हि वर्ण्यते । न ह्युक्तज्ञानं महर्षीणां संभवति; भगवन्निर्हेतुककटाक्षाविषयत्वात् । स्वयत्नलब्धज्ञानानां परिमितत्वेन तत्त्वयाथात्म्यगोचरत्वासिद्धेः । तस्मात्, प्रतिपाद्यार्थानुगुणोपबृंहणाभावान्नेदमारम्भणीयमितिप्राप्ते,

उच्यते ( स्मृतीतिहासपुराणङ्गळाले ) अस्मदभिमतप्रतितन्त्रार्थानुगुणस्मृतीतिहासपुराणविशेषाणां नासंभव इति तैः वेदान्तसारार्थो निर्णीयते इत्यर्थः ।

अयमभिप्रायः; महर्षीणां भगवन्निर्हेतुकोपायत्वलक्ष्मीपुरुषकारत्वादिप्रतितन्त्रार्थज्ञानाभावेऽपि तैः स्वग्रन्थप्रतिपाद्यचेष्टितादिविशेषेण वेदान्ततात्पर्यार्थानां प्रकाशितत्वात् पुरावृत्तप्रतिपादनप्रवृत्तैः भगवत्तात्पर्यापरिज्ञानेऽपि कथाभागप्रदर्शनोपपत्तेः । तत्प्रकाशकवचनानामुपबृंहणत्वं संभवति । अथवा, पूर्वपूर्वस्मृतिं दृष्ट्वा उत्तरोत्तरस्मृतिप्रणयनात्तदर्थज्ञानाभावेऽपि पर्यायशब्दैस्तच्छायानुकारिस्मृत्यन्तरप्रणयनमुपपद्यते । यद्वा, स्मर्तॄणां वेदान्ततात्पर्यज्ञानं विद्यत एव । तथाऽपि न तेषां तन्निष्ठा जायते, अदृष्टविशेषकारितरुचिविशेषस्याभावात् । तेषां परोपदेशमात्रानुगुणज्ञानसंभवेऽपि निष्ठोपयोगिदृढाध्यवसायाभावोपपत्तेः । अत एवोच्यते; * नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते * इति । अत्र बुद्धिदौर्बल्यादित्युक्तं बुद्धिदौर्बल्यं दृढाध्यवसायाभावः । तस्मात्तेषामुपदेशयोग्यज्ञान-

संभवेन अस्मत्प्रतितन्त्रार्थानुगुणस्मृतिप्रणयनं युज्यते । इत्युपबृंहणानि स्युः ।

संग्रहस्तु,

प्रतितन्त्रार्थविज्ञानं महर्षीणां न विद्यते । निष्ठाभावादतस्तेषां नोपबृंहणसंभवः ॥
अतो नारभ्यतां शास्त्रमिति चेन्न ह्यसंभवः । महर्षिभिस्स्वप्रबन्धे चेष्टितादिप्रदर्शनात् ॥
ज्ञानाभावेऽप्यनुष्ठानं पुरावृत्तमशेषतः । साक्षात्कृत्य तदर्थानामुपबृंहणसंभवात् ॥
अथवा पूर्वपूर्वासां स्मृतीनां दर्शनात्पुनः । तत्तच्छायानुसारेण स्मृतिप्रणयनं भवेत् ॥
यच्चोपदेशयोग्यं तत् ज्ञानं दुर्बलमिष्यते । तेषामपि ततश्चेदं शास्त्रमारभ्यतां बुधैः ॥

इत्युपबृंहणनिरूपणाधिकारः ॥ ३ ॥

## ॥ ४ ॥ अथ पूर्वभागविरोधपरिहाराधिकारः ॥

( स्मृतियाले पूर्वभागत्तिलर्थमरुदियिडक्कडवदु )' एवं सामग्रीसत्त्वेऽपि प्रबलप्रमाणप्रतिबन्धात् प्रतितन्त्रार्थप्रमा नोत्पद्यते । इति शङ्काया संगतिः । संशयस्तु, इदं शास्त्रमनारंभणीयम् । उतारंभणीयमिति । तदर्थमिदं प्रमाणं न भवति ? उत भवतीति । तदर्थं अस्य पूर्वकाण्डमन्वादिस्मृतिविरोधोऽस्ति ? उत नास्तीति । यदा विरोधोऽस्ति तदा बाह्यशास्त्रवदप्रमाणत्वात् अनारंभणीयमिति फलति । यदा च विरोधो नास्ति तदा वेदाविरुद्धत्वेन प्रमाणत्वादारंभणीयमिति सिध्यति ॥

पूर्वपक्षस्तु, नन्वेवमपीदं शास्त्रमनारंभणीयम् । पूर्वकाण्डविरुद्धत्वात् । तदुपबृंहणमन्वादिस्मृतिविरुद्धत्वाच्च । तत्र हि वर्णाश्रमकर्माराध्यं परं ब्रह्मप्रतिपाद्यम् । * आसीदिदं तमोभूतम् * इत्यारभ्य * आपो नाराः * इत्यादिना स्वशास्त्रप्रतिपाद्यकर्माराध्यं परं ब्रह्मेति मनुः । * स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः । वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥ * इत्यन्यत्राप्युक्तम् । अत एव * श्रुतिशिरसि विदीप्ते * इत्यत्र श्रुतप्रकाशिकायां * पूर्वकाण्डे दीप्तम् अत्र विदीप्तम् * इत्युक्तम् । एवं वर्णाश्रमकर्माराध्यं ब्रह्म पूर्वकाण्डे प्रतिपन्नम् । एतच्छास्त्रे च * सर्वधर्मान्परित्यज्य * इति सर्वशब्देन वर्णाश्रमधर्मस्यापि त्यागः प्रतिपाद्यते ; अतः पूर्वभागविरुद्धमिदमप्रमाणम् ॥

किंच इदं कुदृष्टिशास्त्रत्वादप्यनारंभणीयम् । वेदैकदेशनिरूपणत्वात् । कतिपयवेदान्तसारभूतानि हि निरूप्यन्ते । अस्मत्सिद्धान्ते पूर्वोत्तरभागयोरैकशास्त्र्यमभिहितम् । अत्रोपासकैः विविदिषोत्पत्त्यर्थकतया कर्माङ्गीकारादैकशास्त्र्यं सिद्धम् । साधनप्रपत्तिनिष्ठैर्विद्यासहकारित्वाभावेऽपि वर्णाश्रमप्रयुक्तत्वेन कर्माभ्युपगमादैकशास्त्र्यसिद्धिः । सिद्धोपायनिष्ठैर्विद्याङ्गत्वेन वर्णाद्यर्थत्वेन वा कर्मणामनङ्गीकारात्कर्मकाण्डपरित्यागेनैकशास्त्र्यासिद्धेः, वेदैकदेशनिरूपणमिदं शाङ्करादिग्रन्थवदनारंभणीयमिति चेत् ; तत्राह । ( स्मृतियाले पूर्वभागत्तिलर्थमरुदियिडक्कडवदु ) मन्वादिस्मृतौ प्रतितन्त्रानुगुणविशेषवचनसद्भावस्य पूर्वमुक्तत्वात्, तैर्वचनैः पूर्वभागावसेयकर्मस्वरूपयाथात्म्यमप्यस्माभिरत्र प्रबन्धे निरूप्यत इत्यर्थः । ततश्च, पूर्वभागापरित्यागादत्राप्यैकशास्त्र्यसिद्धिरिति चाभिप्रायः । अयमर्थः, यथा चोपासनशास्त्रे कर्ममीमांसाप्रतिपन्नं स्वर्गादिसाधनत्वं देवतान्तरविषयत्वं च परित्यज्य तदेव विविदि-

षासाधनतया, केवलान्तर्यामिविषयतया च व्यवस्थापितम्; यथा वा; साधनप्रपत्तिशास्त्रे कर्ममीमांसाप्रतिपन्नमाकारद्वयम्; ब्रह्ममीमांसावसेयं विविदिषासाधनत्वं च परित्यज्य वर्णाश्रमप्रयुक्तत्वस्वार्थकैङ्कर्यत्वाद्याकारविशिष्टतया कर्म प्रतिपादितमित्युभयत्रापि शास्त्रैक्यसिद्धिः । नापि पूर्वकाण्डविरोधः । तथा अस्मिन् शास्त्रे कर्मणः पूर्वमीमांसाप्रतिपन्नमाकारद्वयम्, (ब्रह्ममीमांसावसेयमाकारद्वयम्) साधनप्रपत्तिशास्त्रप्रतिपन्नवर्णादिप्रयुक्तत्वं स्वार्थत्वादिकं च परित्यज्य केवलाज्ञाप्रयुक्तत्वपरार्थतार्चावतारविषयत्वादिना तदेव कर्म प्रतिपाद्यत इति शास्त्रैक्यसिद्धिरिति न कुदृष्टिग्रन्थतुल्यता । नापि पूर्वभागविरोधाद्बाह्यत्वम् । यथा च कर्मशास्त्रप्रतिपन्नस्वर्गादिसाधनत्वपरित्यागेऽपि तत्साधनत्वादिबोधकांशस्या मुमुक्षुविषयतया प्रामाण्यस्वीकारात् ब्रह्मशास्त्रस्य तदविरोधः; यथा वा, उपासनशास्त्रप्रतिपन्नविद्याङ्गत्वपरित्यागेऽपि तस्य शक्तविषयत्वकल्पनात् न्यासशास्त्रस्य तदविरोधः एवं फलप्रपत्तिशास्त्रस्यापि कर्मशास्त्रोक्तस्वर्गादिकारणत्वादीनामुक्ततद्विषये प्रामाण्यस्वीकारात्, उक्तशास्त्रत्रयप्रतिपन्नवर्णाश्रमप्रयुक्तत्वान्तर्यामिविषयत्वादेः स्वतन्त्रविषयतया प्रामाण्यस्वीकाराच्च, कर्मकाण्डाविरोधः । तस्मादस्य वेदान्तसारशास्त्रस्य पूर्वभागेन सहैकशास्त्रत्वात्तदविरोधाच्च, न्यासोपासनशास्त्रवदेवारम्भणीयत्वसिद्धिरिति ॥

संग्रहस्तु ;—

वर्णादिधर्मत्यागोक्त्या पूर्वभागविरोधतः । अप्रमाणमिदं शास्त्रमारभ्यं नेति चेन्न तत् ॥
आज्ञाप्रयुक्त्या तत्कार्यमित्यत्रैव समर्थनात् । वर्णाद्यर्थत्वशास्त्राणां स्वतन्त्रे सावकाशतः ॥
शास्त्रैक्यमविरोधश्च पूर्वभागेन सिध्यति । तस्मादारम्भयोग्यं तदिदं शास्त्रं कृतात्मनाम् ॥

इति पूर्वभागविरोधपरिहाराधिकारः ॥ ४ ॥

## ॥ ५ ॥ अथ वेदान्तविरोधपरिहाराधिकारः ॥

(मत्तैयिरण्डालुमुत्तरभागत्तिलर्थमरुदियिडक्कडवदु) एवमपि, प्रतिबन्धकान्तरसत्त्वान्नोक्तसामग्रीमात्रात्प्रतितन्त्रप्रमोत्पत्तिरिति शङ्कया सङ्गतिः । संशयश्च । इदं शास्त्रमनारम्भणीयम्, उतारम्भणीयमिति । तदर्थमिदमप्रमाणम्, उत प्रमाणमिति । तदर्थम् इदमुत्तरभागविरुद्धम्, उताविरुद्धमिति । यदा विरुद्धम्, तदा अप्रमाणत्वादनारम्भणीयम् । यदा चाविरुद्धम्, तदा प्रमाणत्वादारम्भणीयमिति पूर्वोत्तरपक्षयोः फलफलिभावौ ॥

पूर्वपक्षस्तु, * सम्यङ्न्यायकलापेन महता भारतेन च । उपबृंहितवेदाय नमो व्यासाय विष्णवे ॥ * इति साक्षाद्विष्णुप्रणीतोपबृंहणप्रधानब्रह्मसूत्रविरुद्धत्वात्, तद्विरोधेन वेदान्तेनापि विरोधाच्च, तद्विरुद्धमिदमप्रमाणत्वादनारम्भणीयम् । वेदान्ते न्यासोपासनयोर्भगवत्प्राप्तिहेतुत्वं प्रपञ्चितम् । अत्र (प्रापकान्तरपरित्यागेत्यादिना) तयोरनुपायत्वस्वरूपविरुद्धत्वादिकमुच्यते । किंच सिद्धोपायस्यैव मोक्षहेतुत्वं न्यासोपासनयोः फलत्वं चात्रोच्यते । ब्रह्मसूत्रे न्यासोपासनयोः प्रसदनहेतुत्वं, ईश्वरस्य फलप्रदत्वमात्रं हि समर्थितम् । न तु तदुभयनिरपेक्षत्वलक्षणं सिद्धोपायत्वमपि । अतः अस्य वेदान्तविरुद्धत्वाद्बाह्यशास्त्रवदनारम्भणीयत्वम् । वेदान्तपरित्यागेन तत्सारवाक्यमात्रनिरूपणात्कुदृष्टिशास्त्रत्वं चेति चेत् तत्राह – (मत्तैयिरण्डालुमुत्तरभागत्तिलर्थमरुदियिडक्कडवदु) इति । राद्धान्तः, इतिहासपुराणाभ्यां सूत्रनिर्णीतार्था एव अत्र विशेषतो निरूप्यन्त इत्यर्थः ॥

अयं भावः । वेदान्ते स्वतन्त्रं प्रति भक्तिन्यासयोः स्वरूपानुरूपत्वम्, उपायत्वं चोक्तम् । अत्र परतन्त्रं प्रति स्वरूपविरुद्धत्वादि प्रतिपाद्यते । अतः अधिकारिभेदान्न विरोधः । नापि वेदान्तशास्त्रपरित्यागः । पूर्वद्विकोक्तब्रह्मकारणत्वादेरुत्तरद्विकोक्तस्य साधनस्य फलस्य चात्राभ्युपगमात् । भक्तिप्रपत्त्योस्तत्रोक्तसाधनत्वस्य फले स्वार्थत्वस्य च स्वतन्त्रविषयत्वाभ्युपगमात् तदंशेऽपि प्रामाण्यं स्वीकृतम् । तत्रोक्तन्यासोपासनस्वरूपोपजीवनेन, अत्र न्यासस्य स्वरूपयाथात्म्यज्ञानान्तर्भावमुपासनस्य प्राप्यरुचित्वेन साध्यभक्तित्व च सूत्रकाराभिप्रेतं प्रतिपाद्यते । तदुभयनिरपेक्षसिद्धोपायत्वमपि * परमतः * इत्याद्यधिकरणसिद्धान्ते * सामान्यात्तु * उपपत्तेश्च * इति सूत्राभ्यां प्रतिपादितम् । तद्विषयतया भाष्यकारैः * एतं सेतुं तीर्त्वा अन्धस्सन्ननन्धो भवति * नायमात्मा प्रवचनेन लभ्यो न मेधया * इत्यादिश्रुतिरुदाहृता ॥

न चात्र सेतूपाधादिशब्दाः फलप्रदत्वपराः * फलमत उपपत्तेः * इत्यत्र फलप्रदत्वस्योपपादनात् । न च * फलमत उपपत्तेः *इत्यत्र फलप्रदत्वम्, * परमतः * इत्यत्र फलतत्प्रदयोरैक्यमात्रं प्रतिपाद्यते इति वाच्यम् । पूर्वाधिकरण एव तदुभयसिद्धेः उत्तराधिकरणवैयर्थ्यात् ॥

न च उत्तराधिकरणस्य अपूर्ववादनिरासमात्रे तात्पर्यमिति वाच्यम् । तत्पादस्य प्राप्यतृष्णासिद्ध्यै कल्याणगुणप्रतिपादकत्वेन उत्तराधिकरणस्य तत्रासाङ्गत्यापत्तेः । तस्मात्पूर्वाधिकरणे उत्तीर्णनिराकरणमुखेन भगवतो निरपेक्षोपायत्वं प्रतिपाद्यत इत्यकामेनापि स्वीकार्यम् । एवं सूत्रकारोक्तसिद्धोपायस्यैवात्र प्रतितन्त्रप्रधानत्वेन प्रतिपादनात् न तद्विरोधः, न वा वेदान्तविरोध इति ॥

किंच श्रुतिगतसेतुशब्दः भाष्ये उपायशब्देन व्याख्यातः । उपायत्वं च फलप्रदत्वाद्भिन्नम् । * उपाये गृहरक्षित्रोः * इति भेदेन कीर्तनात् । न च तयोर्भेदनिरूपणाशक्यता । फलसाधनभक्तिप्रदस्योपायत्वात् । फलप्रदस्य रक्षकत्वाच्च ॥

किंच * परमतः * इत्याद्यधिकरणोक्तमुपायत्वं यदि फलप्रदत्वम्, तर्हि तदनुवादेन प्राप्यैक्यं तत्र न विधेयं स्यात् । फलप्रदत्वस्येतः पूर्वमसिद्धत्वात् । यद्यत्रैवाधिकरणे फलप्रदत्वं प्राप्यैक्यं चेत्युभयमपि विधेयम्, तदा पूर्वपक्षे फलप्रदत्वस्य प्राप्याच्छेदसाधकतया हेतुत्वेनोपादानं न सिध्येत् । * फलमतः * इत्युत्तराधिकरणे फलप्रदत्वविधानं च व्याहन्यते । यद्येतदुभयदोषपरिजिहीर्षया * फलमतः * इत्यधिकरणे फलप्रदत्वं विहितम्; तदेव हि * परमतः * इत्यधिकरणेऽनूद्य फलैक्यं विधीयते । पूर्वपक्षेऽपि तदधिकरणसिद्धं फलप्रदत्वमेव हेतुत्वेनोक्तमिति मन्यसे: तदेतत्तदा शोभते; यदि * फलमतः * इत्यधिकरणं * परमतः * इत्यधिकरणात्पूर्वभावि स्यात् । तत्तु विपरीतम् । यद्यन्यत्रैव सिद्धं फलप्रदत्वं पूर्वपक्षे हेतुत्वेनोपन्यस्यते, तदेव तत्सिद्धान्तेऽनूद्यत इति मन्यसे; एवमप्युत्तराधिकरणवैयर्थ्यम् । न्यायनिरपेक्षम्; अन्यत्रैव फलप्रदत्वस्य सिद्धत्वात् । नापि तस्य न्यायनिरपेक्षसिद्धिर्युक्ता । मीमांसकैरपूर्वस्य फलप्रदत्वाभ्युपगमेन भगवतस्तथात्वसिद्धेर्न्यायसापेक्षत्वात् । न च * फलमतः * इत्यधिकरणे अपूर्वस्य फलप्रदत्वमात्रनिराकरणम्; भगवतस्तथात्वं पूर्वाधिकरणे न्यायनिरपेक्षश्रुतिमात्रात्सिद्धमिति वाच्यम् । तथात्वे उत्तराधिकरणस्य कल्याणगुणपरे पादे सङ्गतिर्न सिध्येत् । तस्मान्न्यायनिरपेक्षश्रुतिसिद्धं फलप्रदत्वभिन्नमुपायत्वं पूर्वपक्षे हेतुत्वेनोपन्यस्तम् । सिद्धान्तेऽपि तदनुवादेनोपायोपेयैक्यं

प्रसाधितम् । उत्तराधिकरणेऽपि उपायत्वादर्थान्तरभूतं फलप्रदत्वमपूर्वनिराकरणमुखेन स्थाप्यत इति सूत्रकारे फलप्रदत्वभिन्नस्योपायत्वस्योक्तत्वात् सिद्धोपायपरमिदं शास्त्रं सूत्रकारात्यन्ताभिमतमारम्भणीयमिति ॥

संग्रहस्तु ; —

न्यासादेरनुपायत्वं सिद्धे तन्निरपेक्षताम् । वदत्सूत्रविरुद्धत्वान्नारभ्यमिति चेन्न तत् ॥
उत्तीर्णवादसिद्धान्ते प्रपत्त्याद्यनपेक्षताम् । सिद्धोपायस्य वदति सूत्रकृत्तन्निरीक्ष्यताम् ॥
फलप्रदत्वमेवोक्तं विभोस्तत्रेति चेन्मतम् । तदा तदनुवादेन न फलैक्यविधिर्भवेत् ॥
फलदत्वं फलैक्यं च विधेयं तत्र चेत्तदा । हेतुत्वं फलदत्वस्य पूर्वपक्षे न सिध्यति ॥
उत्तरे चाधिकरणे तद्विधिश्च न सेत्स्यति । परस्मिंस्तद्विधिः पूर्वमनुवाद्यं तदिष्यते ॥
पूर्वपक्षे च हेतुत्वं तस्य स्यादिति चेन्न तत् । तदेवं शक्यते वक्तुमुत्तीर्णापूर्ववादयोः ॥
यदा क्रमविपर्यासः स तु नात्र प्रतीयते । सिद्धमन्यत्र गोप्तृत्वमनूद्यं साधकं च तत् ॥
उत्तरं चाधिकरणं परस्य क्षेपतत्परम् । इति चेत्तन्न पादेऽस्मिन् संगतं न भवेद्यतः ॥
ततश्च सूत्राभिमतोपायत्वस्थापकं परम् । प्रारभ्यतामिदं शास्त्रं प्राज्ञैः प्रद्वेषवर्जितैः ॥

इति वेदान्तविरोधपरिहाराधिकारः ॥ ५ ॥

## ॥ ६ ॥ अथ पुरुषकारत्वनिर्हेतुकत्वसमर्थनाधिकारः ॥

लोकवेदयोरितिहासस्य पूर्वोपादानम् * अभ्यर्हितं पूर्वम् * इति न्यायात्तस्य प्राबल्यपरमित्याह ( इवै इरण्डिलुम् वैत्तुक्कोण्डु इतिहासम् प्रबलम् ) ( अत्ताले अदु मुर्पट्टदु ) एवमधिकारपञ्चकेन वेदान्तसारशास्त्रस्यारम्भणीयत्वं समर्थितमुपोद्धातप्रकरणे । इतः परं ( इतिहासेत्यारभ्य ) शास्त्रं प्रवर्तते । प्रथमे प्रतितन्त्रप्रमायाः करणानुपपत्तिः परिहृता । द्वितीये मीमांसालक्षणेतिकर्तव्यताभावशङ्का परिहृता । तृतीये उपबृंहणलक्षणपरिकराभावशङ्का निरस्ता । चतुर्थे पूर्वभागरूपप्रबलप्रमाणप्रतिबन्धकशङ्का परिहृता । पञ्चमे वेदान्तरूपप्रतिबन्धकशङ्का परिहृता ॥

एवमधिकारपञ्चकेन प्रतितन्त्रप्रमासामग्री पुष्कला निरूपिता । एवं प्रमासामग्री भवतु । प्रमाविषयप्रतितन्त्रार्थः क इत्याकाङ्क्षायां स एवोच्यत इत्युपोद्धातशास्त्रयोस्सङ्गतिः । तत्र प्रथमपरिच्छेदे प्रधानप्रतितन्त्रार्थो निरूप्यते । प्रधानश्च * लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया । रक्षकस्सर्वसिद्धान्ते वेदान्तेऽपि च गीयते ॥ * इत्युक्तशेषिमिथुनरक्षकत्वस्य अहेतुकत्वम् । इदं रक्षकत्वं सिद्धान्तान्तरे सर्वत्र सहेतुकमङ्गीकृतम् । तत्र लक्ष्म्या रक्षकत्वं पुरुषकारभावः । ईश्वरस्य तथात्वमुपायभावः । तदुभयं निर्हेतुकं चेति प्रथमे प्रतिपाद्यते । द्वितीयपरिच्छेदे, एतन्निष्ठाधिकारिणो वृत्तिविशेषः प्रतितन्त्र उच्यते । वृत्तेः प्रपत्तिशेषत्वात् प्रथमपरिच्छेदार्थः प्रधान इत्येकवाक्यत्वम् । तत्र प्रथमप्रकरणे विशेषणभूतलक्ष्मीरक्षकत्वं शोध्यते । द्वितीयप्रकरणे ईश्वरोपायत्वमिति विभागः । अस्मिन्पुरुषकारप्रकरणे पुरुषकारत्वस्य निर्हेतुकत्वम् । तस्य षडङ्गयोगनिष्ठविषयत्वाभावः, पुरुषकारसद्भावे प्रमाणम्, लक्ष्म्या उपायत्वाभावः, अणुत्वम्, शरणागतिविद्यायामुपलक्षणत्वेन वेद्यत्वं चेति षडर्थाः प्रतिपाद्यन्ते ॥

यद्यपि भगवदुपायत्वं प्रतितन्त्रप्रधानम् । लक्ष्मीपुरुषकारत्वं च तदनुबन्ध्यप्रधानम् । तथाप्युपायत्वस्य पुरुषकारपूर्वकत्वात् शास्त्रकारैर्मन्त्रार्थविवरणे प्रवृत्तत्वाच्च प्रथमं श्रीशब्दार्थो निरूप्यते ॥

(इतिहासश्रेष्ठमान श्रीरामायणत्ताल् शिरैयिरुन्दवळेत्तम् शोल्लुगिरदु) अत्र पुरुषकारत्वस्य निर्हेतुकत्वमुच्यते । यद्यपि "सति धर्मिणि धर्माश्चिन्त्यते" इति पुरुषकारत्वसाधनानन्तरं तन्निर्हेतुकत्वचिन्ता कार्या । तथाऽपि, पूर्वपक्षे वापक्षत्वेन एकदेशिभिः पुरुषकारत्वाभ्युपगमात् तत्र नातीव विवाद इति प्रथमं तन्निर्हेतुकत्वमुच्यते ॥

अत्र संशयः । लक्ष्मीपुरुषकारत्वं सहेतुकम्, उत निर्हेतुकमिति । तदर्थं तस्या रावणभवनवासस्तन्निर्हेतुकत्वमवगमयति, उत नेति । तदर्थं गमकत्वे प्रमाणान्तरविरोधोऽस्ति, उत नास्तीति । यदा विरोधोऽस्ति, तदा रावणभवनवासस्य निर्हेतुकत्वानवगमकतया तत्र प्रमाणाभावात् सहेतुकत्वमिति पूर्वपक्षे फलफलिभावः । यदा प्रमाणान्तरविरोधो नास्ति, तदाऽस्य निर्हेतुकत्वावगमकतया प्रमाणसत्त्वान्निर्हेतुकत्वसिद्धिरिति सिद्धान्ते फलफलिभावः ॥

पूर्वपक्षस्तु मन्त्ररत्ने श्रीशब्दस्य * श्रीञ् सेवायाम् * इति धातौ श्रीयत इति काचिद्व्युत्पत्तिरवगता; साच *श्रीयते चाखिलैर्नित्यम्* इत्यादिभिरुपबृंहिता । तत्र प्रतिपन्नमखिलाश्रयणीयत्वं प्रपत्तव्यत्वमेव । एवं च स्मर्यते * एवं प्रपद्य लक्ष्मीं तां श्रियं सद्गुरुभावतः * इति । * अखिलजगन्मातरमस्मन्मातरमशरण्यशरण्यामनन्यशरणश्शरणमहं प्रपद्ये * इति भाष्यकारैरनुष्ठितं च । अत एव भगवत्समाश्रयणस्य गुरुपरम्परानुसंधानपूर्वकत्वात् तत्र "श्रियै नमः" इति लक्ष्म्यां भरसमर्पणं सर्वैरनुष्ठीयते । इयं च लक्ष्मीविषया प्रपत्तिः पुरुषकारभावार्था । तत्र * आश्रयस्वैनमच्युतम् * इति फलश्रुतेः । * भगवच्चरणारविन्दशरणागतिर्यथावस्थिताऽविरतास्तु मे । * इति श्रीशरणागतिफलत्वेनोक्तं च । एवं प्रपत्तेः पुरुषकारभावसाधनत्वावगमात्स न निर्हेतुकः ॥

किंच यदि तस्य निर्हेतुकत्वम्, तदा तस्य सर्वत्र प्रवृत्तिसंभवेन सर्वमुक्त्यापत्तिः, तन्निर्हेतुककृपायाश्चेतनसामान्यविषयत्वात् तत्कृतेश्वरवशीकरणस्य चाप्रतिहतत्वात् । एवं सोपबृंहणसंप्रदायोपपत्तिकस्य श्रीशब्दस्य सहेतुकत्वे प्रमाणत्वात्, तद्विरोधेन रावणभवनवृत्तान्तस्य न पुरुषकारभावनिर्हेतुकत्वावगमकत्वम् । यदि, देवस्त्रीबन्धविमोचनार्थः तद्गृहवासः केवलकृपाकार्य इति तन्निर्हेतुकत्वमुच्येत, तन्न सिध्यति । देवैः पूर्वमेव शरणागतत्वात् । यदि, राक्षसीनां विषये तथात्वम्, तदपि न । त्रिजटावाक्येन तासामपि शरणागतत्वात् । तस्मात्पुरुषकारभावनिर्हेतुकत्वे प्रमाणाभावात्सहेतुकत्वमिति ॥

सिद्धान्तस्तु, लक्ष्मीपुरुषकारभावो द्विविधः । चेतनविषयो भगवद्विषयश्चेति; द्विविधोऽपि निर्व्याज एव । अवतारवृत्तान्तेन तथात्वावगमात् । तत्र प्रथमे * मित्रमौपयिकं कर्तुं रामस्स्थानं परीप्सिता । वधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभः ॥ विदितस्स हि धर्मज्ञश्शरणागतवत्सलः । तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥ * इह सन्तो न वा सन्ति सतो वा नानुवर्तसे । तथापि विपरीता ते बुद्धिराचारवर्जिता ॥ * इत्यादि प्रमाणम् । एवं चेतनं श्रावयतीति व्युत्पत्तिसिद्धचेतनविषयघटकत्वे हेत्वभावो दृष्टः । द्वितीयेऽपि

राक्षसीविषये * भवेयं शरणं हि वः * इति निर्व्याजं प्रतिज्ञाय, मारुतेर्भयप्राप्तौ * पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति ॥ राजसंश्रयवश्यानां कुर्वन्तीनां पराज्ञया । * इत्याद्युक्ते रीश्वरवशीकरणं किंपुनर्न्यायसिद्धमिति तदेव प्रमाणम् । एवमीश्वरं श्रावयतीति व्युत्पत्तिसिद्धेश्वरघटकत्वे हेत्वभावो दृष्टः ॥

न च * तदलं क्रूरवाक्यैर्वः सान्त्वमेवाभिधीयताम् । ......अलमेषा परित्रातुं राक्षस्यो महतो भयात् । ......अभियाचाम वैदेहीं ......प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा * इत्यानुकूल्यसंकल्पाद्यङ्गकात्मनिक्षेपस्य त्रिजटोपदिष्टत्वात् तासामपि उपायानुष्ठानमस्तीति वाच्यम् । उपदेशसंभवेऽ पि ताभिस्तथानुष्ठितमित्यत्र मानाभावात् । न च तासां त्रिजटाभिमानाद्रक्षणोपपत्तिः । विभीषणानीतराक्षसानामिव तासां त्रिजटाभिमाननिष्ठत्वेऽ पि मानाभावात् । देहसंबन्धमात्रस्य रावणेऽपि तुल्यत्वात् । अतस्तद्विषये पुरुषकारभावो निर्हेतुकः । एवं काकविषयेऽ पि * पुरतः पतितं देवी धरण्यां वायसं तथा । तच्छिरः पादयोस्तस्य योजयामास जानकी ॥ * इति निर्हेतुकत्वमवगम्यते । अकारोदितरक्षकत्वस्येव श्रीशब्दोक्तपुरुषकारभावस्योपाध्यश्रवणेन निरुपाधिकत्वसिद्धेः । तदुपबृंहणश्रीरामायणे तदनुष्ठानप्रकाशकेऽ पि उपाध्यदृष्टेश्च पुरुषकारभावो निर्व्याजः ॥

न च गुरुपरम्परायां तत्तत्समाश्रयणं भरसमर्पणरूपम्, किंतु तच्छेषत्वानुसन्धानरूपम् । अन्यथा * श्रीधराय नमः * इत्यस्यापि तथात्वे मन्त्रे तदनुष्ठानासिद्धिप्रसंगात् । तस्मादुपायानुष्ठानस्य स्वशेषत्वानुसन्धानाधिकारत्वात् तत्तदीयानां सर्वेषामपि शेषित्वात् पूर्णानुसन्धानसिद्धये, नमश्शब्दस्य भक्तिवाचकत्वेन गुरुभक्तिपूर्वकत्वनियमात्तद्विद्याधिगमस्य तद्भक्तिसिद्धये च गुरुपरम्परानुसंधानम्, न तूपायानुष्ठानरूपत्वेन । न च पुरुषकारत्वस्य निर्हेतुकत्वे सर्वविषयत्वप्रसंगः । तस्याकिंचनविषयत्वेनातिप्रसंगाभावात् । न च * श्रीयते चाखिलैर्नित्यम् * इति समाश्रयणमुच्यते । * श्रयते च परं पदमित्यत्रापि तत्प्रसंगात् । भाष्यकाराद्यनुष्ठानश्च न साधनत्वेन काकादिषु व्यभिचारात् किंतु उपायपूर्त्यर्थमेव । तस्माल्लक्ष्मीपुरुषकारभावो निर्हेतुक इति ॥

संग्रहस्तु ;

गुरुपङ्क्तौ श्रियः पूर्वं प्रपत्तिर्विहिता तथा । भाष्यकारैः श्रिता लक्ष्मीर्घटकत्वस्य सिद्धये ॥
"एवं प्रपद्य लक्ष्मीं ताम्" इत्यादिस्मृतिदर्शनात् । सर्वमुक्तिप्रसंगाच्च घटकत्वं सहेतुकम् ॥
इति चेत्तत्तन्मन्त्रोक्तोपायानुष्ठानसिद्धये । तच्छेषत्वानुसन्धानं गुरूपङ्क्तौ विधीयते ॥
श्रीशब्दे घटकत्वस्य नोपाधिश्रवणं तथा । रामायणे न सीताया घटकत्वे स दृश्यते ॥
स्मृतौ प्रपत्तिर्या दृष्टा भाष्यकारैश्च या कृता । श्रियस्स्वतः प्रसन्नत्वात्काकादिव्यभिचारतः ॥
अनुष्ठाने राक्षसीनामभिमानेऽ प्यभावतः । अधिकारस्य पूर्त्यर्थं कृता साऽ पि न साधनम् ॥
सर्वमुक्तिप्रसंगोऽ पि तेनैवदितिवारितः । तस्मात्पुरुषकारत्वमहेतुकमिति स्थितिः ।

इति पुरुषकारत्वनिर्हेतुकत्वनिरूपणाधिकारः ॥ ६ ॥

## ॥ ७ ॥ अथ षडङ्गे पुरुषकाराभावाधिकारः ॥

(महाभारत) इति वाक्यम्, (उपायवैभवम्) इति वाक्यं च, पाठक्रमादर्थक्रमस्य बलवत्त्वात् ;

द्वितीयप्रकरणे सङ्गतम् । (इतिहासश्रेष्ठेति) वाक्ये वेदान्तार्थः क उपबृंहितो भवतीत्यपेक्षायामाह (इवैयित्यादि)

(पुरुषकारमाम्पोदु कृपैयुम् पारतन्त्र्यमुम् अनन्यार्हत्वमुम् वेणुम्)

लक्ष्म्या उपायभावे भरन्यासस्सापेक्षत्वदर्शनात्, लक्ष्मीपुरुषकारभावेऽपि सापेक्षत्वमस्तीतिशङ्कायां षडङ्गयोगे पुरुषकारत्वमेव नास्ति ; कृपादेस्तत्रानवकाशात् इत्युच्यत इति पूर्वोत्तराधिकारयोः सङ्गतिः । साध्योपायभावस्थत्वे तन्न सिध्यतीत्युच्यत इति वा संगतिः ॥

संशयस्तु, लक्ष्मीपुरुषकारभावे, निर्हेतुकत्वं नास्ति, उतास्तीति । तदर्थं षडङ्गप्रपत्तौ पुरुषकारभावोऽस्ति, उत नास्तीति । तदर्थं कृपादेः तत्रोपयोगोऽस्ति, उत नास्तीति । तदर्थं षडङ्गप्रपत्तिः द्वयमन्त्राङ्गिका, उत मूलमन्त्राङ्गिकेति । तदर्थं द्वयमन्त्राङ्गत्वे बाधकं नास्ति, उतास्तीति । यदा नास्ति तदा द्वयमन्त्राङ्गकत्वात् पुरुषकारभावस्तत्रास्तीति कृपाया अपि कथञ्चिद्विनियोगोऽस्तीति षडङ्गप्रपत्तौ पुरुषकारसंभवात् तत्सापेक्षः पुरुषकारभाव इति तन्निर्हेतुकत्वासिद्धिः । यदा द्वयमन्त्राङ्गकत्वे बाधकमस्ति, तदा तन्मन्त्रकत्वाभावात्कृपायाः क्लिष्टगतिर्नाश्रयणीयेति षडङ्गप्रपत्तौ पुरुषकारासंभवात् सापेक्षत्वाभावेन तन्निर्हेतुकत्वसिद्धिरिति पूर्वपक्षे सिद्धान्ते च फलफलिभावः ॥

पूर्वपक्षस्तु, लक्ष्म्या उपायत्वे षडङ्गयोगस्य हेतुत्वं तावदवश्यं वक्तव्यम् । मन्त्रे तथा दर्शनात् । तद्वदेव पुरुषकारभावेऽपि षडङ्गो हेतुः । अन्यथा षडङ्गयोगे पुरुषकारापेक्षा न स्यात् । अष्टाङ्गयोगवत् षडङ्गस्यापि हेतुत्वं तावदव्याहतम् । षडङ्गश्च मन्त्ररत्नप्रतिपाद्यः । अतः तत्रावगतं लक्ष्मीपुरुषकारत्वं षडङ्गप्रपत्तिसापेक्षमिति पुरुषकारनिर्हेतुकत्वमसिद्धम् । मन्त्ररत्ने च षडङ्गः प्रतिपाद्यते । तथा हि ; * शरणं प्रपद्ये * इत्यत्र शरणशब्दोपश्लिष्टक्रियापदेन भरन्यास उक्तः । तत्र * गत्यर्था बुद्ध्यर्थाः * इत्यध्यवसायरूपत्वोक्तया 'प्र' इत्युपसर्गेण महत्त्वोपस्थितेश्च महाविश्वास उक्तो भवति । तत्र, उत्तमपुरुषेण अधिकार्युपस्थापकेनाकिञ्चन्योपस्थित्या तत्पुरस्काररूपकार्पण्यं सूचितम् । उपायत्वानुसन्धानस्य गोप्तृत्वविषयतया गोप्तृत्ववरणमप्यन्तर्णीतम् । नारायणशब्दस्य शेष्युपस्थापकतया आनुकूल्यसंकल्पप्रातिकूल्यवर्जनरूपशेषवृत्तिरर्थसिद्धा । अत्र शरणशब्दः * उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम् । वर्तते सांप्रतं चैष उपायार्थैकवाचकः ॥ * इति विशेषितत्वादुपायार्थकः * भरन्यासबलादेव स्वभिन्नविनिवृत्तये । अत्रोपायान्तरस्थाने रक्षको विनिवेशितः ॥ * इति । तत्तत्फलसाधनाराधितस्येश्वरस्य सर्वफलोपायत्वे साधारणेऽपि अत्र विशिष्योपायत्वकथनम्, उपायान्तरस्थाने सहजकारुण्यादिविशिष्टेश्वरस्य निवेशितत्वज्ञापनाय । अत्र भक्तियोगस्थाने प्रपत्तेरेव निवेशितत्वात् कथमीश्वरस्य तथात्वमिति चेत् ; अन्यत्राङ्गतया प्रपत्तिं साधनतया भक्तिं चानुष्ठाय प्राप्यं फलम् अत्र भक्तिस्थाने निविष्टेश्वरसहजकारुण्यादवाप्यत इति, तस्य भक्तिस्थाने निवेशितत्वोपपत्तेः । उक्तनिष्कर्ष विवक्षया * उपायार्थैकवाचकः * इत्युक्तिः । ननु तर्हि, गोप्तृत्ववरणस्यान्तर्णीतत्वेन फलप्रार्थनाया अत्रैव जातत्वात् उत्तरवाक्ये तत्प्रार्थनाऽधिकेति चेत् ; न, अकिंचनस्य ममोपायान्तरस्थाने स्थित्वा अभिमतफलं प्रयच्छेति पूर्वोक्तायां विशिष्टप्रार्थनायामंशाभेदज्ञापनाय विभज्य प्रार्थ्यत इति नाधिक्यम् । यद्वा, उत्तरवाक्ये केवलं वाक्यान्वयार्थं (प्रार्थनापदमध्याह्रियते ; तत्तु फलविशेषपरमिति न पौनरुक्त्यम् । * अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः

कृतकृत्यो भविष्यति ॥ * इति निक्षेपस्य द्वयमन्त्रकत्वं प्रमाणसिद्धम् । एवं षडङ्गन्यासस्य द्वयवेद्यत्वात् तद्वेद्यं पुरुषकारत्वं तत्सापेक्षम् । न चाष्टाङ्गयोगवत् षडङ्गस्याप्युपायतया कृपादेस्तत्र निर्विषयत्वात्, पुरुषकारस्य च कृपापारतन्त्र्यानन्यार्हत्वविशिष्टत्वाच्च, कथं कृपादिकार्यपुरुषकारभाव इति वाच्यम् । अन्यत्र भक्तिप्रपत्त्योरुभयोरप्यनुष्ठेयत्वात् । अत्र प्रपत्तिमात्रस्य तत्फलदानं कृपामन्तरेण न सिध्यतीति कृपासाफल्योपपत्तेः । अतः षडङ्गस्थले पुरुषकारत्वसंभवात् तस्य च सहेतुकत्वात् निर्हेतुकस्य तस्यासिद्धिरिति ॥

अत्रोच्यते —

(पुरुषकारमाम्पोदु कृपैयुम् पारतन्त्र्यमुम् अनन्यार्हत्वमुम् वेणुम्)

भक्तिवत् षडङ्गस्य तत्रोपायत्वात्, सकिञ्चने कृपा न प्रवहतीति अनुष्ठितसाधनाधिकार्यङ्गीकारः ईश्वरस्य स्वतस्सिद्ध इति तद्वशीकरणाय पारतन्त्र्यानन्यार्हत्वे, अप्यफले । अतः सकिञ्चनस्थले कृपादिगुणत्रयघटितं घटकत्वमनपेक्षितमिति अकिंचनविषय एव तदुपयोग इत्यर्थः ॥

न च; भक्तिप्रपत्त्युभयानुष्ठानसाध्यं फलं प्रपत्तिमात्रस्य देयं चेत् ईश्वरस्य वशीकरणेन भाव्यम् । प्रपत्तेरतिक्षुद्रत्वेनास्याकिञ्चनप्रायत्वाच्च कृपादीनां साफल्यमिति वाच्यम् । अन्यत्र प्रपत्तेः भक्तिफलकत्वात् । भक्तेश्च मोक्षफलकत्वाच्च । फलस्योभयसाध्यत्वाभावात् । फलान्तरसाधकप्रपत्तौ अन्यत्रोभयानुष्ठानाभावेन फलान्तरार्थप्रपत्तौ घटकानपेक्षणापाताच्च । न च मुख्यसाधनफलस्य मुख्यसाधनं प्रति देयत्वे घटकेन दातृवशीकरणमपेक्षितम् । मुख्यसाधनरहितस्याकिंचनप्रायत्वात् दयनीयत्वमपि विद्यत इति वाच्यम् । अमुख्यसाधनस्यापि मुख्यसाधनतुल्यफलप्रदत्वसंकल्पस्यानादितया, सत्यसंकल्पेश्वरस्य फलप्रदाने घटकानपेक्षणात् । यदि, फलविसदृशत्वात् घटकापेक्षा; तर्हि, भक्तिस्थलेऽपि घटकत्वप्रसंगः । किंच, यद्यमुख्यसाधने घटकापेक्षा, तदा अश्वमेधावभृथस्नानस्य द्वादशवार्षिकफलप्रदत्वेऽपि पुरुषकारापेक्षापत्तिः । अपि च भक्तितुल्यप्रायश्चित्तेन प्रपदनेन सर्वकर्मक्षये निर्निमित्तत्वेन भगवत्कालुष्याभावात् पुरुषकारेण तच्छामनमनपेक्षितम्, चेतनस्य निर्दुःखत्वात् । दुःखासहिष्णुत्वलक्षणकृपानुदयश्च । अत एवोक्तम् * मुकुन्दे निक्षिप्य स्वभरमनघो मुक्तवदसौ * इति ॥

न च भरसमर्पणात्पूर्वं तत्करणे भगवदभिमतिसिध्यर्थं पुरुषकारापेक्षा वर्तते; पूर्वं कालुष्यहेतुपापसत्त्वादिति वाच्यम् । साधनविधेरेव तदभिमतिरूपतया तदा तस्याः ज्ञातत्वाच्च न तदा घटकापेक्षा । किंच अष्टाङ्गयोगवत् षडङ्गेऽपि योग्यतामात्रं पूर्वं प्रतिपाद्यम् । अन्यथा भक्त्यारम्भेऽपि घटकापेक्षापत्तेः । इत्यङ्गमुदितमित्यात्मज्ञानं षडङ्गे योग्यतासंपादकप्रायश्चित्तत्वेन पूर्वाङ्गतया विहितम् । अतः मुख्यगौणविभागानादरेण प्रतिपदविहितसर्वोपायान्तराभावस्थले घटकापेक्षेति गौणसाधनषडङ्गस्थले न तदपेक्षा ॥

यदि, "न हि वचनविरोधे न्यायः प्रभवति" इति षडङ्गस्य मन्त्रप्रतिपाद्यत्वात् तत्र पुरुषकारापेक्षेति मन्यसे तदेव नास्ति । तथा हि, * प्रपद्ये * इति क्रियापदस्य * प्रार्थनामतिश्शरणागतिः – याच्ञाप्रपत्तिश्शरणागतिः * इति लक्षणानुरोधेन प्रार्थनापर्यवसानात्, भरसमर्पणस्य केवलाध्यवसायरूपत्वाच्च, नोपायप्रार्थनाभर-

समर्पणम् । न च भरसमर्पणस्य गोप्तृत्ववरणगर्भत्वात् तदुपपत्तिः * उपायार्थैकवाचकः इति तदर्थकत्वनिषेधात् । न च, * इदं शरणमज्ञानाम् * इत्यत्र शरणशब्दस्यार्थोऽनेन निष्कृष्यते । मन्त्रप्रकरणगतस्य तदयोगात् । इदंशब्दनिर्दिष्टशरणागतिविषयतया प्रयुक्तशरणशब्दस्य गोप्तृवाचकत्वशङ्कायाः गृहवाचकत्वशङ्कायाश्च चेतनाचेतनविभागानभिज्ञेऽनुदयात् ॥

न च गोप्तृरेवोपायान्तरस्थाननिवेशितत्वात् तस्योपायान्तरनैरपेक्ष्यमभिप्रेत्य, गोप्तर्येवायमुपायत्वनिर्देशः । एतदभिप्रायेण * उपायार्थैकवाचकः * इति निष्कर्षश्चेति वाच्यम् । अत्र शरणशब्दप्रवृत्तिनिमित्तमुपायत्वं गोप्तृत्वमात्रम्, उतोपायान्तरस्थाननिवेशितत्वमात्रम्, उतोपायान्तरस्थाननिवेशितत्वे सति गोप्तृत्वं वा । नाद्यः, * प्रपद्ये * इत्यत्र गोप्तृत्वाभावेन प्रार्थनापर्यवसानानुपपत्तेः । न द्वितीयः । उपायान्तरस्थाने प्रपत्तेर्निवेशितत्वेन भगवतस्तथात्वासिद्धेः ॥

ननु, निरपेक्षत्वमुपायान्तरस्थाननिवेशितत्वम्, ततश्च निरपेक्षरक्षकत्वमेवोपायत्वम्; भगवति तद्व्यतिरिक्तस्योपायत्वस्य निर्वक्तुमशक्यत्वादिति चेत्, किमिदं निरपेक्षत्वम्, प्रपत्तिनिरपेक्षत्वं वा, भक्तिनिरपेक्षत्वं वा, उभयनिरपेक्षत्वं वा; आद्ये अङ्गत्वेन प्रपत्तिनिरपेक्षत्वम्, अङ्गित्वेन तदनपेक्षत्वं वा; नाद्यः, ज्योतिष्टोमादिस्थले अङ्गत्वेन गोप्तुः प्रपत्त्यनपेक्षणादुपायत्वप्रसङ्गः । न द्वितीयः, अङ्गित्वेन प्रपत्त्यनपेक्षितत्वस्य भक्तिस्थले ज्योतिष्टोमादौ च सत्त्वात्, सर्वत्र उपायत्वापत्तिः; अङ्गित्वेन प्रपत्त्यनपेक्षणात् प्रकृते तदसिद्धिश्च । द्वितीयेऽपि अङ्गत्वेन भक्तिनैरपेक्ष्यमभिमतम्, उताङ्गित्वेत तन्नैरपेक्ष्यं वा; आद्ये भक्तिस्थले ज्योतिष्टोमादिस्थले चापि गोप्तुरुपायत्वापत्तिः । उभयत्रापि भक्तेरङ्गत्वेनापेक्षाविरहात् । न द्वितीयः, विद्यान्तरनैरपेक्ष्यस्य * विकल्पोऽविशिष्टफलत्वात् * इति न्यायप्राप्तत्वेन अङ्गित्वेन भक्त्यनपेक्षत्वलक्षणस्योपायत्वस्यापूर्वत्वेन * उपायार्थैकवाचकः * इति व्युत्पादनीयत्वासिद्धः । प्रकृतोपायव्यतिरिक्तोपायान्तरनैरपेक्ष्यस्य सर्वसाधारणतया तत्रासाधारण्येन वेद्याकारत्वासिद्धेश्च । अङ्गित्वेन भक्त्यनपेक्षत्वस्य ज्योतिष्टोमादिस्थलेऽपि सत्त्वेन तत्रापि गोप्तृरुपायत्वापत्तेश्च । भक्तिनैरपेक्ष्यस्य शरणशब्दार्थत्वे, एकशब्दस्य वा सर्वधर्मादिशब्दस्य वा वैयर्थ्यापत्तेश्च । न तृतीयः । प्रकृते तदसिद्धिप्रसंगात् । यदि, व्यासज्यवृत्त्यभावाभ्युपगमेन प्रकृते तत्सिद्धिः, तदा ज्योतिष्टोमादिस्थलेऽतिव्याप्तिरव्याहता । तस्मात् सिद्धोपायव्यतिरिक्तोपायान्तरस्थाननिवेशितत्वमुपायत्वम् । न तु गोप्तृत्वगर्भम् । न वा नैरपेक्ष्यरूपत्वम । अतोऽत्र "प्रपद्ये" इत्यस्य याच्ञारूपत्वान्न भरसमर्पणत्वम् ॥

* आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते । वाचा नम इति प्रोच्य मनसा वपुषा च यत् ॥ तन्नमः पूर्णमुद्दिष्टमतोन्यन्नूनमुच्यते ॥ * अहमद्यैव मया समर्पितः * इत्यादिषु भरसमर्पणस्य याच्ञारूपत्वाभावोक्तेः शरणशब्दस्य गोप्तृत्वार्थकत्वाभावान्न गोप्तृत्ववरणसिद्धिः । किंच यद्यत्र शरणशब्दोपश्लिष्टक्रियापदेन गोप्तृत्ववरणसिद्धिः, तदा उत्तरवाक्यमनर्थकतामापद्येत । गोप्तृत्ववरणस्यैव फलप्रार्थमात्वात् ॥

न च भरसमर्पणविशिष्टगोप्तृत्वप्रार्थनायाः पूर्वमुक्तत्वात् तत्रांशभेदज्ञापनाय गोप्तृत्ववरणं विभज्य प्रदर्श्यत इति वाच्यम्; विश्वासकार्पण्यविशिष्टतया च भरसमर्पणप्रतीतेः । सर्वेषामपि विभज्य प्रदर्शनापत्तेः । अन्यथा विवेकाकाङ्क्षाया अशान्तत्वापातात् । अत एवोक्तं सारे * एवं शरणशब्दान्विते 'प्रपद्ये' इति क्रियापदे * रक्षिष्य-

नीनि विश्वासो गोप्तृत्ववरणं तथा । आत्मनिक्षेपकार्पण्ये * इत्युक्तचतुष्टयमप्युक्तं भवति * इति । किंच उपदेशवाक्ये चैवं वक्तुं शक्यते अनेन साधनानुष्ठानयोग्ये अनुष्ठानवाक्ये यथामन्त्रं तदर्थानामनुष्ठेयत्वे तात्पर्यात् गोप्तृत्ववरणस्य प्रत्येकमप्यनुष्ठेयत्वं स्यात्ः एतच्च सकृत्त्वविरुद्धम् ॥

यच्चोक्तं फलसामान्यस्य पूर्वं प्रार्थितत्वात् तद्विशेषसमर्पकमुत्तरवाक्यमिति ः तदप्यनुपपन्नम् । प्रार्थनापदवैयर्थ्यापत्तेः । न च, प्रार्थनापदं वाक्यान्वयसिद्धये केवलमध्याहृतम्, तन्निरर्थकमेवेति वाच्यम् । निरर्थकस्याकाङ्क्षाविरहेणान्वयघटकत्वानुपपत्तेः । सार्थकं तत्र वाक्यतात्पर्यं नास्तीति चेत् अस्यानुष्ठानवाक्यत्वेन एकदेशे तात्पर्याभावकल्पनायोगात् । किंच प्रयुक्तपदावैयर्थ्याय उद्देश्यांश एवास्यान्वयो वाच्यः ; तथोद्देश्योपादेयभावेन अत्र योजना दुर्घटा । फलविशेषोपस्थापकोत्तरवाक्यस्य प्रार्थनापर्यवसायिना "प्रपद्ये" इति पदेनान्वयदौर्घट्यं च । यद्युत्तरवाक्यस्य केवलं फलविशेषोपस्थापकत्वेन मन्त्रस्यैकवाक्यत्वम्, तदा श्रुतिस्मृत्यादिप्रसिद्धद्वयन्वमेव हीयेत । ततश्चोक्तयोजना बहुप्रमाणविरुद्धा ॥

ननु, समर्पणस्यानेकांशत्वात् भरसमर्पणं पूर्ववाक्ये, फलसमर्पणमुत्तरवाक्ये इति न वैयर्थ्यमिति चेत्; न, अनेकांशविशिष्टांशत्रयात्मकसमर्पणस्य एकज्ञानत्वभङ्गप्रसंगात् । आत्मसमर्पणस्यापि पृथगनुष्ठानाय वाक्यान्तरमपि प्रसज्यते । ननु, पूर्ववाक्ये समर्पणमुत्तरवाक्ये गोप्तृत्ववरणं च प्रतिपाद्यत इति चेत्; तदा न्यासस्य विशिष्टैकज्ञानात्मकत्वं भज्येत । धानुष्कानेकव्यापारविशिष्टेषुप्रयोगवत्, आनुकूल्यसंकल्पादिविशिष्टैकज्ञानत्वं हि समर्पणस्योच्यते । किंचास्मिन्पक्षे निरपेक्षरक्षकत्वमुपायत्वमित्युक्तप्रतिज्ञाहानिः । अन्यस्य दुर्वचनत्वं च । किंच "प्रपद्ये" इत्यस्य याच्ञापर्यवसानासिद्धिश्च ॥

न चेष्टापत्तिः "उपायतायाच्ञाप्रपत्तिः" इत्यादिविरोधात् । यदि पूर्ववाक्ये गोप्तृत्ववरणं, उत्तरवाक्ये भरसमर्पणं च प्रतिपाद्यते; तदा, * उपायार्थैकवाचकः * इति वचनविरोधः । यदि, एतद्रीत्या रक्षकत्वमात्रं नोपायत्वम्, निरपेक्षत्वविशेषितं तदिष्यते तर्हि उत्तरवाक्यवैयर्थ्यम् । समर्पणस्य तत्रैव सिद्धेः । एवं षडङ्गस्य द्वयप्रतिपाद्यत्वे अनेकप्रमाणोपपत्तिविरोधात् न तस्य तत्प्रतिपाद्यता ॥

न च, * अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् * इति वचनबलादुक्तास्वारस्यं सह्यमिति वाच्यम्; * गृह्णीयान्मन्त्रराजानं मां गच्छेच्छरणं नरः * इति एतत्पूर्ववाक्ये शरणागतिविधानेन तन्निष्ठानुष्ठेयफलसमर्पणे तात्पर्यादस्य वाक्यस्य ; अन्यथा भरसमर्पणस्य द्विरावृत्तिप्रसंगः । ततश्च मन्त्रस्यैकवाक्यत्वेन योजनायामिदं न घटते ; न च भिन्नवाक्यत्वेन गोप्तृत्ववरणस्य पूर्ववाक्यस्थत्वात् तदभिप्रायेणेदं वचनम् * मां गच्छेच्छरणं नरः * इति गोप्तृत्ववरणमेवोच्यत इति वाच्यम् * उपायार्थैकवाचकः * इति विरोधात् । समर्पणस्य विशिष्टैकज्ञानत्वविरोधात् । मन्त्रमात्रस्य गोप्तृत्ववरणे भरसमर्पणे च विनियोगविरोधाच्च । एकैकवाक्यस्य तदुभयमन्त्रत्वात् । ततश्च मन्त्रस्यैकवाक्यत्वे विनियोगवचनानुगुण्येन द्विरावृत्त्यापत्तिः । वाक्यद्वयत्वे मन्त्रमात्रस्य उभयत्र विनियोगानुपपत्तिरिति नेदं वचनं षडङ्गे द्वयविनियोजकम् । तर्हि षडङ्गमन्त्रः क इति चेत् ; मूलमन्त्र इति ब्रूमः । तदर्थत्वेन षडङ्गस्य मुनिभिः व्याख्यातत्वात् ॥

अहिर्बुध्न्यसंहितायां नमश्शब्दार्थत्वेन साङ्गभरसमर्पणमुक्तम् । * नमस्कारात्मकं यस्मै विधायात्म-

निवेदनम । समित्साधनकादीनां यज्ञानां न्यासमात्मनः ॥ नमसा योऽ करोद्देवे सस्वध्वार इतीरितः । न्यासिनो न्यास एव स्यान्निष्ठा तत्पूर्विकाः क्रियाः । व्यापकैर्नैष्ठिकैर्वान्यैः कुर्यात्तेऽ प्यर्पणे मताः ॥ * इत्यादिष्वपि मूलमन्त्राङ्गकत्वं सिद्धम । न्यासविशेषस्य प्रणवमन्त्रकत्वमपि क्वचिदुक्तम् । * हविर्गृहीत्वात्मरूपं वसुरण्येति मन्त्रतः । जुहुयात्प्रणवेनाग्नौ अच्युताख्ये सनातने ॥ * वेदे च * ओमित्यात्मानं युञ्जीत * इति । एवं षडङ्गस्य द्वयमन्त्रकत्वे अनेकप्रमाणोपपत्तिविरोधात्, मूलमन्त्रकत्वे प्रमाणसत्त्वाच्च न षडङ्गयोगो द्वयमन्त्रकः ।

एवं द्वयमन्त्रत्वाभावात् द्वयप्रकाश्यत्वाभावाच्च न षडङ्गयोगे पुरुषकारसंभवः । * जीवात्मानं हविः कृत्वा तच्छरीरं महीयसि । ब्रह्माग्नौ जुहुयादोमित्यनेन द्वयरूपिणा ॥ * इति वरदाचार्यवचनं कथं संगच्छत इति चेत्; स्वगतस्वीकारनिष्ठानां षडङ्गे अश्रद्धा मा भूदिति तेषामपि द्वयाधिकारित्वाभिमानसिद्धत्वात्तस्य ॥

अयमत्र संग्रहः :

षडङ्गघटकत्वं च मन्त्रबोध्यं यतस्ततः । घटकत्वं सहेतु स्यादिति चेत्तन्न युज्यते ॥
साधनान्तरसद्भावे कृपाद्यनवकाशतः । विरुद्धमुभयं भक्तिप्रपत्ती शेषशेषिणौ ॥
गौणमुख्यसमं नो चेत्सर्वत्र घटकं भवेत् । न्यासस्सर्वाघहारी स्यात् विधिना नियतश्च सः ॥
न विधिर्घटके यस्मान्न मन्त्रे न्यासबोधनम् । अतश्शरणशब्दोऽ प्युपायार्थैकवाचकः ॥
नैरपेक्ष्यमभिप्रेत्य गोप्ता नोपाय उच्यते । प्रपत्त्यपेक्षणाद्भक्तिर्नैरपेक्ष्यं यदीष्यते ॥
स्वर्गप्रदोऽ प्युपायस्स्यान्न्यासाप्तो न विधिर्यतः । एकशब्दादिवैयर्थ्यं तद्द्वेधात्वं च नो भवेत् ॥
गोप्ता शरणशब्दार्थो यदि स्याद्व्यर्थता तदा । उत्तरस्य च वाक्यस्य वरणार्पणयोर्यदि ॥
विविच्य कथनं तत्र मतं तत्तु न सिध्यति । किंचोपदेशो यद्येतत् तदैवं स्यान्न चास्ति तत् ॥
अनुष्ठानपरत्वस्य भङ्गाद्यदि तदिष्यते । तदा सकृत्त्वं भज्येत वरणार्पणयोस्तथा ॥
विशिष्य च फलस्योक्तौ प्रार्थना त्रिफला भवेत् । नातः परमनुष्ठानवाक्ये छित्वा द्वयस्य च ॥
दीर्घस्यमन्वये किंच द्वयत्वं भज्यते तदा । यदि वाक्यद्वयेप्युक्ते क्रमाद्भरफलार्पणे ॥
विश्वासादि च वक्तव्यं पृथग्वाक्यद्वये क्रमात् । वरणस्यार्पणस्यापि अनुष्ठानं यदीष्यते ॥
तदैकज्ञानताहानिरुच्येतात्मार्पणं पृथक् । भरार्पणं च वरणं क्रमात्तत्र यदिष्यते ॥
तदा विशिष्टज्ञानत्वं प्रपत्तेर्विहतं भवेत् । नैरपेक्ष्य प्रतिज्ञा च भग्ना सापेक्षता यतः ॥
वरणस्यार्पणस्यापि क्रमादुक्तिर्यदिष्यते । तदा शरणशब्दस्य उपायार्थकता हता ॥
वैयर्थ्यमुत्तरस्य स्यान्नैरपेक्ष्य विशेषणे । शरणागतिनिष्ठस्य पूर्वोक्तस्य फलार्पणे ॥
विनियोगो वृथावश्यं भवेद्भरसमर्पणे । गोप्तृत्ववरणे च प्राक् उपायार्थकता हता ॥
विशिष्टैकज्ञानता च द्विश्चस्याद्विनियोजनम् । उभयो मन्त्रमात्रत्वं स्मृतिश्चैवं न युज्यते ॥
षडङ्गो मूलमन्त्रार्थः तथा व्याख्यानतः क्वचित् । षडङ्गे प्रणवो मन्त्रः श्रुतिस्मृत्युपपत्तिभिः ॥
श्रद्धार्थं तु स्वतन्त्राणां पूर्विकैर्विनियोजनम् । उभयोः कृत्स्नमन्त्रत्वस्मृतिश्चैव न युज्यते ॥
तस्मात् द्वये षडङ्गस्य गन्धो नैव च दृश्यते । अतः पुरुषकारत्वे हेत्वभावो व्यवस्थितः ॥

इति षडङ्गे पुरुषकाराभावाधिकारः ॥७॥

॥ ८ ॥ अथ पुरुषकारत्वसमर्थनाधिकारः ॥

( पिराट्टीत्यादि )

पुरुषकारत्वस्याप्रामाणिकत्वात्तस्यैवाभावे, तन्निर्हेतुकत्वासिद्धिरिति शङ्कया संगतिः ॥

संशयस्तु, पुरुषकारनिर्हेतुकत्वं न संभवति, उत संभवतीति । तदर्थं पुरुषकारत्वे प्रमाणं नास्ति, उतास्तीति । तदर्थं श्रीरामायणं पुरुषकारत्वे प्रमाणं न भवति, उत भवतीति । तदर्थं तत्रोक्तं विश्लेषत्रयं पुरुषकारत्वगमकं न भवति, उत भवतीति । तदर्थं तद्गमकत्वे विशेषवचनान्तरसाहाय्यं नास्ति, उतास्तीति । तदर्थं विशेषवचनान्तरं कार्यदशायां ज्ञानशक्त्यादिकार्योपयोगिगुणोद्बोधनपरम्, उताश्रयणोपयोगिवात्सल्याद्युद्बोधनपरमिति ॥

यदा ज्ञानाद्युद्बोधनपरत्वम्; तदा विश्लेषत्रयस्य विशेषवचनान्तरसाहचर्यासाहाय्यासंभवात् पुरुषकारसद्भावनिर्णायकत्वं न संभवतीति प्रमाणासिद्धौ पुरुषकारत्वासिद्धेः तन्निर्हेतुकत्वासिद्धिरिति पूर्वपक्षे फलफलिभावः । यदा विशेषवचनान्तरस्याश्रयणोपयोगिसौशील्याद्युद्बोधनपरत्वम् । तदा विश्लेषत्रयस्य विशेषवचनान्तरसाहाय्यसंभवात् पुरुषकारत्वसद्भावनिर्णायकत्वं संभवतीति प्रमाणसिद्धौ पुरुषकारत्वसिद्धेः तन्निर्हेतुकत्वसिद्धिरिति सिद्धान्ते फलफलिभावः ॥

पूर्वपक्षस्तु, लक्ष्म्याः पुरुषकारत्वमसिद्धम् । प्रमाणाभावात् । न च श्रीरामायणं तत्र प्रमाणम् । * रघुवरचरितं मुनिप्रणीतं * इत्यादिवचनात् । रामायणमिति समाख्यया च भगवत्परत्वेन लक्ष्मीपरत्वाभावात् । भवतु वा तत्परत्वम् । तथाऽपि विश्लेषत्रयस्य पुरुषकारसूचकत्वे प्रमाणं नास्ति, गुणान्तरोपबृंहकत्वेनापि तदुपपत्तेः । ननु, * आकिञ्चन्यैकशरणाः केचिद्भाग्याधिकाः पुनः । मत्पदाम्भोरुहद्वन्द्वं प्रपद्य प्रीतमानसाः ॥ लक्ष्मीं पुरुषकारेण वृतवन्तो वरानने । * मत्प्राप्तिं प्रतिजन्तूनां संसारे पततामधः । लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमर्षिभिः । ममापि च मतं ह्येतन्नान्यथा लक्षणं भवेत् । * अहं मत्प्राप्त्युपायो वै साक्षाल्लक्ष्मीपतिः स्वयम् । लक्ष्मीः पुरुषकारेण वल्लभा प्राप्तियोगिनी । एतस्याश्च विशेषोऽयं निगमान्तेषु शब्द्यते । * इति पुरुषकारत्वस्यान्यत्र कण्ठोक्तत्वादुक्तविश्लेषत्रयं तदुपयोगिकृपादिगुणोपबृंहकमिति चेत्; मैवम् । फलप्रदानसमये, मातृत्वप्रयुक्तसंबन्धेनेश्वरस्य फलप्रदत्वौपयिकज्ञानशक्तिसत्यसंकल्पत्वकृतज्ञत्वादिगुणोद्बोधकत्वस्योदाहृतवचनविवक्षितत्वात् । अत एवोच्यते । * जगत्समस्तं यदपाङ्गसंश्रयम् * श्रेयो न ह्यरविन्दलोचनमनः कान्ताप्रसादादृते संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित् * इत्यादि ॥

अन्यथा, अत्र सर्वत्र समाश्रयणहेतुत्वमेव विवक्षितं चेत् । तत्तत्फलसाधनविधायकसर्वशास्त्रानर्थक्यापत्तिः । अत्र सर्वत्र तत्तत्फलोद्देशेन प्रतिपदविहिततत्तत्साधनानुष्ठानस्यैव समाश्रयणघटकतया पुरुषकारस्यावकाशाभावात् । शक्तानां प्रतिपदविहिततत्तत्साधनानुष्ठानं समाश्रयणसिद्धिहेतुः । अशक्तानां * तेन तेनाप्यते तत्तन्न्यासेनैव * इत्युक्तप्रपत्त्यनुष्ठानलक्षणगौणसाधनानुष्ठानं तत्सिद्धिहेतुः; शक्ताशक्तकोटिद्वयातिरिक्तकोट्यन्तरस्याभावादन्यत्रापि न पुरुषकारावकाशः । अतः पुरुषकारत्वपरवचनानामाश्रयणदशाया-

मनवकाशानां फलप्रदत्वदशायां तदुपयुक्तज्ञानाद्युद्भावकत्वेन तदुपयोगित्वमेव पुरुषकारत्वमिति तदभिप्रायत्वमेवोचितम् । अतः श्रृणोति, श्रावयति, श्रीयते, श्रयते इत्यादिश्रीशब्दव्युत्पत्तिसिद्धं घटकत्वमपि कार्यदशायां फलघटकत्वमेव । न तु सापराधविषयभगवत्कालुष्यस्य वात्सल्याद्युद्भावनद्वारा शामनेनाश्रयणघटकत्वम् । विद्यारंभविरोधिभगवत्कालुष्यस्यात्मज्ञानादिप्रायश्चित्तेन नाशितत्वात्, फलप्राप्तिप्रतिबन्धकतत्कालुष्यस्यानुष्ठितसाधनेन नाशितत्वाच्च । अतः फलप्रदानसमयेऽपि कालुष्यशामकत्वेन न फलघटकत्वम् । किंतु तदुपयोगिज्ञानशक्त्याद्युद्भावकत्वेन ॥

न चैवं सति वात्सल्यादेरनवकाशता उत्तराघविषयत्वात्तेषाम् । न च सत्यसंकल्पत्वादनुष्ठितसाधनाधिकारिविषये स्वत एव फलप्रदत्वौपयिकज्ञानाद्युद्बोधकत्वं संभवतीति किं घटकत्वेनेति वाच्यम् । भगवद्गुणानां स्वतस्सिद्धत्वेऽप्येतदायत्तत्वस्यापि शास्त्रसिद्धत्वात् * श्रद्धया देवो देवत्वमश्नुते * अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा * स्वतश्श्रीस्त्वं विष्णोस्त्वमसि तत एवैष भगवान् * इत्यादिकं हि श्रूयते । एवं फलघटकत्वव्यतिरेकेण वात्सल्याद्युद्बोधकत्वेन समाश्रयणघटकत्वस्याप्रामाणिकतया तन्निर्हेतुकत्वस्य सुतरामसिद्धिरिति ॥

अत्रोच्यते :

( पिराट्टियित्यादि )

अस्यायमर्थः : श्रीरामायणं पुरुषकारत्वे प्रमाणम्; न च तस्य भगवत्परत्वम् * काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् * इति सीतापरत्वावगमात् । न च, * रघुवरचरितं * इत्यादिविरोधः । अत्र कृत्स्नमिति विशेषितत्वेनान्यस्याप्रधानतया प्रतिपाद्यत्वेऽप्युपपत्तेः । सीताचरितं च रामविश्लेषरूपम् तत्संश्लेषरूपं च । तत्रापि विश्लेष एव प्रधानप्रतिपाद्यः । काव्यसंग्रहे * मा निषाद * इति श्लोके क्रौञ्चविश्लेषस्य तात्पर्यविषयत्वात् । तथात्वं च * शोकः श्लोकत्वमागतः * इत्युक्तेः । अतः सीताविश्लेषस्य प्रधानप्रतिपाद्यत्वात्; इतिहासानां वेदान्तोपबृंहणत्वनियमाच्च । विश्लेषप्रतिपादकेन श्रीरामायणेन कृपापारतन्त्र्यानन्यार्हत्वानि पुरुषकारोपयुक्तानि प्रतिपादितानीति श्रीशब्दोक्तं पुरुषकारत्वं श्रीरामायणे उपबृंहितमिति तत्र श्रृणोति, श्रावयतीति व्युत्पत्त्या * आश्रयस्वैनमच्युतम् * इत्यादि गुरुप्रभृतिवचनं श्रुत्वा तस्य भगवन्तं प्रति श्रावयितृत्वमुच्यते । * मित्रभावे न संप्राप्तं न त्यजेयं कथञ्चन * इति भगवतः श्रुत्वा * मित्रमौपयिकं कर्तुम् * इत्यादीन् चेतनं प्रति श्रावयितृत्वं वा; * आनृशंस्यं परो धर्मः * इत्यादि भगवतः श्रुत्वा * प्राणैरपि त्वया नित्यं संरक्ष्यश्शरणागतः * इति कपोतिकावत् * किमेतन्निर्दोषः क इह * न कश्चिन्नापराध्यति * कः कुप्येद्वानरोत्तम * इत्यादि श्रावयितृत्वं वा उच्यते । श्रीयते श्रयत इति व्युत्पत्त्या स्वाश्रितसंरक्षणार्थं स्ववाल्लभ्येन वशीकरणमुच्यते । * लक्ष्मीं पुरुषकारेण वृतवन्तः * लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमर्षिभिः * लक्ष्मीः पुरुषकारेण वल्लभा प्राप्तियोगिनी * इत्यादि स्मृतिश्चात्र प्रमाणम् । न चैतेषां सर्वेषां कार्यकाले फलप्रदानशक्त्याद्युद्भावकत्वेनान्यथासिद्धिः । तत्रापि उक्तप्रकारेण विशेषणानामवश्यंभावादिति वाच्यम् । अत्र * लक्ष्मीं पुरुषकारेण वृतवन्तो वरानने । मत्क्षमां प्राप्य सेनेश प्राप्यं प्रापकमेव माम् । मत्प्राप्तिं प्रतिजन्तूनां संसारे पततामधः । * आकिञ्चन्यैकशरणाः * पापानां वा * कः कुप्येत् * किमेतन्निर्दोषः

क इह * इति, भक्तिप्रपत्त्यन्यतमाधिकारित्वलक्षणोपायद्वयविरहेणात्यन्ताकिञ्चनानां अत एव संसारे पततां पापानां भगवत्कालुष्य-शामकत्वेन घटकत्वं हि प्रतीयते । इदं च प्रयोजनघटकत्वे न संभवति । तदानीं चेतनस्य सकिंचनत्वादनुष्ठित-साधनत्वेन निष्पातत्वात् । तदभावेन कालुष्यासिध्या उचितैरुपायैर्विस्मार्येति क्षामणानुपपत्तेश्च । विशेष-वचनं च श्रूयते । * स्वाचार्यं हृदये ध्यात्वा जप्त्वा गुरुपरंपराम् । ततस्संप्रार्थयेद्देवीं सर्वलोकेश्वरप्रियाम् । माता त्वं सर्वलोकानां सर्वलोकेश्वरप्रिये । आश्रयस्वेश्वरमिममपराधशतैर्युतम् ॥ इति देवीं पुरस्कृत्य पश्चाद्देवं समाश्रयेत् । * इति पराशरः । वरदाचार्यैश्चोक्तम् * अपराधैकसक्तानामनर्हाणां चिरं नृणाम् । भर्तुराश्रयणे पूर्वं स्वयं पुरुषकारताम् ॥ वात्सल्येनानुतिष्ठन्तीं वात्सल्याद्युपबृंहिणीम् । * इति एवं पुरुषकारत्व-सामान्यवचनानां समाश्रयणकण्ठोक्तिमद्विशेषवचने सामान्यविशेषन्यायेन पर्यवसानाच्च, समाश्रयणघटकत्वसिद्धिः । न च शक्ताशक्तयोर्मुख्यगौणसाधनाधिकृतत्वात् तृतीयकोट्यभावाच्च पुरुषकारानवकाशः । अष्टाङ्गयोगषडङ्ग-योगयोस्स्वयत्नरूपत्वेन स्वरूपविरुद्धत्वज्ञानवतामत्यन्ताकिञ्चनानामपराधानामालयानामन्येषामपि सत्त्वेन तद्विषये समाश्रयणघटकत्वोपपत्तेः । उक्ताधिकारिविशेषसद्भावश्चोत्तरत्र वक्ष्यते । यत्रापि * यस्या वीक्ष्य मुखं तदिङ्गित-पराधीनो विधत्तेऽखिलम् * श्रेयो न ह्यरविन्दलोचनमनः कान्ता * इत्यादिषु मुख्यगौणतत्त्त फलसाधनविषयेषु फलप्रदत्वौपयिकज्ञानशक्त्यादि उद्बोधकत्वमुच्यते । तदपि न पुरुषकारत्वम्; किंतु * लक्ष्म्या सह * इत्याद्युक्त-रक्षकत्वमात्रम् । पुरुषकारत्वं तु अत्यन्ताकिञ्चनविषये समाश्रयणघटकत्वम् । तस्मादुक्तलक्षणपुरुषकारत्वस्य प्रमाणान्तरसिद्धत्वात्' तत्साहित्येन विश्लेषत्रयपरं श्रीरामायणं पुरुषकारत्वे प्रमाणमिति तन्निर्हेतुकत्वसिद्धिरिति ॥

संग्रहस्तु;

संशायकत्वाद्विश्लेषत्रयस्य वचनस्य च । अन्यत्र सावकाशत्वाद्घटकत्वममानकम् ॥
इति चेत्तन्न वचने विशेषप्रतिपत्तितः । तच्च रामायणं चापि घटकत्वस्य साधकम् ॥

इति पुरुषकारत्वसमर्थनाधिकारः ॥ ८ ॥

॥ ९ ॥ अथ देव्या उपायत्वशोधनाधिकारः ॥

## संश्लेषविश्लेषंगळिरण्डिलुम् पुरुषकारत्वं तात्तुम्

पुरुषकारत्वपरवचनानामष्टाङ्गषडङ्गयोगाभावरूपात्यन्ताकिञ्चनविषयत्वं समर्थितम् । लक्ष्म्या उपायत्वपर-वचनानामपि तद्विषयत्वं समर्थ्यत इति सङ्गतिः ॥

संशयस्तु; पुरुषकारनिर्हेतुकत्वं न संभवति, उत संभवतीति । तदर्थं पुरुषकारत्वं नास्ति, उतास्तीति । तदर्थं पुरुषकारत्वपरवचनानां तदुपायत्वपरवचनैर्विरोधोऽस्ति, उत नास्तीति । तदर्थमुपायत्वपरवचनानि भगवत्तुल्योपायत्वपराणि, उत भक्तितुल्योपायत्वपराणि इति । यदा भगवत्तुल्योपायत्वपराणि; तदा तद्वचनानि पुरुषकारत्ववचनविरुद्धानीति तद्विरोधेन पुरुषकारत्वासिध्या तन्निर्हेतुकत्वासिद्धिरिति पूर्वपक्षे फलफलिभावः । यदा, उपायत्ववचनानि भक्तितुल्योपायत्वपराणि; तदा, तेषां पुरुषकारवचनविरोधाभावात्तत्सिध्या तन्निर्हेतुकत्व-सिद्धिरिति सिद्धान्ते फलफलिभावः ॥

पूर्वपक्षस्तु, श्रीरामायणभगवच्छास्त्रादिवचनैः पुरुषकारत्वसिद्धिरिति यदुक्तम्, तन्नोपपद्यते; लक्ष्म्या उपायत्वस्यानेकप्रमाणसिद्धतया तद्विरोधेन पुरुषकारत्ववचनानामतत्परत्वात् । तथा हि; श्रीशब्दे * शॄ हिंसायां * * श्रृ विस्तारे * इति व्युत्पत्तिद्वयेन * शृणाति निखिलान्दोषान् श्रृणाति च गुणैर्जगत् । * इत्युपबृंहणोपबृंहितेन अनिष्टनिवर्तकत्वमिष्टप्रापणं च प्रतिपादितम् । एतदेव ह्युपायत्वं नाम । स्मृतिश्च * अलमेषा परित्रातुं राक्षस्यो महतो भयात् * अलमेषा परित्रातुं राघवाद्राक्षसीगणम् * आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी * संसारार्णवतारिणी * वाचः परं प्रार्थयिता प्रपद्येन्नियतः श्रियम् * यामालम्ब्य सुखेनेमं दुस्तरं त्रिगुणोदधिम् । निस्तरन्त्यचिरेणैव व्यक्तध्यानपरायणाः ॥ * इति । न चानन्योपायत्वविरोधः; लक्ष्म्या उपायत्वेप्यनन्योपेयत्वविरोधाभाववदुपपत्तेः । न च * मामेकं शरणं व्रज * इत्येकत्वावधारणविरोधः । गुणविग्रहवैशिष्ट्येऽपि तदैक्यवत् नित्यसंश्लिष्टविशेषलक्ष्मीकत्वेऽपि तदुपपत्तेः । यागादिषु पतिप्राधान्येनैकत्वव्यवहारवत् विशेष्यप्राधान्येन तदुपपत्तेश्च । न चेदमुपायत्वं फलप्रदत्वदशायां तदुपयोगिज्ञानाद्युद्बोधकत्वमात्रम् । * आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपतेः पदे * स्वाम्युपाय उपेयश्च स्वरूपादिसमर्पणे । प्रथितः प्रतिसंबन्धी श्रीमान् निगमचक्षुषा ॥ * * उभयाधिष्ठानं चैकं शेषित्वम् * इति । आत्महविः प्रतिसंबन्धित्वमाग्नावैष्णवादिष्विवात्र शेषित्वं मिथुनस्येति प्रसिद्धम् । * आत्मेति तूपगच्छन्ति * स्वाभाविकोऽस्य संबन्धः पुंसो यः परमात्मना । तस्यैव बोधो न्यासाख्यः प्रथमं यात्युपायताम् ॥ * इत्यादिषु सामान्यतो मोक्षसाधनज्ञानमात्रस्य शेषत्वानुसंधानरूपत्वम्, न्यासस्य च विशेषतः तथात्वं चावगतम्; ततः प्रपत्तेः शेषत्वानुसंधानरूपत्वात्, शेषत्वस्य मिथुनप्रतियोगिकत्वाच्च, मिथुनस्याभिगम्यत्वेनात्महविः प्रतिसंबन्धित्वम् । तत्स्वीकर्तृत्वं तत्फलभूतेष्टप्रापकत्वमनिष्टनिवर्तकत्वं च भगवतस्तुल्यमेवाभ्युपगन्तव्यम् । एवं लक्ष्म्याः भगवत्तुल्योपायत्वस्य विशेषप्रमाणसिद्धतया भरस्वीकाररक्षासंकल्पाश्रयत्वं वक्तव्यम् । संकल्पश्च, * क्षमिष्यामि क्षान्तम् * इत्येवं रूपः । स च पूर्वं लक्ष्म्याः कालुष्यं विना न संभवतीति ईश्वरवदेव कालुष्यं तावत्सिद्धम् । अत एव * स्वस्ति श्रीर्दिशतादशेषजगतां सर्गोपसर्गस्थितीस्स्वर्गं दुर्गतिमापवर्गिकपदं सर्वं च कुर्वन् हरिः । यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलम् * इत्यत्र दुर्गतिप्रदानेऽपि लक्ष्म्याः कर्तृत्वं श्रूयते । ततश्चानाद्याज्ञातिलङ्घनेन क्रुद्धायाः भरसमर्पणपूर्वभाविसमाश्रयणघटकत्वं न सिध्यति । अन्यथाऽन्योन्याश्रयात् । प्रथमं भरसमर्पणेन कालुष्यनिवृत्तिः । तन्निवृत्तौ घटकत्वस्य सिद्ध्या भरसमर्पणसिद्धिरिति । अतः लक्ष्म्याः स्वयं कलुषतया विमुखेश्वरवशीकरणम्, विमुखचेतनवशीकरणं चासंगतमिति घटकत्वमनुपपन्नम् । अतः उपायत्ववचनैः पुरुषकारवचनानां बाधात् न तन्निर्हेतुकत्वसिद्धिः । न च पुरुषकारवचनैरेवोपायत्ववचनानां बाधः किं न स्यादिति वाच्यम् । सावकाशनिरवकाशयोः "निरवकाशं बलीयः" इत्युपायत्ववचनानां निरवकाशत्वात्; पुरुषकारत्ववचनानां समाश्रयणोत्तरकालीनफलप्रदानसमये तदपेक्षितगुणोद्बोधकत्वविवक्षया सावकाशत्वात् । समाश्रयणघटक[illegible]द्विशेष[illegible]नस्य भूयसां न्यायेन बाधितत्वसंभवाच्च । तस्मात्पुरुषकारत्वस्य तदुपायत्ववचनबाधिततया तन्निर्हेतुकत्वासिद्धिरिति ॥

अत्रोच्यते :

(संश्लेषविश्लेषङ्गळिरण्डिलुम् पुरुषकारत्वं तोत्तुम्)

संश्लेषविश्लेषयोरुभयोरपि पुरुषकारत्वस्यैव सिद्धेः, दशान्तराभावाच्च, पुरुषकारत्वमेव देव्यास्स्वरूपम्,

नोपायत्वमित्यर्थः । अयं भावः; यद्यप्युपायत्ववचनानां भगवत्तुल्योपायत्वपरत्वे पुरुषकारत्ववचनानां विरोधोऽस्ति : तथाऽपि भगवत्तुल्योपायत्वं तद्वचनेषु न विवक्षितम् । किंतु, साध्योपायतुल्योपायत्वम् : साध्योपायरहितस्थले अत्यन्ताकिञ्चनविषये लक्ष्म्याः स्थितत्वमेव तस्या उपायत्वम् । इदं चोपायत्वं नोपासकविषयम्, उपासनस्यैव तत्स्थानप्रवृत्तेः । नापि न्यासविषयम्, न्यासस्य तथात्वात्; यथा भगवतस्सिद्धोपायत्वं साध्योपायद्वयरहितविषयम्, तथा लक्ष्म्या अप्युदाहृतप्रमाणसिद्धमुपायत्वमपि तदुभयरहितविषयम् । भगवदुपायत्वं चेतनबुद्ध्या साध्योपायस्थाने निवेशितत्वम् । लक्ष्म्यास्तथात्वं स्वयमेव तत्स्थाननिविष्टत्वमिति वैषम्यम् । ततश्च भगवदुपायत्वं विद्यावेद्याकारः । न तथा श्रिय उपायत्वमित्युक्तं भवति । एवं चोपायान्तरस्थाननिविष्टत्वमुपायत्वम्, अन्यस्य दुर्वचत्वात् ॥

न चोभयोरपि तत्स्थाननिविष्टत्वे प्रयोजनाभावः, लक्ष्म्याः भक्तिवदुपायान्तरस्थाने स्थित्वा, फलप्रदत्वौपयिकप्रसादजनकत्वात् । न चैवं सति भगवदुपायत्वासिद्धिः । अन्यत्रेव फलप्रदत्वमात्रं स्यादिति वाच्यम्; भगवदुपायत्वस्य साध्योपायान्तरनिरपेक्षत्वेऽपि उपायभावे पुरुषकारसंबन्धसापेक्षताऽवश्यं वर्तते, तत्संबन्धस्याचार्यसंबन्धत्वात् । आचार्यसंबन्धः पुरुषकारसंबन्धश्च नार्थान्तरम् । किं त्वेकमेव । अतः कार्यदशायां भगवत उपायकृत्ये स्वत एव प्रवृत्तत्वेऽपि पुरुषकारभूतलक्ष्मीसंबन्धप्रतिसन्धानं प्रवृत्त्यौत्कट्यजनकत्वेनोत्तम्भकं भवति । यथा, परिणतभक्तिं दृष्ट्वा प्रसन्नो भवति भगवान्; तथा पूर्वं पुरुषकारभूतलक्ष्मीमवलोक्य प्रीतः तन्मुखोल्लाससिध्यर्थं तदाश्रितानां कार्यं करोति । तदेवोच्यते * सोऽपि देव्या दासस्त्वेति वरदास्मि तवेक्षणीयः * इति । * गुरुरेव परं ब्रह्म गुरुरेव परा गतिः * इत्यादिषूक्तं गुरूपायत्वं उदाहृतवचनेषूक्तं पुरुषकारोपायत्वं चाभिन्नम्; एवं उपायत्वपरवचनानां भक्त्यादितुल्योपायत्वपरत्वात्, ईश्वरतुल्योपायत्वतात्पर्याभावाच्च, पुरुषकारत्वविरोधाभावात् पूर्वाधिकारस्थापितं पुरुषकारत्वं सुस्थितम् ॥

न च * आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपतेः पदे * इत्यादिप्रमाणैः श्रियोऽपि भरसमर्पणप्रतिसंबन्धित्वम्, भरस्वीकर्तृत्वम्, विष्णोरिव फलप्रदत्वं च अवगतमित्युपायत्वसामान्यवचनानामुक्तविशेषपर्यवसानं युक्तमिति वाच्यम् * उपाये गृहरक्षित्रोः * इति रक्षकत्वोपायत्वयोः परस्परमर्थान्तरत्वेन सामान्यविशेषभावापन्नत्वाभावात्, रक्षकत्वं फलप्रदत्वम्, प्रतिपद्विहितोपायस्थाननिविष्टत्वमुपायत्वमिति तयोरत्यन्तभेदात् । तत्रापि देव्या रक्षकत्वमपि न भगवत्तुल्यरक्षकत्वं प्रतिपाद्यते । तथात्वे मातृत्वप्रयुक्तसहजवात्सल्यादीनां पत्नीत्वप्रयुक्तपारतन्त्र्यादीनां च गुणानां नाशापत्तेः । अत एवोच्यते * ......युवत्वादौ तुल्येऽपि * इत्यादि । अतः तत्रापि रक्षकत्वं न पतितुल्यम् । अन्यत्र देवतयोः स्वतन्त्रत्वेन स्वतन्त्ररक्षणेऽपि अत्र विशेषणत्वेन हविरुद्देश्यत्वाद्विशेष्यतुल्यरक्षकत्वमनुपपन्नम् । किंतु विशेषणत्वानुगुणं तद्रक्षणोपयुक्तं तद्गुणोद्बोधकत्वम् । शेषशेषिणोः शेषशेषीभाववत् तत्कृत्योरपि शेषशेषीभावस्योचितत्वात् । यच्च, दुर्गतिप्रदानेऽपि लक्ष्म्याः प्रयोजयितृत्वमुक्तम्; तन्न; तत्र लक्ष्म्यास्स्वपारतन्त्र्यानुगुण्येनानुमन्तृत्वस्योक्तत्वात् । अतः कदाचिदपि लक्ष्म्याः कालुष्यगन्धाभावात् तदुपायत्वं न भगवत्तुल्यफलप्रदत्वम् । न वा भगवत्तुल्योपायत्वमिति तदुपायत्वपरवचनानां न समाश्रयणघटकत्वविरोधित्वमिति ॥

संग्रहः :

उपायत्वश्रुतेर्लक्ष्म्यास्तस्य कालुष्यभाविनः । तत्सूचकत्वात्कालुष्ये घटकत्वं न सिध्यति ॥
इति चेन्नात्र कथितमुपायत्वं हरेस्समम् । साध्योपायसमं तत्तु गुरूपायत्वमेव च ॥
संबन्धं वीक्ष्य देव्या नो यतो रक्षति माधवः । तस्मात्तदप्रतिभटे घटकत्वे न हि क्षतिः ॥

इति देव्या उपायत्वशोधनाधिकारः ॥९॥

॥१०॥ अथ लक्ष्म्या गौणोपायत्वनिषेधाधिकारः ॥

## संश्लेषदशैयिलीश्वरनैत्तिरुत्तुम्

मास्तु भगवत्तुल्योपायत्वं लक्ष्म्याः, स्वपारतन्त्र्यानुगुणं विग्रहगुणसदृशमुपायत्वं तु स्यादिति शङ्कया सङ्गतिः ॥

संशयस्तु, लक्ष्मीघटकत्वस्य निर्हेतुकत्वसिद्धिर्नास्ति, उतास्तीति । तदर्थं, लक्ष्म्याः भगवद्गुणादिसदृशमुपायत्वमस्ति, उत नास्तीति । तदर्थं मन्त्रे लक्ष्म्याः विशेषणत्वम्, उतोपलक्षणत्वमिति । तदर्थं विशेषणत्वे बाधकं नास्ति, उतास्तीति । यदा विशेषणत्वे बाधकं नास्ति; तदा लक्ष्म्याः गुणान्तरवत् विशेषणत्वात्, तत्सदृशमुपायत्वमस्तीति, तदुपायत्ववत् घटकत्वस्यापि सहेतुकत्वमिति पूर्वपक्षे फलफलिभावः । यदा लक्ष्म्याः विशेषणत्वे बाधकमस्ति; तदा तस्याः विशेषणत्वासिद्धेः भगवद्गुणादितुल्यमुपायत्वं नास्तीति तद्दृष्टान्तेन पुरुषकारत्वनिर्हेतुकत्वभङ्गायोगात्, तन्निर्हेतुकत्वसिद्धिरिति राद्धान्ते फलफलिभावः ॥

पूर्वपक्षस्तु, मन्त्रे मतुप्प्रत्ययेन भगवतः लक्ष्मीवैशिष्ट्यं प्रतिपाद्य, तद्विशिष्टस्य * शरणम् * इत्युपायत्वं प्रतिपाद्यते । न च, अत्र लक्ष्म्या उद्भावितगुणविशिष्टस्यैवोपायत्वात् लक्ष्म्या उपलक्षणत्वमात्रमिति वाच्यम् । उत्तरवाक्येऽपि तस्या उपलक्षणत्वप्रसंगेनोपेयत्वाभावप्रसंगात् । न चेष्टापत्तिः; अपसिद्धान्तात् । यदि मिथुनशेषित्वस्य प्रमाणसिद्धत्वात्, उत्तरवाक्ये श्रियो विशेषणत्वस्य स्वतः प्राप्तस्य बाधकाभावाच्च नोपलक्षणत्वम्, तर्हि तदुपायत्वस्यापि प्रमाणसिद्धत्वात्, तथात्वे बाधकाभावाच्चोपायत्वमपि मिथुननिष्ठम्; अन्यथा, पूर्वोत्तरवाक्ययोः वैरूप्यापत्तिः । न च, पूर्वाधिकारे उपायत्ववचनानां भक्तितुल्योपायत्वपरत्वं स्थापितमिति वाच्यम् । अत्र शरणशब्देन भगवत्तुल्योपायत्वस्योक्तत्वेन तेषामस्मिन्विशेषे पर्यवसानात् । न च, तत्तुल्योपायत्वे मातृत्वप्रयुक्तक्षमावात्सल्यादीनां पत्नीत्वप्रयुक्तपारतन्त्र्यादीनामप्यभावप्रसंग इति वाच्यम् । * मोक्षयिष्यामि * इति भरस्वीकारस्येश्वरनिग्रहरूप * सर्वपापेभ्यो मोक्षयिष्यामि * इत्येवं रूपत्वात् । विधूननश्रुत्यर्थस्य रक्षासंकल्पस्य "भगवन्! तव निग्रहाश्शान्ता भवन्तु" इत्येवं रूपत्वाच्च । स्वीकाररक्षासंकल्पयोः — "क्षमिष्यामि" "क्षान्तम्" इत्येवं रूपत्वे हि विरोधः । ततश्च भरसमर्पणोद्देश्यत्वस्य मातृत्वपत्नीत्वाद्यनुगुणभरस्वीकाररक्षासंकल्पयोश्च संभवेन, पारतन्त्र्यात् गुणादितुल्यम्, स्वीकारसङ्कल्पाश्रयत्वादीश्वरतुल्यं चोपायत्वं सिध्यत्येव ॥

न च भगवदुपायत्वस्य लक्ष्म्युपायत्वसापेक्षत्वे निरपेक्षत्वभङ्ग इति वाच्यम् । पुरुषकारसापेक्षत्वेऽपि तत्साम्यात् । यदि स्वाङ्गसापेक्षत्वम्, न स्वातन्त्र्यभञ्जकम्, तदत्रापि तुल्यम्; अत एवोक्तम् * स्वतः

श्रीस्त्वम् * इति श्लोके ; अन्यथा * अस्या देव्या मनस्तस्मिन् तस्य चास्यां प्रतिष्ठितम् । तेनेमं स च धर्मात्मा मुहूर्तमपि जीवति ॥ * इत्याद्यनेकप्रमाणविरोधः । * व्यापकावतिसंश्लेषादेकतत्त्वमिवोदितौ * गाढोपगूढानि ते * इत्यादिनोक्तसुश्लिष्टविशिष्टतत्त्वरूपत्वविरोधः । उपलक्षणत्वेन पृथग्भावे निरूपकत्वभङ्गेन * तेनाकारं श्रियं ज्ञात्वा ज्ञातव्यो भगवान् हरिः * इत्यादिविरोधश्च । लक्ष्म्या उपलक्षणत्वे गुणादीनामपि तथात्वापत्तिः । तेषामुपयोग-सत्त्वात् । विशेषणत्वे तत्तद्वस्त्वनुरूपो ह्युपयोगो वाच्यः । लक्ष्मीस्वरूपोपयोगश्च, * शृणाति निखिलान् दोषान् श्रृणाति च गुणैर्जगत् * इति दर्शितः । अत एव * जगज्जन्मस्थितिर्ध्वंसमहानन्दैकहेतवे * इत्यादिषु प्रतिपन्नमोक्षप्रदत्वस्य भङ्ग ... लक्षणत्वभङ्गाभावश्च । भगवत्सङ्कल्पस्य "क्षान्तम" इति रूपत्वात् । एत त्सङ्कल्पस्य "क्षमस्व" इति रूपत्वाच्च । तस्मादेकशेषित्वैकाभिप्रायत्वपरस्परप्रावण्यातिशयस्वरूपादिसुश्लिष्टत्वाद्यविरोधेन विशेषणत्वमेव पूर्ववाक्येऽपि वक्तव्यमिति लक्ष्म्या उपायत्वसिद्धिः । एवं च, उपायभावस्य भर-समर्पणपूर्वकत्वेन सापेक्षत्वात् पुरुषकारभावोऽपि सापेक्षः । एकाधिकारिणं प्रत्येकत्र निरपेक्षत्वम्, अन्यत्र सापेक्षत्वं च विरुद्धम् । श्रियो निरपेक्षत्वं स्वरूपं चेत् सर्वत्र तथात्वमेव । सापेक्षत्वं चेत् तदेव सर्वत्र वाच्यम् । वस्तुनो द्वैरूप्यासंभवात् ; तस्मात् तदुपायभावस्य सापेक्षत्वात् पुरुषकारभावोऽपि सापेक्ष इति । तन्निर्हेतुकत्वासिद्धिरिति । अत एवोक्तं सारे * भरस्वीकाररहितं रक्षासङ्कल्पवर्जितम् । गुणादिकमिहेष्टं हि शरण्यस्य विशेषणम् ॥ ऐकरस्यजुषोरशेषिदम्पत्योरशेषकर्मसु । विशेषणविशेष्यत्वं श्रुतं कस्मान्न रोचते ॥ प्रतर्दनादिविद्यासु वेद्येऽपि परमात्मनि । अचेतनवदिच्छामश्चेतनश्च विशेषणम् ॥ इत्थं प्रपत्तिविद्यायां तत्तन्मन्त्रानु-सारतः । विभुः पत्न्या गुणाद्यैश्च विशिष्टो विषयोऽत्र नः ॥ स्वाम्युपाय उपेयश्च स्वरूपादिसमर्पणे । प्रथितः प्रति-संबन्धी श्रीमान्निगमचक्षुषा ॥ * इति ॥

अत्रोच्यते ;

(संश्लेषदशैथिल्यीश्वरनैत्तिरत्नम)

संश्लेषप्रतिपादको मतुप्प्रत्ययः । पुरुषकारत्वविशिष्टश्रीसंबन्धप्रतिपादकः न तूपायत्वविशिष्टश्रीसंबन्ध-प्रतिपादक इत्यर्थः ॥

अयं भावः : नात्र शरणशब्देन विशेष्य इव विशेषणेऽप्युपायत्वसंबन्धो बोध्यते । तस्य शृणाति श्रृणा-तीति व्युत्पत्त्या श्रीशब्द एव बोधितत्वात् । न हि, प्राप्तेऽर्थे पुनर्विधानसम्भवः । न च श्रीशब्दस्य रूढ्या लक्ष्म्युपस्थापकत्वमात्रम् अवयवार्थे (र्थो) न विवक्षितं इति वाच्यम् । * शृणाति निखिलान्दोषान् * इत्यादिना श्रीशब्दस्यावयवार्थव्युत्पादकशास्त्रवैयर्थ्यात् । तथा वेद्यत्वाय खलु शास्त्रमवयवार्थव्युत्पत्तिं करोति । न च, तदेवात्र शरणशब्देनानूद्यत इति वाच्यम् । यतः एकेनैव शब्देन विशेष्यांशे विधायकत्वम्, विशेषणांशेऽनु-वादकत्वं चाशक्यम् । अनुवादप्रयोजनं च न पश्यामः । न चैवं तेनैवास्मदभिमतसिद्धिश्चेदिष्टापत्तिरिति वाच्यम् । शृणातीत्यादिव्युत्पत्त्यवगतोपायत्वं किं सद्वारकमुताद्वारकमित्याकाङ्क्षायां तत्रैव श्रीयते, श्रयते, शृणोति श्रावयतीति व्युत्पत्तिचतुष्टयेन पुरुषकारत्वप्रतीत्या तत्प्रतीतानुपायत्वमर्थसामर्थ्यलिङ्गेन सद्वारकमवगतम् । ततश्च शरणत्वं सद्वारकं रक्षकत्वं चेत् भवदभिमतम् तदोमितिब्रूमः ॥

ननु, सद्वारकरक्षकत्वस्य तत्र प्रतिपादनेऽप्यत्र शरणशब्देनाद्वारकरक्षकत्वं प्रतिपाद्यत इति चेत्; अत्र किं रक्षकत्वं विधीयत इत्युच्यते: उत रक्षकत्वस्याद्वारकत्वम्; आहोस्वित् विशिष्टम् । नाद्यः, श्रीशब्द एव तद्विधेः । न द्वितीयः, अद्वारकशब्दाभावात् । शरणशब्दस्य विशेष्ये अद्वारकरक्षकत्वविधायकत्वम्, विशेषणे अद्वारकत्वमात्रविधायकत्वं चेति विरम्य व्यापारापत्तेः । सद्वारकत्वस्य श्रीशब्दावगतत्वेन, तद्विरोधेनात्राद्वारकत्वविधानानुपपत्तेश्च । सद्वारकत्वस्योपक्रमावगततया प्राबल्यात् । उक्तदोषादेव न तृतीयोऽपि । किं च लक्ष्म्यास्सद्वारकोपायत्वमद्वारकोपायत्वं च विरुद्धम् । पूर्वमेव द्वारेणान्यथासिद्धत्वाच्च । न ह्येककार्ये प्रत्येकस्यान्यथासिद्धत्वम् अनन्यथासिद्धत्वं च संभवति । व्रीहिद्वारा शेषभूतस्य प्रोक्षणस्य व्रीहितुल्यं यागशेषत्वं हि न संभवति । एवं, श्रीशब्दे पुरुषकाररक्षकत्वस्यावगतत्वात् अप्राप्तं ब्रह्मोपायत्वमेव शरणशब्दो बोधयति । एवं पुरुषकारत्वसद्वारकरक्षकत्वविशिष्टलक्ष्मीवैशिष्ट्यं प्रत्ययेन बोध्यत इति विद्यायां तद्वेद्यत्वसंभवः । अतः न * आकारिणस्तु विज्ञानम् * इत्यादिविरोधः । किंच नीलमुत्पलमितिवदत्र लक्ष्मीसामानाधिकरण्यमुपायत्वस्य शरणशब्देन बोध्यत इति शाखादिवन्न तस्याः बहिर्भावसिद्धिः । बहिर्भूतस्यैवोपलक्षणत्वे जगज्जन्मादेः ब्रह्मलक्षणत्वाभावप्रसंगः । ततश्च सुश्लिष्टैकत्वस्यापि न विरोधः । किं चात्र गुणविग्रहसामानाधिकरण्यमात्रमुपायत्वस्य बोध्यम् । न हि दण्डी गच्छतीत्यत्र गमनक्रियायाः विशेषणविशेष्योभयान्वयवत् शरणशब्दार्थोपायत्वस्य विशेषणेऽप्यन्वयः; उपायत्वस्य चेतनधर्मस्य अचेतनेऽवस्थानायोगात् । उत्तरवाक्ये तु प्राप्यत्वस्य विशेषणेऽप्यन्वयस्संभवति, तस्य चेतनाचेतनसाधारण्यात् । एवम्, लक्ष्मीसामानाधिकरण्यमात्रमुपायत्वस्य बोध्यम् । ततो विधेयांशे च; गुणादिवत् विशेषणत्वेनापि विषयत्वेऽपि न कमपि विरोधं पश्यामः । नाप्युपायत्वाभावे; मोक्षप्रदत्वकर्मणि ऐकरस्यहानिः । पुरुषकारत्वेन तत्रान्वितत्वात् । अन्यथा जगत्कारणत्वादौ गत्यभावप्रसंगात् ॥

किंच, अश्लेषविनाशयोः ईश्वरविषये "क्षमिष्यामि" इत्येवं रूपार्थकत्वम्, लक्ष्मीविषये "क्षमायुक्तं करोमि" इत्यर्थकत्वं च वाच्यम्; तन्न संभवति । विरम्य व्यापारप्रसंगात् । एवं विधूननश्रुतेरपि "क्षान्तम्, क्षमस्व" इत्येवं रूपार्थद्वयबोधकत्वम्, विरम्यव्यापारं विना न संभवति । अतः, भरस्वीकाररक्षासंकल्पायोगात् न भगवत्पारतन्त्र्यानुगुणोपायत्वसिद्धिः ॥

न च, विद्यामात्रस्य * आत्मेति तूपगच्छन्ति * इति शेषत्वज्ञानरूपत्वात् शेषत्वप्रतिसंबन्धित्वं च मिथुनस्येति लक्ष्म्याः भरसमर्पणप्रतिसंबन्धित्वे सिद्धे, तत्स्वीकाररक्षासंकल्पावश्यागताविति वाच्यम्; शरणागतिविद्यायां तादर्थ्यवाचकशब्दाभावेन केवलं भरस्वीकारप्रार्थनेन शेषत्वानुसंधानाभावात् । पञ्चाङ्गभरसमर्पणं नात्र प्रतिपाद्यमिति हि द्वितीयाधिकारे उक्तम् । सिद्धान्ते लक्ष्म्याः भक्तितुल्योपायत्वाङ्गीकारे न तस्य शरणशब्दार्थत्वेन वेद्याकारत्वम्; किं तु पुरुषकारत्वस्यैव । श्रीशब्देन शृणोति इत्यादिव्युत्पत्तिबोध्यत्वेन तत्रैव वेद्यत्वात् । ततश्च पुरुषकारद्वारकमुपायत्वं श्रीशब्दवेद्यमित्युक्तं भवति । एवम्, लक्ष्म्याः पुरुषकारत्वव्यतिरेकेणोपायत्वस्याभावात् तत्त्वेनोपायत्वस्य भरस्वीकारप्रार्थनापूर्वभावित्वाच्च, उपायत्वदृष्टान्तेन न पुरुषकारत्वस्य सापेक्षत्वमिति निर्हेतुकत्वसिद्धिरिति ॥

संग्रहः :

मन्त्रे (शरण) शब्दो हि विशिष्टोपायबोधकः । तस्माद्गुणादिवल्लक्ष्म्या उपायत्वं च सिध्यति ॥

इति चेत्तन्न (शरण) शब्देनोपायतोच्यते । सा हि लक्ष्म्याः प्राथमिके पदे प्राप्ता यतो भवेत् ॥
रूढिर्न शब्दव्युत्पत्तिशास्त्रं विफलमापतेत् । साऽपि सद्वारका प्रोक्ता श्रीयतेत्यादिशक्तिनः ॥
अद्वारका सा शरणशब्दे प्राप्तेति चेन्न तत् । विशिष्टस्य विधौ यद्वा द्वारकत्वविधावपि ॥
उपक्रमविरोधश्च व्यापारविरमो यतः । अतः (शरण) शब्देन विशेष्योपायतोच्यते ॥
घटकत्वकृतोपायभावाल्लक्ष्मीविशेषणम् । शरणत्वस्य लक्ष्म्यादिसमानाश्रयता यतः ॥
सामानाधिकरण्यार्थो वेद्या साऽपि भवेत्ततः । अश्लेषनाशश्रुत्यर्थरक्षासंकल्पयोर्यतः ॥
वैरूप्यं नात्र शरणं लक्ष्मीः प्रोक्तानपायिनी । इति ॥

इति लक्ष्म्याः गौणोपायत्वनिषेधाधिकारः ॥ १० ॥

## ॥ ११ ॥ अथ लक्ष्मीविभुत्वभङ्गाधिकारः ॥

### विश्लेषदशैयिल् चेतननैत्तिरुत्तुम्

मा भूत् वेदशास्त्रे लक्ष्म्या उपायत्वसिद्धिः ; भगवच्छास्त्रे तु तत् स्यात्, इति शङ्कया सङ्गतिः ॥

संशयस्तु ; पुरुषकारे निर्हेतुकत्वं नास्ति ? उतास्तीति । तदर्थं, लक्ष्म्या उपायत्वमस्ति ? उत नास्तीति । तदर्थम्' संसारो लक्ष्मीनिग्रहफलम्, उत नेति । तदर्थम्, लक्ष्म्याः अन्तः प्रविश्य नियमनमस्ति, उत नास्तीति । तदर्थम, तत्स्वरूपं विभु, उत नेति ।तदर्थम्, लक्ष्म्या ईश्वरतत्त्वान्तर्भावपराणि भगवच्छास्त्रवचनानि श्रुतिबाध्यानि न भवन्ति ? उत भवन्तीति । तदर्थम्, तेषां वैभवपरत्वं न संभवति, उत संभवतीति । तदर्थं वैभवपरत्वे निदानं नास्ति उतास्तीति । यदा नास्ति तदा वैभवपरत्वाभावेन निरवकाशतया श्रुतिबाधायोगात् लक्ष्म्याः ईश्वरतत्त्वत्वेन विभुत्वात् अन्तर्नियन्तृत्वेन संसारस्य तन्निग्रहरूपत्वादुपायत्वसंभवेन तद्वदेव तत्पुरुषकारभावोऽपि सहेतुकः । यदा वचनानां वैभववादत्वे निदानमस्ति ; तदा भगवच्छास्त्रस्य वैभववादत्वेन श्रुतिबाध्यत्वात् लक्ष्म्याः ईश्वरतत्त्वत्वाभावेन विभुत्वासिध्या, अन्तर्नियमनाभावेन संसारस्य तन्निग्रहफलत्वाभावादुपायत्वासिद्धिरिति, न तद्दृष्टान्तेन पुरुषकारत्वसहेतुकतासिद्धिरिति । पूर्वोत्तरपक्षयोः फलफलिभावः ॥

पूर्वपक्षस्तु ; मा भूत् वेदशास्त्रे लक्ष्म्या उपायत्वसिद्धिः । भगवच्छास्त्रेषु तत्सिद्धिरव्याहता । चरमश्लोकादाविव भगवतः स्वातन्त्र्येण लक्ष्म्या अपि मोक्षार्थं तत्समाश्रयणं हि विहितम् । * मामेकां देवदेवस्य महिषीं शरणं व्रजेत् । सर्वकामप्रदां रम्यां संसारार्णवतारिणीम् ॥ * इत्यादिना ; न च, संसारस्य लक्ष्मीनिग्रहरूपत्वाभावात् तदुपायत्वासंभवः । तत्स्वरूपस्य विभुत्वेन सर्वनियन्तृत्वात् । तथा च वचनानि । * अनन्तनामधेया च शक्तिचक्रस्य नायिका । जगच्चराचरमिदं विश्वं व्याप्य व्यवस्थिता ॥ त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम् । * लक्ष्म्या समस्तं चिदचित्स्वरूपं व्याप्तं तदीशस्य तु सापि सर्वम् । * न च ज्ञानव्याप्त्यान्यथासिद्धिराशङ्कनीया * तथा लक्ष्म्याः स्वरूपं च शृणु वक्ष्ये समासतः । गुणतश्च स्वरूपेण व्याप्तिस्साधारणी मता ॥ ' यथा मया जगद्व्याप्तं स्वरूपेण स्वभावतः । तया व्याप्तमिदं सर्वं नियन्त्री च तथेश्वरी ॥ मया व्याप्ता तथा साऽपि तया व्याप्तोहमीश्वरः । मम तस्याश्च सेनेश ! वैलक्षण्यमिदं शृणु ॥ मच्छेषभूता सर्वेषामीश्वरी वल्लभा मम । तस्याश्च

जगतश्चाहमीश्वरो वेदविश्रुतः ॥ तस्या ममापि शेषं हि विभूतिरुभयात्मिका । इति श्रुतिशिरसि सिद्धं मच्छास्त्रेष्वपि मानद ॥ तथा भूमिश्च नीला च शेषभूते मते मम । यथात्मनां तु सर्वेषां ज्ञानतो व्याप्तिरिष्यते ।' स्वरूपतस्तु न तयोः व्याप्तिर्वेदान्तपारगा । * इति विशेषवचनात् । न चात्रान्तर्व्याप्तिर्न श्रुता । तदभावे नियमनासिद्धिः । * नियन्त्री च तथेश्वरी * इति बाह्यनियमनेऽप्युपपन्नम्, इति वाच्यम् * अन्तस्स्थिता सा सर्वेषां भावानामिति निश्चयात् * इत्यादिसत्त्वात् ॥

ननु, चान्तः प्रविश्य नियमनं जगत्कारणत्वपूर्वकं वाच्यमिति चेत् * ताविमावेकधैवोक्तौ भेद्यभेदकभावतः । अपृथक्त्वेन शास्त्रेषु जगद्धेतुतयोदितौ * इत्यादिसत्त्वात् । नन्वनुप्रविश्य नियन्तृत्वे पुंस्त्वापत्तिः । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ * इति लक्षणकथनादिति चेन्न ; लोकशब्दस्य स्वव्यतिरिक्तचेतनाचेतनपरत्वात् । लक्ष्मीविषये ईश्वरस्य स्वव्यतिरिक्तचेतनत्वेन तदनुप्रवेशादेरभावात् लक्षणासिद्धेः । न च, विभुत्वे चित्तत्त्वानन्तर्भावात् ईश्वरनियन्तृत्वाभावेनेश्वरतत्त्वत्वाभावाच्च ; चतुर्थतत्त्वत्वापत्तिः । शेषत्वे सति ज्ञातृत्वस्य चेतनलक्षणस्य सत्त्वेन चेतनकोट्यन्तर्गतत्वात् । जगत्कारणत्वादिना ईश्वरकोट्यन्तर्गतत्वसंभवाच्च । न च विभुत्वे सत्यज्ञानादेः ब्रह्मलक्षणत्वानापत्तिः । ब्रह्मस्वरूपे अन्तर्व्याप्त्यनभ्युपगमेनानन्तत्वविरहात् । न चैवमव्यापकतापत्तिः । ब्रह्मस्वरूपस्य तद्गुणादिष्वन्तर्व्याप्तिशून्यत्वेऽपि, विभुत्ववत् अस्या ब्रह्मस्वरूपे अन्तर्व्याप्तिशून्यत्वेऽपि तदुपपत्तेः । न च कारणत्वनियन्तृत्वयोरभ्युपगमे * एकमेवाद्वितीयम् * क्षरात्मानावीशते देव एकः * इत्यादिविरोध इति वाच्यम् । वेदान्ते, सद्ब्रह्मदेवादिशब्दानां लक्ष्मीविशिष्टब्रह्मवाचकत्वाभावेऽपि विशिष्टकारणत्वादेस्तात्पर्यगोचरतया तत्रत्यनिषेधवचनानां लक्ष्मीविशिष्टव्यतिरिक्तनिषेधपरत्वात् । अत एवोच्यते ; * तत्तद्गौरवमाश्रित्य तन्त्रवेदान्तपारगैः । जगद्धेतुतया देवावेकैकावेव दर्शितौ ॥ * इति, * इति श्रुतिशिरसि सिद्धं मच्छास्त्रेष्वपि मानद * इति च । अभियुक्तैरपि * न पृथगभिधत्ते श्रुतिरपि * इति । एवम्, वेदान्ततात्पर्यसिद्धमेव जगत्कारणत्वादिभगवच्छास्त्र उपबृंह्यते । अतः, विभुत्वकारणत्वान्तः प्रवेशनियमनादेः वेदान्ततात्पर्यसिद्धस्य आगमे उपबृंहितत्वात् संसारस्य निग्रहशः लक्ष्म्या अपि निग्रहफलत्वात्तदुपायत्वसिद्धिः । तस्मात् निग्रहशान्त्यर्थं प्रथममुपायत्वेनाश्रयणीया । अनन्तरम्, तत्पुरुषकारेण भगवानाश्रयणीय इति ॥

अत्रोच्यते :

( विश्लेषदशैथिल्येश्वरनैत्यिरत्तुम् )

अत्र, नित्यानपायिन्यास्स्वतो विश्लेषासंभवात् तस्मिन् सोपाधिके वक्तव्ये विग्रहोपाधिको वा वाचकोपाधिको वा विश्लेषो भवति । तत्र विग्रहोपाधिकः क्वाचित्कः । न सार्वत्रिक इति वाचकशब्दप्रयुक्तो विश्लेषोऽत्राभिमतः । चेतनवशीकारे अस्याः चेतनसजातीयत्वस्याभ्यर्हितोपायत्वात् । तद्वाचकशब्दवाच्यत्वमत्राभिप्रेतम् । स च * मकारो नारशब्दश्च * इति श्रियस्तद्वाच्यत्वे * माङ् माने * इति धातोः * नॄ गतौ * इति धातोश्चाणुत्वसिद्धौ विभुत्वप्रतिपादकस्मृतिवचनानि विरोधाधिकरणनयेन बाधितानीत्यर्थः । न च मकारनारशब्दवाच्यत्वासिद्धिः ; मकारवाच्यत्वाभावे लक्ष्म्याः भगवच्छेषत्वासिद्धिप्रसंगात् । समस्तशब्दमूलप्रणवे तदसिद्धौ सर्वत्र तदसिद्धिप्रसंगात् । नारशब्दवाच्यत्वं चागमे नारशब्दव्याख्यानेऽभिहितम् । * ज्ञानादयो

गुणाः रूपं लक्ष्मीः नित्यानपायिनी * इति । भाष्यकारैरपि गद्ये नारशब्दार्थत्वेन साऽभिहिता । * योऽस्मौ श्रियः श्रीः परमा, तेन नारायणस्स्मृतः * इति, हारीतस्मृतिश्च ॥

एवमणुत्वस्य श्रुतिबाधवत् सत्यज्ञानादिवाक्यविरोधोऽप्यस्ति । लक्ष्म्या अप्यनन्तत्वे तस्य लक्षणत्वायोगात् । न च तत्र विशिष्टस्य लक्षणत्वं विवक्षितमिति वाच्यम् । अणुत्वपरमूलमन्त्रविरोधात् । सत्यादिपदानां द्विवचनान्ततापत्तेश्च । न च सत्यादिपदावाच्यत्वेऽपि ईश्वरस्वरूपस्य तादृशलक्ष्मीस्वरूपसुश्लिष्टत्वात् । अर्थसामर्थ्येन सत्यादीनां लक्ष्मीस्वरूपलक्षणत्वसिद्धिरिति वाच्यम् । लक्ष्म्यास्तादृशस्वरूपस्यागमात्सिद्धौ अर्थसामर्थ्यात्; वेदेऽपि तत्तात्पर्यकल्पनम्ः वेदस्य तत्तात्पर्यं सिद्धे तदविरोधेनागमस्य तादृशस्वरूपबोधकत्वम् इत्यन्योन्याश्रयात् । प्रवृत्तिनिमित्ते सति शब्दस्य तत्र तात्पर्ये च सति वृत्त्याबोधकत्वविवक्षायाः अन्याय्यत्वात् । तद्विवक्षायां च पदानां द्विवचनतापत्तिः । अतस्सत्यादिवाक्यानां विशिष्टलक्षणत्वे तात्पर्याभावात्, लक्ष्मीविभुत्ववचनानां तद्बाधो युक्तः ॥

किंच, स्वरूपव्याप्तिः अन्तरपि विवक्षिता? बहिरेव वा? नाद्यः, ईश्वरस्वरूपेऽन्तर्व्याप्तेरभावात् । न चेष्टापत्तिः । मध्यमपरिमाणत्वेनानित्यत्वापत्तेः । न चेश्वरस्वरूपस्य स्वगुणव्यापकत्वाभावेऽपि तदुपपत्तिवदत्रापि संभवः । तत्र द्रव्यभूतगुणेष्वन्तर्व्याप्तिसत्त्वेऽपि व्यापकगुणैरेव सगुणत्वसंभवात् । ननु, लक्ष्मीस्वरूपस्येश्वरस्वरूपान्तर्गतत्वेऽपि तत्र नियन्तृत्वं नास्तीति चेत्, न; असंकुचितज्ञातृत्वयुक्तस्य तदभावानुपपत्तेः । तत्रापि नियन्तृत्वे * न तस्येशे कश्चन * इत्यादिविरोधः । न द्वितीयः; अणुत्वश्रुतिविरोधात्; संसारस्य तन्निग्रहफलत्वानापत्तेश्च । * एष एवासाधु कर्म कारयति तं यमधो निनीषति * इत्यन्तर्यामिणो निग्राहकत्वात् । सर्वान्तरत्वे नारायणशब्दवाच्यता च स्यात्, ततश्च द्वये श्रीशब्दद्वयस्य वैयर्थ्यं स्यात् । चरणावित्यपि स्यात्; विभुत्वेन नियन्तृतया सर्वात्मकत्वे चेतनाचेतनवाचकसर्वशब्दवाच्यता स्यात् । सा च * अर्थो विष्णुरियं वाणी * इति निषिद्धा । तथात्वे, सर्वशब्दमूलभूताकारवाच्यताऽपि स्यात् । न चेष्टापत्तिः । तत्रार्थसंप्रदायविरोधात् । * उकारेणोच्यते लक्ष्मीः * इति वचनविरोधश्च । लोकत्रयशब्दस्येश्वरान्यत्रिविधचेतनाचेतनपरत्वात्: नियन्तृत्वेन धारकत्वे पुरुषोत्तमत्वापत्तिश्च: विभुत्वे, तत्त्वत्रयबहिर्भावश्च । एकदेशलक्षणसत्त्वेऽपि पूर्णलक्षणाभावात् तस्यैव तत्तत्त्वनिरासकत्वात् । शेषत्वादीश्वरत्वाभाववत् अणुत्वाच्चेतनबहिर्भावापत्तेः आवश्यकत्वात्; अन्यथा भोक्ता इत्यादिश्रुतिविरोधः । एवं विभुत्वस्यानेकोपपत्तिप्रमाणबाधितत्वात् तत्परवचनानि वैभवपराणि ॥

न च नीलादिव्यावर्तनेनात्र तथोक्तौ प्रशंसानिदानं किमपि वाच्यम्; तत्र दृश्यते इति, ईश्वरस्वरूपव्यापकस्य लक्ष्मीधर्मभूतज्ञानस्य, भगवत्स्वरूपस्येव तद्गतजगत्कारणत्व, सर्वान्तरत्व, सर्वनियन्तृत्वादिसमस्तवैभवहेतुत्वात् । व्यापकस्वरूपस्य यद्यत्कार्यं तत्सर्वमनेन धर्मभूतज्ञानेन निर्वाह्यत इति तदेव लक्ष्मीस्वरूपत्वेनोपचर्यते यथाऽजडत्वादिगुणसाम्यात् शुद्धसत्त्वे ज्ञानत्वव्यपदेशः । गुणप्रकाशकत्वादिसाम्यात् विग्रहे षाड्गुण्यव्यपदेशः । यथा वा अहङ्कारकार्येष्विन्द्रियेषु भूतानामाप्यायकत्वेन तज्जन्यत्वव्यपदेशः । तथा, विभुस्वरूपकार्यस्य जगत्कारणत्वादेः एतद्धर्मभूतज्ञानस्य सहकारित्वेन कारणत्वात् तत्र स्वरूपत्वव्यवहारः । महिष्यन्तरधर्मभूतज्ञानं तु नैवं रूपम् । अतः यथा भगवत्स्वरूपं स्वगतसमस्तमङ्गलगुणादिकं प्रति धर्मित्वेन हेतुभूतम् । तथा तत्स्वरूपव्यापकं धर्मभूतज्ञानमपि तद्गतसर्वमङ्गलगुणसहकारिकारणमिति तत्र स्वरूपत्वोक्तिः । यथा,

लक्ष्मीकटाक्षलेशयोगात् चतुर्मुखादीनां सश्रीकत्वम्, एवमेव स्वरूपस्याणुत्वेऽपि तद्धर्मभूतज्ञानेन स्वरूपमात्रस्य सश्रीकत्वमुपपद्यते । एतद्विवक्षया श्रीशास्त्रे, स्तोत्रे, गद्ये च, तत्स्वरूपानन्त्योक्तिः एवं बीजस्थानीयस्य भगवतो जगत्कारणत्वे जलसेकवत् लक्ष्मीधर्मभूतज्ञानस्य सहकारितया जगत्कारणत्वोक्तिः । तथा, भगवतस्सर्वनियन्तृत्वे तदुपयुक्तज्ञानशक्त्याद्युद्बोधकतया सर्वान्तरत्वोक्तिश्च । अन्यथा * एकमेवाद्वितीयम् * ईशते देव एकः * इत्यादिशब्दानां द्विवचनान्तत्वापत्त्या वेदान्तानामतत्परत्वस्य पूर्वमेवोक्ततया तत्तद्वाक्यस्थनिषेधवचनानां लक्ष्मीकारणत्वादिनिषेधपरत्वात् । अन्यथा, कारणवाचकाकारवाच्यतापत्तिः । जगज्जन्मादेरीश्वरलक्षणत्वाभावापत्तिश्च । एवम्, धर्मभूतज्ञानस्य भगवत्स्वरूपादिसकलव्यापकत्वेन तत्तत्सकलवैभवहेतुत्वात् सर्वभावानुगामित्वं तद्धर्मधर्मित्वादिकमप्युपपन्नम् । अत एवोच्यते; * श्रद्धया देवो देवत्वमश्नुते * इत्यादि । तस्मात् विभुत्ववचनानामीश्वरत्वरूपानुवर्तित्वेन सकलवस्त्वनुगतधर्मभूतज्ञानपरत्वम्, कारणत्वादिपराणामन्तरङ्गसहकारिपरत्वम्, नियन्तृत्ववचनानां तदुपयोगिज्ञानशक्त्याद्युद्बोधकत्वपरत्वं चोदितम् । श्रुतिविरोधे स्मृतीनामेव संकोचस्येष्टत्वात् ॥

न च * ईश्वरीं सर्वभूतानाम् * इति श्रुतिरेव सर्वनियमनमसंकुचितमाह; अतः अन्तर्बहिश्च व्याप्तिसिद्धिः इति वाच्यम् । यतः * क्षरात्मानावीशते देव एकः * इतीश्वरान्तरनिषेधकण्ठोक्तया सावकाशा उदाहृतश्रुतिः बाह्यनियमनपरा; * अस्येशाना जगतो विष्णुपत्नी * इत्यत्र नियमनस्य पत्नीत्वोपाधिकत्वश्रवणात् ॥

ननु, उक्तप्रकारेण लक्ष्म्या अनन्तत्वम्, सर्ववस्तुशरीरत्वलक्षणं न भवति; किं तु आकाशादिवदन्तर्बहिश्च व्याप्तत्वमात्रम्; कारणत्वादिकमपि स्वरूपस्य तत्तत्सहकारित्वम्; एवमभ्युपगमे विभुत्ववचनानां मुख्यत्वं सिध्यतीति, तथात्वे न कोऽपि विरोधोऽस्ति, इति चेत् नैवम्; अणुत्वश्रुतिविरोधात्, तत्त्वान्तरत्वापत्तेश्च । तस्माद्विभुत्वं न स्वरूपगतम् । अथवा, चेतनाचेतनयोरन्तर्बहिश्च प्रत्येकं परिसमाप्य वर्तमाने ब्रह्मस्वरूपे अणुत्वपरिमाणं लक्ष्मीस्वरूपमपि तत्र तत्र वर्तत इति व्यापकमित्युच्यते । एवम्, निरूपकत्वेन स्वरूपान्तर्गतत्वात् स्वरूपगतं कारणत्वादिकमपि लक्ष्मीस्वरूपगुणमित्युच्यते । निरूपकत्वं च नीलादीनां नास्तीति तद्व्यावृत्तिः विभुत्वादिना प्रतिपाद्यते । निरूपकत्वं च विग्रहस्य श्रीवत्सवत् अणुत्वेऽप्युपपद्यते * यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम * इत्याद्यपि निरूप्यस्य सर्ववस्तुषु परिसमाप्य विद्यमानत्वात् अणुत्वेन तत्र तत्र विद्यमानत्वाभिप्रायः विग्रहव्याप्त्यभिप्रायं वा भवेत् । तस्मात् लक्ष्म्या अविभुत्वेन नियन्तृत्वाभावात् संसारस्य तन्निग्रहरूपत्वाभावेन तन्निवृत्तौ हेतुत्वमिति ॥

संग्रहस्तु :

विभुत्वेन नियन्तृत्वाल्लक्ष्म्या निग्रहरूपता । यतो बद्धस्य तत्रापि शरण्यैवेति चेन्न तत् ॥
मकारनारवाच्यत्वात् श्रियो वैभवबोधिकाः । स्मृतयो बाधमर्हन्ति विरोधेत्विति नीतितः ॥
सत्यादेर्लक्षणत्वाच्च तत्तत्रित्वस्य भङ्गतः । ईश्वरस्य स्वरूपान्तरभावात्तदनित्यता ॥
भावे च परमात्मत्वभङ्गो विष्णोर्यथाभवेत् । अब्रह्मायनशब्दादिवाच्यता च भवेद्यतः ॥
अन्तर्नियमने स्त्रीत्वभङ्गश्च स्मृतितो भवेत् । नियन्त्रन्तरशून्यत्वश्रुतिबाधः प्रसज्यते ॥
जन्मादेर्लक्षणत्वं च भग्नं भवति वै यतः । तस्माद्विभुत्वहेतुत्वनियन्तृत्वादिका गुणाः ॥

त्व (य) त्कटाक्षाद्धरेस्तेन विभुत्वादिगुणान्विता । सर्ववस्तुषु साकल्याद्विष्णोर्वृत्तेर्निरूपिका ॥
सर्वगा कथिता लक्ष्मीस्स्मृतौ च स्तोत्रगद्ययोः । तस्मादणुस्वरूपाया नियन्तृत्वाद्यभावतः ॥
अतन्निग्रहरूपस्य बन्धस्य विनिवृत्तये । न हेतुत्वं तथा लक्ष्म्या मातृत्वस्य च भङ्गतः ॥

इति लक्ष्मीविभुत्वभङ्गाधिकारः ॥ ११ ॥

पुरुषकारत्वे प्रमाणतया तृतीयाधिकारोक्तस्य श्रीरामायणस्योपबृंह्यमंशमाह —

इरुवरैयुम् तिरुत्तुवदुमुपदेशत्ताले

अनेन शृणोति श्रावयतीति व्युत्पत्तिद्वयार्थ उक्तः ।

प्रमाणस्याबाधितार्थत्वमाह —

उपदेशत्ताले इरुवरुडैयवुम् कर्मपारतन्त्र्यम् कुलैयुम्

श्रीयत इति व्युत्पत्तिमाह —

उपदेशत्ताल् मीळादपोदु चेतननैयरुळाले तिरुत्तुम्

श्रयत इति व्युत्पत्तिमाह —

ईश्वरनैयळगाले तिरुत्तुम्

इति श्रीवचनभूषणमीमांसाभाष्ये विरोधपरिहारे प्रथमस्य परिच्छेदस्य प्रथमं प्रकरणम् ॥

॥ १२ ॥ अथ भगवन्निर्हेतुकोपायत्वप्रकरणे प्रपत्तिविधिनिरूपणाधिकारः ॥

एवमत्र पुरुषकारप्रकरणे पुरुषकारत्वस्य निर्हेतुकत्वं तस्य सकिंचनानधिकारत्वम्, अकिञ्चनाधिकारत्वम्, तद्विरोधिस्वतन्त्रोपायत्वराहित्यं, परतन्त्रोपायत्वराहित्यम्, तद्विरोधिविभुत्वराहित्यं चेति अर्थषट्कं क्रमेणाधिकारषट्केण निरूपितम् । इतः परम् त्रिप्रकरण्यामुपायस्वरूपं निरूप्यते । श्रीशब्दार्थे पुरुषकारे निरूपितेऽवशिष्टार्थः परिच्छेदशेषेण निरूप्यते ॥

तत्र द्वितीयप्रकरणे नारायणशब्दार्थसिद्धोपायस्वभावनिरूपणेन शरणशब्दोपस्थापितोपायत्वस्य निर्हेतुकत्वमुच्यते । तत्र, तृतीयप्रकरणे मतुप्प्रत्ययार्थभूतदेशकालाद्यनियमानुबन्धिस्वभावनिरूपणेनाहेतुकत्वमुच्यते । चतुर्थप्रकरणे क्रियापदार्थभूतवरणस्वभावनिरूपणेन तन्निर्हेतुकत्वमुच्यते । तत्र सिद्धोपायस्वभावः मन्त्रोपबृंहणभूते चरमश्लोके विस्मृत [विवृत] इति तदर्थनिरूपणमुखेनोपायत्वस्य निरपेक्षत्वमुच्यते । तत्र प्रथमाधिकारे * व्रज * इति विध्यनुपपत्त्या वरणस्यैव हेतुत्वान्नैरपेक्ष्यमसिद्धमित्याशंक्य, अधिकारिविशेषणत्वेऽपि तदुपपत्तेः वरणस्याहेतुत्वमुच्यते । द्वितीयाधिकारे वरणस्य हेतुत्वाभावे * मोक्षयिष्यामि * इति भगवदङ्गीकारानुपपत्तिरित्याशङ्क्य त्वाशब्देन सदोपस्थाप्यङ्गीकारश्रवणात् न वरणस्य हेतुत्वमिति स्थाप्यते । तृतीयाधिकारे अहं शब्देन सत्यसंकल्प-

त्वोक्त्या सदसत्कर्मसंकल्पभङ्गानुपपत्तेः वरणस्य हेतुत्वमित्याशङ्क्य मांशब्दार्थभूतवात्सल्यादिभङ्गप्रसङ्गेन क्वचित्संकल्पभङ्गोऽप्यस्तीति वरणस्याहेतुत्वमेवोच्यते । चतुर्थाधिकारे * मा शुचः * इति कृतकृत्यत्वविधानान्यथाऽनुपपत्त्या वरणस्य हेतुत्वमित्याशङ्क्य, तदा त्वाशब्दोपस्थापितानूदितभरसमर्पणत्वस्य * मोक्षयिष्यामि * इति परार्थभूतस्वीकृतभरत्वस्य च हान्यापत्तिरिति वरणमनुपाय इति स्थाप्यते ॥

तत्र, प्रथमं सिद्धोपायस्य नैरपेक्ष्यं स्वभाव इत्येतत् चरमश्लोके प्रतिपाद्यत इत्याह —

## अरियादनंवित्यादि

चरमोपायपर्यन्ताज्ञातार्थान् ज्ञापयतीत्याचार्यकृत्ये नैरपेक्ष्यदर्शनात् * मित्रमौपयिकं कर्तुं रामः * इतिवत् * शरणं व्रज * इति पुरुषकारकर्तव्योपदेशस्य स्वेनैव करणे निरपेक्षत्वदर्शनात् * अहं त्वा सर्वपापेभ्यो-मोक्षयिष्यामि * इत्युपायकृत्य करणे सापेक्षत्वादर्शनाच्च चरमश्लोके महाभारतसारभूते निरपेक्षत्वं भगवत इत्यवगतमित्यर्थः ॥

अत्रैवं संशयः ; किं भगवतो निरपेक्षत्वं स्वरूपं न भवति ? उत भवतीति । तदर्थं निरपेक्षत्वे सर्वमुक्त्यादिप्रसंगः सर्वशास्त्रवैयर्थ्यं च भवति ? उत न भवतीति । तदर्थं निरपेक्षत्वस्य प्रतिनियतविषयत्वं न संभवति, उत संभवतीति । तदर्थं शरणागतिस्साधनम् ? उताधिकारिविशेषणमिति । तदर्थम्, अधिकारिविशेषणविधिर्न संभवति ? उत संभवतीति । यदा न संभवति तदा व्रज इत्यस्य साधनविधित्वेन शरणागतेस्साधनतया शरणागतेः निरपेक्षत्वस्य प्रतिनियतत्वासंभवेन सर्वविषयतायां सर्वमुक्त्यादिप्रसंगः । भक्त्यादिसाधनविधायकशास्त्रवैयर्थ्यप्रसंगश्च भवतीति भगवतो न नैरपेक्ष्यं स्वभाव इति पूर्वपक्षे फलफलिभावः ॥

यदा, अधिकारिविशेषणविधिस्संभवति ; तदा, व्रज इत्यस्याधिकारिविशेषणविधित्वात् शरणागतेरसाधनतया शरणागतपुरुषनिरपेक्षत्वस्य प्रतिनियततया सर्वमुक्त्यादिप्रसंगाभावेन भगवतो नैरपेक्ष्यं संभवतीति सिद्धान्ते फलफलिभावः ॥

पूर्वपक्षस्तु ; भगवदुपायत्वस्य निर्हेतुकत्वमनुपपन्नम्, अप्रामाणिकं च । न तावत् तत्र श्रुतिः प्रमाणम् । वेदे तादृशवाक्यस्य क्वाप्यदृष्टेः । न च पूर्वकाण्डे तदस्ति । * वायुमेव स्वेन भागधेयेनोपधावति । स एवैनं भूतिं गमयति * स तया श्रद्धया युक्तः तस्याराधनमीहते * लभते च ततः कामान् मयैव विहितान् हितान् * इत्यादिश्रुतिस्मृतिषु तत्तत्कर्माराधिततत्तद्देवतान्तर्यामिणो रक्षकत्वश्रवणात् । उपरितनभागेऽपि भोगमोक्षहेतुतया नानाविधोपासनविधानेन तत्तदुपासनविशेषोपास्यस्य ब्रह्मणः तत्तत्फलप्रदत्वेन सर्वत्रोपासनरूपहेतुदृष्टेः * संसारबन्धस्थितिमोक्षहेतुः * इत्यादिवाक्यसत्त्वेऽपि तत्र विधेयज्ञानान्तराभावेनोपाध्यश्रवणात् निर्हेतुकत्वप्रतीतावपि साध्योपायरहितस्य सिद्धोपायस्य फलप्रदत्वे सर्वमुक्त्यादिदोषप्रसंगात्, कर्मोपासनरूपसाध्योपायविधायकशास्त्रवैयर्थ्यापत्तेश्च । सर्वत्र साध्योपायसापेक्षस्य सिद्धोपायस्य फलप्रदत्वसिद्धिः । अत एव प्रणवे उपाध्यश्रवणात् रक्षणनिर्हेतुकत्वप्रतीतावपि नमसा उपायप्रतिपादनात् प्रणवावगतं रक्षकत्वमप्यौपाधिकमवगम्यते : एवमेव * संसारबन्धस्थितिमोक्षहेतुः * अमृतस्यैष सेतुः * इत्यादौ निरुपाधिकत्व-

प्रतीतावपि * ज्योतिष्टोमेन स्वर्गकामो यजेत * मुमुक्षुर्ब्रह्मोपासीत * इत्युपायविधायकशास्त्रबलात् अतिप्रसंग-वैषम्यादिदोषाच्च, तत्र श्रुतं भगवतस्सिद्धोपायत्वं साध्योपायसापेक्षमिति गम्यते । तथा च श्रुतप्रकाशिका, * शास्त्रप्रतिपाद्यमुपायोपेयात्मकं तत्र सिद्धोपाय उपेयं च ब्रह्म साध्योपायो भक्तिः * इति । ततश्च वेदवेदान्तयो-स्सर्वत्र सापेक्षत्वप्रतीतेः न श्रुतिस्तत्र प्रमाणम्; नापि स्मृतिः । यद्यपि * नासौ पुरुषकारेण न चाप्यन्येन हेतुना । केवलं स्वेच्छयैवाहं प्रेक्षे कंचित्कदाचन ॥ निर्हेतुककटाक्षेण मदीयेन महामुने । * इत्यादिसंभवः । तथाऽपि, सर्ववेदान्तप्रत्ययनयेन साध्योपायसापेक्षस्य, सिद्धोपायस्य फलप्रदत्वे निश्चिते विरोधाधिकरणनयेन स्मृतेर्बाध्यत्वात् । न चाधिकारिभेदकल्पनेन व्यवस्थितविकल्पसंभवः । श्रुतिस्मृत्योस्तुल्यबलत्वाभावेन तत्कल्पकविरोधाभावात् । तुल्यबलविरोधे हि विकल्पसंभवः । नहि * नायमात्मा प्रवचनेन लभ्यः * इत्यादिश्रुतिरुक्तस्मृत्यनुग्राह्यास्ति । तत्रोपायान्तरव्यवच्छेदेन निरपेक्षत्वं सिद्धोपायस्योक्तमिति चेत् न; उदाहृतश्रुतेः भक्तिपरत्वेन भाष्यकारैर्व्याख्यातत्वात् । न च वाच्यम्, उक्तश्रुतेः भक्तिपरत्वेन व्याख्या चरमश्लोकस्य भक्तिपरत्वयोजनावत्, उक्तस्मृत्यानुगुण्यात् शब्दस्वारस्याच्च तथा योजनान्तरस्य न बाधिकेति मुमुक्षुसामान्ये निर्हेतुकविषयीकारकल्पने श्रवणादिविधिवैयर्थ्यात्, अधिकारिविशेषे तत्कल्पने ईश्वरस्य वैषम्यनैर्घृण्यापत्तेश्च ॥

न च वैषम्यादेः निरङ्कुशस्वातन्त्र्यकृतत्वाददोषत्वम् । तादृशवैषम्यावहस्वातन्त्र्यस्यापि दोषत्वात् । * वैषम्यनैर्घृण्येन सापेक्षत्वात् * इति तत्र वैषम्यसामान्यस्य हि दोषत्वमुक्तम् । तत्र सापेक्षत्वहेतुना वैषम्या-भावसाधनात् । निरपेक्षत्वे तदुभयमवश्यं भवतीति हि सूच्यते । ततश्चेश्वरस्य निर्दोषत्वविधायकानेकश्रुति-स्मृतिविरोधः उक्तश्रुतिः केवलश्रवणादीनामनुपायत्वं वदति । स्मृतिश्च सिद्धोपायापेक्षया साध्योपायस्याप्राधान्य-परा ।

ननु, मुमुक्षुसामान्ये भगवतो निर्हेतुकरक्षकत्वं; अपि तर्हि, तद्विशेषे न च तादृशविशेषस्य दुर्निरूपता । सुनिरूपत्वे वा तस्यैव हेतुत्वमिति वाच्यम् । शरणागतेरेव विशेषत्वात् । तस्याश्चाधिकारिविशेषणत्वेना-हेतुत्वात् इति चेत्; मैवम् । विशिष्टविधिपक्षेऽपि वरणस्य विधेयत्वस्वीकारेणाधिकारिविशेषणत्वासिद्धेः । तस्य सिद्धत्वानियमात् । तदुक्तम् * सिद्धमेव हि सर्वत्र निर्याज्यस्य विशेषणम् । जीवनादितथैवैकं कामनादि-विशेषणम् ॥ इति । अविधेयत्वस्वीकारे वाधिकारिविशेषणत्वम् । फलकामनारूपतया, फलतया, निमित्ततया वा? आद्यद्वितीययोरसिद्धिः । शरणागतेः फलत्वतत्कामनारूपत्वयोरभावात् । फलत्वेऽपि न स्वरूपतः तथात्वम् । किंतु कामनाविषयतया, न ह्यत्र तत्कामना श्रूयते; तथात्वे वा तदर्थसाधनान्तरविधानं दृश्येत । तृतीये निषिद्धतया निमित्तत्वे परिहरणीयता स्यात्; जीवनादिवत् केवलनिमित्तत्वे विधिप्रत्ययो न स्यात् । विधेयान्तरं च दृश्येत ।

किंच यदि विहितत्वाविशेषेऽपि शरणागतिरधिकारिविशेषणं स्यात्, भक्तिरपि तथा स्यात् । अत-स्सहजकारुण्यविशिष्टस्य सिद्धोपायस्यानाद्याज्ञातिलङ्घनेन कालुष्ये सति तत्कालुष्यशामकत्वेन साध्योपाय-स्सहकारीति अवश्यमभ्युपगमनीयम्; ततश्चेश्वरस्य प्रधानकारणत्वात्, साध्योपायस्याप्रधानकारणत्वाच्च, सिद्धोपायप्राधान्यविवक्षया शास्त्रेषु निर्हेतुकत्ववादः । अन्यथा, ईश्वरस्य वैषम्याद्यापत्तिः । सर्वमुक्त्याद्यापत्तिः । साध्योपायविधायकशास्त्राप्रामाण्यापत्तिश्च स्यात् । अतः ईश्वरस्य * अमृतस्यैष सेतुः * इत्याद्यवगतं सिद्धोपाय-

त्वम्, शक्तविषये भक्त्यादिसापेक्षत्वं, अशक्तविषये शरणागतिसापेक्षमिति न क्वापि निर्हेतुकत्वसिद्धिः ॥

किंच, न केवलं विधेयत्वात् शरणागतेरधिकारिविशेषणत्वाभावः * इदं शरणमज्ञानाम् * उपायोऽयं चतुर्थस्ते प्रोक्तश्शीघ्रफलप्रदः * इत्यादिषु उपायत्वकण्ठोक्तेश्च, तदभावोऽवगम्यत इति ॥

तत्राह :

( अरियादनवित्यादि )

अत्रायं भावः ; न हि वयमीश्वरस्य सर्वत्र निर्हेतुकोपायत्वं ब्रूमः ; येन मोक्षोपायान्तरविधायकशास्त्रानर्थक्यं स्यात् ; नापि मुमुक्षुसामान्यविषयमिति ब्रूमः । येन सर्वमुक्त्याद्यापत्तिः, ईश्वरस्य वैषम्याद्यापत्तिश्च स्यात् । किंतु शास्त्रविहिततत्तदुपायाभावस्थले शरणागताधिकारिविशेषं प्रति तथात्वम् । तत्र प्रतिपदविहितसाधनान्तराभावेनेश्वरस्य निर्हेतुकरक्षकत्वसिद्धेः ॥

न च तत्र शरणागतेरेवोपायत्वात् तदभावोऽसिद्धः । तस्या अधिकारिविशेषणत्वेनानुपायत्वात् । न च, फलतत्कामनानिमित्तान्यत्वेन तदसंभवः । साध्योपायान्तराधिकाराणां तथात्वेऽपि सिद्धोपायाधिकारस्य तद्भिन्नत्वसंभवात् । न च, विधिप्रत्ययानन्वयप्रसंगः । विधेयत्वस्वीकारात् । अत एवोक्तं रहस्यत्रये * अत्र पूर्वार्धेनाधिकारिकृत्यमाह ; अधिकारिकृत्यं चोपायपरिग्रहः । तत्साङ्गं विदधाति * इति । तर्हि, विधेयत्वमधिकारिविशेषणत्वं च व्याहतम् । सिद्धत्वसाध्यत्वावस्थयोरेकदा एकत्रायोगादिति न वाच्यम् । साध्योपायाधिकारस्य सिद्धत्वेऽपि सिद्धोपायाधिकारस्य साध्यतया केवलसाध्यत्वाभ्युपगमात् । न च, साध्यस्याधिकारिविशेषणत्वमप्रसिद्धम्, सिद्धस्योपायत्वेऽपि तथात्वात् ॥ * यदि अमृतस्यैव सेतुः * कृष्णं धर्मं सनातनम् * इत्यादिप्रमाणवलात्, दृष्टव्याप्तितिरस्कारेण सिद्धस्याप्युपायत्वमङ्गीक्रियते ; तर्हि, उपायस्य फलसंबन्धवत् अधिकारिसंबन्धस्यापि आवश्यकत्वे तत्र तस्यापि सिद्धत्वेऽतिप्रसंगात् सिद्धोपायश्रुत्यर्थापत्त्या तदधिकारस्य साध्यत्वं कल्प्यते । अत एव विधेयान्तरहानिरपि न बाधिका । सिद्धाधिकारस्य तद्व्याप्तेः । ततश्चात्र शरणागतिविशिष्टं ब्रह्म मोक्षसाधनतया विधीयत इति नाभ्युपगम्यते ; येन, निक्षेपरक्षायां सिद्धावस्थ शरणागतिवादोक्तदूषणापत्तिः । किंतु सिद्धोपायप्राप्तिकामस्य शरणागतिः कर्तव्यतया विधीयते * सिद्धोपायप्राप्तिकामश्शरणागतिं कुर्यात् * इति ॥

न च, सिद्धोपायकामना तज्ज्ञानपूर्विकेति, पूर्वं तदसिद्धिरिति वाच्यम् ; अमृतस्यैष सेतुः * इत्यादिवाक्यैः ब्रह्म सिद्धोपाय इति श्रवणदशायामेव विदितत्वात् । एवम् ब्रह्मणि सिद्धोपायत्वेन ज्ञाते तत्प्राप्तिः कथमित्यपेक्षायां * मुमुक्षुर्वै शरणमहं प्रपद्ये * सर्वधर्मान् * इत्यादिभिः तत्प्राप्तिसाधनं विधीयते । यथा ब्रह्मणः प्राप्यत्वाकारे तत्परवाक्यादवगते तत्प्राप्तीच्छायां तत्साधनत्वेन भक्तिर्विधीयते ; तथा ब्रह्मणः प्रापकत्वाकारे श्रुत्यावगते तत्प्राप्तीच्छायां जातायाम्, कर्तव्यतया शरणागतिर्विधीयते । एतेन सिद्धस्योपायस्य काम्यत्वासिद्धिरिति निरस्तम् । तत्प्राप्तेस्तथात्वात् । प्राप्तिश्च सिद्धोपायेन स्वीकार्यत्वम् ; स्वीकारश्च * मोक्षयिष्यामि * इत्येवं रूपः ॥

न च, शरणागतिरपि ब्रह्मणस्सिद्धोपायत्वज्ञानम, तच्च पूर्वमेव वृत्तमिति वाच्यम् । श्रावणज्ञान-विधेयज्ञानयोस्समानविषयत्वेऽपि तदनुस्मृतिरूपस्य विश्वासात्मकप्रार्थनागर्भस्य विधेयत्वोपपत्तेः । अत एव विधेयज्ञानान्तराभ्युपगमात् न कुदृष्टिमतरीतिः । अत एव न कामनाधिकारत्वभङ्गोऽपि । सिद्धोपायप्राप्ति-कामनाया अधिकारत्वात् । अत्र * मोक्षयिष्यामि * इति संकल्परूपस्य परगतस्वीकारस्य फलत्वेन श्रुतेः तत्कामनैवाधिकारः; न तु, मोक्षकामना । उपायविशेषणत्वेन तदन्वयात् । * त्वमेवोपायभूतो मे भव * इति मोक्षस्योपायनिरूपकत्वेन साक्षादकाम्यत्वात् । अत एव रहस्यत्रये * उत्तरार्धेनोपायकृत्यं वदति * इत्युक्तम् । न तु रक्षककृत्यमिति । अत एव भक्तिविधायकवाक्ये * मामेवैष्यसि * इतिवत् * सर्वपाप-विनिर्मुक्तो मामेवैष्यसि मा शुचः * इति फलश्रुतिर्न जाता ॥

ननु, * मोक्षयिष्यामि * इत्येवंरूपस्य भगवत्स्वीकारस्य शरणागतिप्रसन्नेश्वरकृत्यत्वात् शरणागतिः प्रसादनमित्यागतम्; ततश्च * प्रसत्त्यर्थं तस्योक्ते प्रपदननिदिध्यासनगती * इत्युक्तप्रकारेण भक्तितुल्यता आगताः; अन्यथा भक्तेरप्यहेतुतापत्तिरिति चेत्; मैवम् । नात्र * मोक्षयिष्यामि * इत्येवंरूपस्य सिद्धोपायकृत्यस्य जनकत्वेन शरणागतिर्विधीयते; किंतु तत्प्रतिबन्धकाभावत्वेन । ईश्वरस्तूक्ताधिकारिविषये निर्हेतुककटाक्षमारभ्य प्रसन्न एव तिष्ठति । तदुक्तम् * वरद तव खलु प्रसादादृते शरणमिति वचोऽपि मे नोदियात् * इति ॥

अत एवोच्यते * भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिनिवृत्तिः प्रपत्तिः * इति । यतोऽस्याश्शरणागते-स्सिद्धोपायप्रवृत्तिप्रतिबन्धकाभावत्वेनाराडुपकारकत्वम्; अत एवायं सिद्धोपायाङ्गविधिरित्यप्युच्यते । स्वर्ग-कामनावदुपायसंबन्धघटकत्वात् शरणागतेस्तद्विधिरधिकारिविशेषणविधिरित्यप्युच्यते । यद्वा पूर्वमप्रसन्नेश्वरस्य प्रपदनं शरणागतिरप्यस्तु, तथापि न भक्तितुल्यता; शरणागतेः स्वीकारहेतुभूतप्रसदनहेतुत्वात् । भक्तेः मोक्षप्राप्तिहेतुभूतप्रसदनहेतुत्वाच्च ।

ननु, यद्ययं प्रक्रान्तयोगं परिसमापयेत, तदा न पूर्वोत्तरयोः फलं दास्यामि । समाप्ते तु तस्मिन् नैव दास्यामीत्येवंरूपस्य * मोक्षयिष्यामि * इति सङ्कल्पस्याश्लेषविनाशश्रुत्यर्थस्योपासकविषयेऽपि तुल्यत्वात् कथं वैषम्यमिति चेत्; उच्यते । उक्तसङ्कल्पस्योपासके यद्यर्थगर्भत्वात् तत्रोपासनसमाप्तिरेव मोक्षहेतुः । तत्रेश्वरस्य फलप्रदत्वमात्रम्; अत्राहमेव मोक्षयिष्यामीत्युक्तसङ्कल्पस्य यद्यर्थगर्भत्वविरहात् प्रक्रान्तयोगसमापन-मीश्वरकृत्यमित्यवगम्यते । तत्र साक्षात्कारपर्यन्तोपासनसमाप्तिः ईश्वरेण (चेतनेन) क्रियते । अत्र वरण-लक्षणोपासनारम्भे चेतनेन कृते सति फलपर्यन्ततत्समाप्तिरीश्वरेण क्रियते । सर्वेषामपि प्राप्तेः दर्शनपूर्वकत्व-नियमात्; अत एव * ददामि बुद्धियोगं तं येन मामुपयान्ति ते * इत्युच्यते । तत्रोपासकेनेश्वरस्याङ्गतया स्वीकृतत्वात् ईश्वरकृत्यमप्रधानम्, * ददामि * इत्युक्तिश्चामुख्या । अत्रोपायत्वेन स्वीकृतत्वात् वरणानन्तरं चेतनप्रवृत्त्यभावाच्चेश्वरकृत्यं प्रधानम् * ददामि * इत्युक्तिश्च मुख्या । अतः शरणागतेः प्रक्रान्तयोगपरिसमापन-पूर्वकमोक्षप्रदत्वौपयिककृपाहेतुत्वात्, भक्तेः मोक्षमात्रप्रदत्वहेतुकृपाजनकत्वाच्च महदन्तरम् ॥

यदि योगप्रारम्भभूतवरणस्य मोक्षेऽपि हेतुत्वम्; तदा भक्तिप्रारम्भस्यापि हेतुत्वे तत्समापनमहेतु स्यात् । तद्विशेषभूतं सङ्कल्पहेतुभूतवरणं संनिपत्योपकारकमिति तद्विधिरङ्गविधिर्वा स्यात् । एवं वरणस्य

प्रतिबन्धकाभावत्वे वा, प्रसादनत्वे वा तद्विधिरङ्गविधिः । तस्मात् सिद्धोपायप्राप्तिकामनैवाधिकारः शरणागतेः । तदुक्तं स्कान्दे * सर्वधर्मैकरूपं मां सर्वकामफलप्रदम् । सा प्रापयति सद्यो यत्सर्वधर्मैकरूपिणी * इति । भरद्वाजसंहितायाम् * तदेवं भगवान् प्रीतः प्रपत्त्या साधनं परम् । तथैव भक्तिवपुषा प्रीतः फलमपि स्वयम् * इति च ॥

ननु, * मुमुक्षुर्वै शरणमहं प्रपद्ये * इति मोक्षकामना नियोज्यविशेषणत्वेन श्रुता अतः तत्कर्तव्यत्वेन विधानात् शरणागतिर्मोक्षसाधनमिति चेत् उच्यते । मोक्षकामकर्तव्यत्वोपदेशमात्रात् न तद्धेतुत्वसिद्धिः; यथा कर्मज्ञानयोस्तत्कर्तव्यत्वेन विधानेऽ पि तयोर्भक्त्यङ्गत्वम्; तथात्रापि सिद्धोपायाङ्गत्वात् परंपरोपायत्वविवक्षया तथाविधिरुपपद्यते । अतः शास्त्रविहितोपायः भक्तिः सिद्धोपायश्चेति द्विविध एव श्रुतप्रकाशिकायाम् * शास्त्र-प्रतिपाद्यमुपेयोपायात्मकम्; तत्र सिद्धोपाय उपेयं च ब्रह्म, साध्योपायो भक्तिः * इति ॥

अत्र प्रपत्तिरित्यपि नोक्तम् । * भक्त्या परमया वाऽ पि प्रपत्त्या वा महात्मनः * इत्यादिशास्त्रे प्रपत्ति-शब्दः सर्वत्र प्रपत्तव्यसिद्धोपायपरोऽ वगम्यते । न च भक्तिस्थलेऽ पि सिद्धोपायत्वविवक्षया श्रुतप्रकाशिकोक्तिः न्यासस्य शास्त्रार्थत्वापत्तेः । ततश्च भक्त्यङ्गत्वं कर्मज्ञानयोस्सिद्धोपायाङ्गत्वं च प्रपत्तेरभिप्रेत्य तथोक्तिरिति गम्यते । भक्तिस्थले प्रपत्तेरङ्गत्वात्, भक्त्युत्पत्तिं प्रति भगवतस्सिद्धोपायत्वेऽ पि न तत्र मोक्षं प्रति तथात्वम्; किंतु फलप्रदत्वमात्रम् । न तूपायत्वफलप्रदत्वयोरभेदः । तयोरधिकरणद्वयफलत्वस्य पूर्वमुक्तत्वात् भेदसिद्धेः । तदेवं * व्रज * इत्यस्याधिकारिविशेषणविधित्वेन वा अङ्गविधित्वेन वा अन्यथासिद्धत्वात् । न तद्बलेन वरणस्य हेतुत्वमिति शरणागताधिकारिविशेषे भगवदुपायत्वस्य निर्हेतुकत्वसिद्धिरनिवार्येति ।

संग्रहस्तु :

अहेतुकमुपायत्वं सर्वैलभ्यं हरेर्यदि । सर्वमुक्तिस्तथा शास्त्रमात्रं च विफलं भवेत् ॥
प्रपन्नमात्रलभ्यत्वे प्रपत्त्या तन्न सिध्यति । साध्यावस्थाप्रपत्तिश्च नाधिकारिविशेषणम् ॥
अतस्सर्वत्र भगवान् सापेक्षो रक्षणे स्मृतः । रक्षत्यहेतुकं श्रीशः प्रपन्नं परमुत्सुकः ॥
प्रपत्तिरत्राहेतुः किं त्वधिकारिविशेषणम् । साध्योपाये तत्तु सिद्धं सिद्धे साध्यं तदिष्यते ॥
विधेयान्तरहानिश्च विधिश्चातोऽ त्र संगतः । अन्यथा तस्य सिद्धत्वादुपायस्य च सर्वदा ॥
अतिप्रसङ्गस्स्यात्तस्मात्स्वीकार्यं साध्यमेव तत् । प्रपत्तेरधिकारस्तु सिद्धोपायाप्तिकामना ॥
(प्रा) थाप्तिश्च "मोक्षयिष्यामी" त्येवं स्वीकार्यतामुना । स्वतः प्रसन्नेश्वरस्य प्रसादे सा न कारणम् ॥
किंतु स्वयत्नाभावत्वात्प्रतिबन्धनिवारणम् । कारणत्वेऽ पि मोक्षे न कारणं भक्तिवद्भवेत् ॥
उक्तस्वीकारहेतुत्वादन्यथातिप्रसङ्गतः । मुमुक्षावधिकारस्स्यात्सा तथाऽ पि न साधनम् ॥
मुमुक्षुकर्तव्यतया विहितज्ञानकर्मणोः । भक्त्यङ्गता तथा तस्याः सिद्धोपायाङ्गता भवेत् ॥
तस्माच्छरण्यश्शरणागतं रक्षत्यहेतुकम् ॥ इति ॥

इति भगवन्निर्हेतुकोपायत्वप्रकरणे प्रपत्तिविधिनिरूपणाधिकारः ॥ १२ ॥

॥ १३ ॥ अथ प्रपन्नस्वरूपनिरूपणम् ॥

( पुरुषकारत्तुक्कुमित्यादि )

यदि, शरणवरणमधिकारिविशेषणं स्यात् तदा, * मोक्षयिष्यामि * इत्युक्तभगवदङ्गीकारानुपपत्तिरिति पूर्वोक्ताक्षेपेणोत्थानात्सङ्गतिः ॥

पूर्वस्मिन्नधिकारे वरणस्य विहितत्वात् साधन वमित्याशङ्कयाधिकारिविशेषणत्वेऽपि विध्युपपत्तेरहेतुकत्वोपपत्तिरित्युक्तम् । अस्मिन्नधिकारे वरणस्याधिकारिविशेषणत्वे विद्याधिगमाभावेन तद्रहितदुष्टचेतनस्वीकारो न संगच्छत इत्याशङ्क्य त्वाशब्देन तादृशचेतनोपस्थापनात् तदङ्गीकारो युज्यत इति परिह्रियते ॥

अत्रैवं संशयः; मन्त्रे शरणशब्दोपस्थापिनोपायत्वस्य निर्हेतुकत्वप्रतिपत्तिर्नास्ति, उतास्तीति । तदर्थं तदुपबृंहणे चरमश्लोके सिद्धोपायस्य निरपेक्षत्वस्वभावप्रतिपत्तिर्नास्ति: उतास्तीति । तदर्थं त्वाशब्दस्य विद्याधिगमरहितदोषदुष्टचेतनोपस्थापकत्वं नास्ति, उतास्तीति । तदर्थम् अर्जुनस्य दोषा न संभवन्ति, उत संभवन्तीति । तदर्थम्, दोषदुष्टगुणहीनचेतनाङ्गीकारे अतिप्रसंगदोषः अश्लेषविनाशश्रुतिविरोधश्च संभवति? उत नेति । तदर्थम् वात्सल्यस्य पूर्वाघविषयत्वम्, अश्लेषविनाशश्रुतेः प्रपन्नविषये सङ्कोचकप्रमाणान्तरं च नास्ति, उतास्तीति ॥

यदा नास्ति; तदा पूर्वाघस्य वात्सल्यविषयत्वाभावादतिप्रसंगः, अश्लेषविनाशश्रुतेस्सङ्कोचकाभावेन तद्विरोधश्चास्तीति, दुष्टगुणहीनचेतनाङ्गीकारानुपपत्तेः, अर्जुनस्य दोषगुणहान्योरभावेन त्वाशब्दस्य विद्यारहितदुष्टचेतनोपस्थापकत्वाभावात्, चरमश्लोके निरपेक्षत्वस्वभावासिद्धेः मन्त्रे निरपेक्षोपायत्वप्रतीतिसिद्धिरिति पूर्वपक्षे फलफलिभावः ॥

यदा च वात्सल्यस्य पूर्वाघविषयत्वं संभवति; यदा चाश्लेषविनाशश्रुतेः प्रपन्नविषयेऽमुख्यत्वकल्पनम्, प्रमाणान्तरं चास्ति, तदा, अतिप्रसंगश्रुतिबाधयोरभावेन दोषदुष्टविद्याहीनचेतनाङ्गीकारोपपत्तेः अर्जुनस्य दोषगुणहानिसंभवाच्च त्वाशब्दस्य दुष्टगुणहीनचेतनोपस्थापकतया चरमश्लोके भगवतो निरपेक्षोपायत्वस्वभावोऽवगन्तुं शक्यते इति तदुपबृंह्ये मन्त्रेऽपि तत्सिद्धिरिति राद्धान्ते फलफलिभावः ॥

पूर्वपक्षस्तु, यदि वरणमधिकारिविशेषणं स्यात्; तदास्य विद्याहीनत्वं स्यात् । तदभावेन च प्रारब्धेतराखिलपूर्वपापानां सत्वात् * मोक्षयिष्यामि * इत्युक्तभगवदङ्गीकारविषयत्वं व्याहन्येत । प्रत्युत, दोषगुणहान्योस्सत्त्वात् * क्षिपामि * इति संकल्पविषयत्वावहत्वमेव स्यात् । वरणस्य उपायत्वे तु विद्याधिगमसत्त्वेनोत्तरपूर्वाघयोरश्लेषविनाशविषयः * मोक्षयिष्यामि * इति संकल्प उपपद्यते । अन्यथा * एवं विदि पापं कर्म न श्लिष्यते * एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते * तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् * इति श्रुतिसूत्रयोः विद्याधिगमस्य मोक्षणार्थाङ्गीकारहेतुत्वावगमेन तद्बाधो दुर्वारः ॥

किं च वरणस्याधिकारिविशेषणत्वेन विद्यात्वाभावे * अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरम् * इत्यादि प्रतिपन्नं विधूननमपि शरणागतस्य न सिद्ध्येत् । अत्र विद्या-

प्रारम्भाभावेन तन्निष्पत्त्यभावात्, तस्य च प्रारब्धविद्यानिष्पत्त्यनन्तरभावित्वाच्च । एवम्, विधूननान्तरभाव्युपायनं च न स्यात् * तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति, अप्रिया दुष्कृतम् * इति प्रतिपन्नस्य विद्यामाहात्म्यकृतत्वात् । पूर्वोत्तरनाशप्रतिबन्धधूननोपायनहेतुर्विद्यामहात्म्यम् * इति श्रुतप्रकाशिका न चायं नियम उपासकमात्रविषय इति वाच्यम् । * विद्याप्राप्तिशब्दस्साधारण्येन प्रपदननिष्पत्तेरपि द्योतकः * इति श्रुतप्रकाशिकाकारवचनात् । अन्यथोत्क्रान्तिगतिफलक्रमविशेषाणामप्युपासकमात्रविषयत्वप्रसंगः । अतः शरणागतेरुपायत्वेन विद्यात्वमकामेनापि स्वीकार्यम् ॥

किंच शरणवरणस्य विद्यात्वाभावे अनादिकालोपचितानन्तपापानां तदवस्थत्वे न तादृशचेतनाङ्गीकारे सर्वेषामपि तादृशानां भगवदङ्गीकारप्रसङ्गः । न च प्रातिकूल्यव्यवसायनिवृत्तानां पापं न भगवदङ्गीकारप्रतिबन्धकमिति वाच्यम् । उपासकानामपि तावन्मात्रेणाङ्गीकारसंभवेनोपासनानुष्ठानवैयर्थ्यात् । न चाधिकारिविशेषणत्वेन शरणागतेरनुष्ठानमतिप्रसंगवारकमिति वाच्यम् । तस्याः कालुष्यशामकत्वे, आगतोऽस्मिन्मार्गे; तच्छामकत्वाभावे कालुष्ये सति कथमङ्गीकारस्सेत्स्यति । अतोऽतिप्रसङ्गो दुर्वारः । न च, शरणागतपापानां वात्सल्यविषयत्वात् भगवदङ्गीकारसंभवः । तस्योत्तराघविषयत्वात् । वात्सल्यं च दोषादर्शित्वम् । तच्चाश्लेषश्रुत्यर्थ एव । न चास्य तत्संभवः । विद्यारम्भाभावेन तदुत्तराघानामप्यभावात् । उत्तराघेऽप्यबुद्धिपूर्वको वात्सल्यविषयः * बुद्धिपूर्वकस्य तस्य प्रपत्त्या यत्पुनश्शरणं व्रजेत् * इति निष्कृतिवचनात् । यदि च, वात्सल्यं दोषभोग्यत्वम्, तच्च पूर्वाघविषयं च भवतीत्युच्यते; तदा तद्भोगसिद्धये बुद्धिपूर्वकमेव तत्करणापत्तिः; तस्य बुद्धिपूर्वाघविषयत्ववत् तत्पूर्वकोत्तराघविषयत्वे प्रायश्चित्तविधानानुपपत्तिश्च ॥

किंचाधिकारिविशेषणत्वेनाभिमतशरणवरणस्य पापानां वात्सल्यविषयत्वप्रयोजकत्वे सर्वहेतुकत्ववादापत्तिः । तदप्रयोजकत्वेऽतिप्रसङ्गोऽत्रापि समानः । न च, त्वाशब्दस्य विद्याहीनदुष्टचेतनोपस्थापकत्वम्, समर्पितभरस्य । अत एव अदुष्टस्य चेतनस्योपस्थापनात्; जितेन्द्रियप्रधानस्यास्तिकाग्रेसरस्य, केशवस्यात्मेति कृष्णस्य धारकत्वेन श्रुतस्यार्जुनस्य दोषासंभवेन त्वाशब्दस्यतद्विशिष्टोपस्थापकत्वासंभवाच्च । तस्मात् पापानां वात्सल्यविषयत्वे क्षमाविषयत्वे वा शरणागतिः प्रयोजिकेति तस्याधिकारिविशेषणत्ववादो निर्णिबन्धन इति ॥

अत्रोच्यते :

(पुरुषकारत्तुक्कुमुपायत्तुक्कुम वैभवमावदु—दोषत्तैयुम् गुणहानियैयुम् पार्त्तु उपेक्षियादवळवन्रिक्के अङ्गीकारत्तुक्कु अवैतन्नैये पच्चैयाक्कुग)—

यदुक्तं शरणागतेरधिकारिविशेषणत्वे विद्यासंबन्धाभावेन प्राचीनपापसत्त्वादीश्वराङ्गीकारो नोपपद्यत इति; तदयुक्तम् । उक्तप्रकारेण दोषगुणहान्योस्सत्त्वेऽपि न तयोः केवलमङ्गीकारप्रतिबन्धकभावः; अपि तर्हि तद्धेतुत्वमेवेत्यर्थः ॥

अयं भावः : यदुक्तं गुणहानावङ्गीकारे अश्लेषादिश्रुतिविरोधः, दोषसत्त्वेऽपि स्वीकारेऽतिप्रसङ्ग इति; तन्न, प्रातिकूल्यव्यवसायप्रतिनिवृत्तविषये तयोरङ्गीकारप्रतिबन्धकत्वादर्शनात् । तथात्वं च श्रुतिस्मृतिभ्यामवगम्यते । श्रुतिस्तावत्, तस्मादपि वध्यं प्रपन्नं न प्रति प्रयच्छन्ति * इति । स्मृतिश्च * वधार्हमपि

काकुत्स्थः कृपया पर्यपालयत् * अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना * दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम् * प्रपन्नं परिगृह्णामि सदोषं चाप्यहं मुने * इत्यादि । न चात्र सर्वत्र प्रपत्तेश्श्रवणात् न केवलं प्रातिकूल्य व्यवसायनिवृत्तिरिति वाच्यम्; तच्छ्रवणेऽपि तस्या अकिंचित्करत्वात् । प्रातिकूल्यनिवृत्तौ सत्यां शरण्यगुणानामेव हि स्वीकारप्रयोजकत्वम् । अत एव * क्षाम्यस्यहो तदभिसन्धिविनाश (राम) मात्रात् * इत्याद्युक्तिः । दयायास्तु, * प्राचीनासंख्येयजन्मसु महापराधकारिणि पश्चात्तनप्रातिकूल्यव्यवसायनिवृत्तिमात्रेण तदपराधाननन्ताननादृत्य तस्य निरतिशयसंपत्प्रदानाय स्वयमेव भगवान् प्रयतत इति सावकाशत्वम् । * इति श्रुतप्रकाशिका । * कृपया पर्यपालयत् * रक्षितव्यः कृतात्मना * सतामेतदगर्हितम् * इत्यादिना शरण्यगुणानां प्रयोजकत्वं हि श्रूयते । अत एव किरातादिषु प्रपत्त्यनुष्ठानाभावेऽपि तादात्विकप्रातिकूल्यनिवृत्तिमात्रमेव हि स्वीकारहेतुर्दृष्टः, अन्यथा, प्रपत्तेरङ्गीकारहेतुत्वे कृपादिगुणानामनवकाश एव स्यात् ॥

किंच * अपि वध्यम् * इत्यादौ प्रपत्तेरदोषनाशकत्वादविधात्वमेव प्रतीयते । न तावदिदं वाक्यं प्रपत्तिविधायकम्, * प्रपन्नं न परित्यजेत् * इति विधेः परित्यागनिषेधविषयत्वात् । प्रमाणान्तरसिद्धप्रपत्त्युपजीवनेन हि अयं निषेधविधिः । अप्राप्तस्य निषेधायोगात् * अपि वध्यम् * इति त्यागः प्राप्तिं सूचयति । ततश्चात्र वध्यताप्रपत्त्योरेकाधिकरणे समानकालीनत्वश्रवणात् प्रपत्तेर्दोषनाशकत्वं प्रतीयते । न च पूर्वम् वध्यम्, इदानीं प्रपन्नमिति योजना । अध्याहारापत्तेः । पूर्वस्मिन् काले वध्यस्येदानीं त्यागप्रसंगाभावेन तन्निषेधविधानायोगात् । त्यागात्यागहेतुद्वयसमुच्चये, अत्यागहेतुप्राबल्यं हि विध्यभिप्रायः । एवम्, प्रपत्तेः फलप्राप्तिप्रतिबन्धकनाशकत्वादर्शनात्; शरण्यगुण एव तत्र तत्र स्वीकारहेतुः ॥

न च, * एवं विदि पापं कर्म न श्लिष्यते * इत्यत्र विच्छब्देन प्रपन्नस्यापि विवक्षितत्वात् एतद्विरोधेनापि * वध्यम् * इति श्रुतिरन्यथानेयेति वाच्यम् । सावकाशनिरवकाशन्यायेन सावकाशश्लेषश्रुतेरेवान्यथा वर्णनीयत्वात् । अन्यथा * वध्यं प्रपन्नन् * इति प्रपत्तेः पापनाशकत्वाभावश्रुतिः स्वरूपेणैव बाधिता स्यात् । अतः अश्लेषादिश्रुतिः प्रपत्त्यंशे नियतपूर्वभावित्वमात्रविषया । प्रातिकूल्यनिवृत्तिमात्रसापेक्षशरण्यगुणेन स्वीकारस्यान्यथासिद्धत्वात् । यद्वा, प्रातिकूल्यव्यवसायनिवृत्तिमारभ्य * एष ह्येव साधु कर्म कारयति * इति शरणवरणस्येश्वरव्यापारत्वात् ईश्वरसाध्यत्वाभिप्रायेण वा * एवं विदि * इति प्रपत्तेस्साधनत्वनिर्देशः । ततश्च चेतनगतप्रपत्तेरप्रयोजकत्वम् * अपि वध्यम् * इत्यादिसूच्यत इति न श्रुत्योः परस्परविरोधः ॥

पूर्वस्मिन्नधिकारे प्रपत्तेः * क्षमिष्यामि इति संकल्पहेतुत्वेऽपि * क्षान्तम् इति संकल्पहेतुत्वाभावात् न मोक्षहेतुत्वमित्युक्तम् । अत्र * मोक्षयिष्यामि, इत्यत्रापि अन्यथासिद्धत्वादहेतुत्वमिति निर्हेतुकत्वं निष्कृष्यते । एवं प्रपत्तेः कालुष्यनिवर्तकत्वेन स्वीकारहेतुत्वाभावात् अत्र कालुष्यनिवर्तकत्वेन वात्सल्याद्युद्बोधनं पुरुषकारेण क्रियते । पुरुषकारेण वात्सल्याद्युद्बोधे सति उद्बुद्धवात्सल्यविषयतया अनुकूलवेदनीयेषु प्रपन्नपापेषु सत्सु नैषां फलं दास्यामीति यथार्थगर्भमीश्वरस्संकल्पं करोतीति । अत एव नोपासकेऽतिप्रसङ्गः । तत्रपुरुषकाराभावात् ॥

न चाश्रितदोषस्य भोग्यत्वे प्रपन्नेन पुनरनुष्ठानप्रसङ्गः । * लंङ्घयन् शूलमारोहेत् * इति निषेधविधिपर्यालोचनया ततो निवृत्त्युपपत्तेः । दोषादर्शित्वपक्षेऽप्ययं प्रसङ्गस्समानः । कामान्निदराङ्क यथेष्टप्रवृत्तौ

निवारकाभावात् । न च, * आश्रितवात्सल्यैकजलधे * इत्यादिप्रमाणसत्त्वात्तस्योत्तराघविषयत्वम् । उत्तराघाश्लेषस्य विद्याफलत्वेन वात्सल्यकृतत्वाभावात् । अश्लेषविनाशयोरदर्शनविस्मरणयोर्विद्याकार्यत्वेन पूर्वोत्तराघयोरनुकूलतया प्रतीतिरेव वात्सल्यफलम् । अन्यथा निर्विषयतापत्तेः । * आश्रितवात्सल्यैकजलधे * इत्याद्यपि तत्पापमात्रस्यासङ्कोचाद्वात्सल्यविषयतां वदति ॥

न च दोषभोग्यत्वे प्रमाणाभावः * स्तन्यं तद्विषसंमिश्रं रस्यमासीज्जगद्गुरोः * प्रपन्नं परिगृह्णामि सदोषं चाप्यहं मुने * अद्य जातं तु मलिनं वत्सं गौरिव धावति * इत्यादिसत्त्वात् । अतः संश्रितसकलपापं तद्देहादिकमपि वात्सल्यविषयम् । एवम्, भगवत्प्रीतिविषयाण्यपि कर्माणि चतुर्विंशतितत्त्वात्मकप्रकृतिनाशवत् प्राप्तिसमये एतदधिकारिप्रार्थनानुरोधेन विधूननपूर्वकं प्रियाप्रियगतानि क्रियन्ते ॥

ननु, उपासनसमाप्त्यनन्तरभाविनो विधूननस्य कथमत्र संभवः । विद्याया असत्त्वादिति चेत्; न । प्रपत्तिसाधनत्ववादेऽपि तस्यास्सकृत्त्वेन दर्शनपर्यन्तविद्यासमाप्त्यसंभवचोदनायास्तुल्यत्वात् । तत्पक्षे प्रपत्तिरङ्गि-विद्या–अस्मत्पक्षे साऽङ्गविद्येति वैषम्यमेव । तन्मते चेतनारब्धां प्रपत्तिविद्यां निदिध्यासनत्वाद्यवस्थामनापन्नामपि प्राप्तिविषये सकृदेव दर्शनाकारां करोति; अस्माकं तु प्रयोजयितृभगवद्व्यापारभूतां प्रपत्तिमन्तकाले स्वयमेव तादृशावस्थापन्नां करोति । तदुक्तम्, * अङ्कोलतैलसिक्तानां बीजानामचिराद्यथा । विपाकः फलपर्यन्त-स्तथात्रेति व्यवस्थितिः * इति । सात्वते च * दुष्टेन्द्रियवशाच्चित्तं नृणां यत्कलुषैर्वृतम् । तदन्तकाले संसिद्धिं याति नारायणालये * इति ॥

संग्रहश्च ;

नन्वस्याश्शरणागत्यास्त्वहेतुत्वं यदीष्यते । एवमेवं विदीत्युक्तपापहानिर्न सेत्स्यति ॥
मैवमस्या अविद्यात्वेऽपीशवात्सल्यवैभवात् । पूर्वोत्तराघयोर्नाशः प्रपन्नस्य भविष्यति ॥
'अपि वध्यं प्रपन्नं न प्रयच्छन्ती' ति च श्रुतेः । दोषो यद्यपि तस्य स्याद्धधाहमिति च स्मृतेः ॥
अस्मादेवंविदीत्येतत्फलं विद्यामपीक्षयेत् । यो 'ब्रह्मवेद ब्रह्मैव भवतीति' नयेन च ॥
अतः पुरुषकारोत्थवात्सल्यादिगुणो विभुः । प्रपन्नस्याघमखिलं गुणत्वेनैव मन्यते ॥
तस्मादुपासकेनैव वात्सल्यस्य प्रयोजनम् । न स्वैरता प्रपन्नस्य निषेधविधिसंभवात् ॥

यदुक्तमर्जुनस्य दोषासंभवात् न त्वाशब्देन दोषदुष्टचेतनोपस्थापनसंभव इति ; तदनूद्य परिहरति (जितेन्द्रियेत्यादि) * पाठक्रमादर्थक्रमो बलीयान् * इति तद्वाक्यमेतदधिकारसङ्गतं वेदितव्यम् ॥

इति प्रपन्नस्वरूपनिरूपणाधिकारः ॥१३॥

॥१४॥ अथ, प्रपत्तव्यगुणनिरूपणाधिकारः ॥

( इरण्डुमिरण्डुम् कुलैयवेणुमेन्निरुक्किलिरण्डुक्कुमिरण्डुमुण्डायृत्तदाम् )

गुणहीनदुष्टचेतनाङ्गीकारे सत्यसंकल्पादिगुणहानिस्स्यादिति पूर्वोक्ताक्षेपात् संगतिः ॥

पूर्वाधिकरणे वरणस्यासाधनत्वेन केवलमधिकारिविशेषणत्वे * मोक्षयिष्यामिपदोक्तस्वीकारानुपपत्ति-रित्याशङ्क्य * अपि वध्यं प्रपन्नम् * इत्यादि प्रमाणानुरोधेन त्वाशब्दस्य दोषदुष्टप्रपन्नोपस्थापकतया प्रपत्ते_रविद्यात्वम् अत एवेश्वरस्य गुणहीनदुष्टचेतनाङ्गीकारस्वभावत्वं चावगम्यत इत्युक्तम् । तर्हि, तत एवेश्वर-स्वभावात् अहंशब्दसूचितात्सत्यसङ्कल्पत्वात् विद्याविहीनदोषदुष्टपुरुषाङ्गीकारो न घटत इत्याशङ्क्य, मांशब्द-सूचितसुशीलत्वादिस्वभावपर्यालोचनयाऽस्मिन्नधिकरणे वरणस्य केवलमधिकारिविशेषणत्वमेव । न तु विद्यात्वमिति स्थाप्यते ॥

संशयस्तु, मन्त्रे भगवदुपायत्वस्य निर्हेतुकत्वप्रतिपत्तिर्नास्ति, उतास्तीति । तदर्थम्, तदुपबृंहणे चरमश्लोके ईश्वरस्य निरपेक्षत्वस्वभावोऽवगन्तुं न शक्यते उत शक्यते इति । तदर्थम्, वरणं साधनम्, उताधिकारिविशेषणमिति । तदर्थम्, अहंशब्दोपस्थापितसत्यसंकल्पत्वादेरसंकोचस्स्वीकार्यः ? उत सङ्कोच इति । तदर्थम् असंकोचस्वीकारे मांशब्दोपस्थापितवात्सल्यादीनामवकाशोऽस्ति, उत नास्तीति । यदाऽस्ति तदा अहंशब्दोक्तसत्यसंकल्पत्वस्यासंकोचे बाधकाभावात् वरणस्य साधनतया निरपेक्षत्व-स्वभावस्योपबृंहणे अप्रतीतेरुपायत्वं सहेतुकमिति पूर्वपक्षे फलति ॥

यदा, सत्यसङ्कल्पत्वस्यासङ्कोचस्वीकारे वात्सल्यादीनामवकाशो नास्ति; तदा, अहंशब्दोक्तसत्य-सङ्कल्पत्वस्य संकोचात् वरणस्याधिकारिविशेषणत्वेन गुणहीनदुष्टपुरुषाङ्गीकारस्वभावत्वमवगन्तुं शक्यते इति निर्हेतुकोपायत्वसिद्धिरिति सिद्धान्ते फलति ॥

पूर्वपक्षस्तु, यदि पापानामालयं शास्त्रविहितोपायमात्रशून्यं चेतनं पुरुषकारबलोद्भावितस्वातन्त्र्येण तदुद्भावितवात्सल्यविषयं कुर्वन्नीश्वरोऽङ्गीकुर्यात्; तदा, तस्य दोषगुणहान्योरापत्तिः । प्रथमं दण्ड्यादण्डिन ईश्वरत्वभङ्गः । * क्षिपामि * इति सङ्कल्पहानिः । दोषस्यादृतत्वात् । * यद्यदाचरति श्रेष्ठः * इति न्यायेन सर्वेषामपि तत्र प्रवृत्तौ सर्वनाशकत्ववैषम्यनैर्घृण्ययोरापत्तिः । दोषस्याभीष्टफलप्रदत्वौपयिकत्वेचतुर्विध-पुरुषार्थार्थिभिरपि तत्र प्रवृत्तौ तेषामनिष्टफलदाने च वञ्चकत्वादार्जवविश्वसनीयत्वादिभङ्गापत्तिः । शास्त्र-मर्यादाभञ्जनात्सत्यसङ्कल्पत्वहानिश्च । उपायाभावेऽपि तत्फलप्रदत्वे * प्राप्योऽहं नान्यथा प्राप्यः * इत्युक्त-सत्यसङ्कल्पहानिः, वैषम्यापत्तिश्च । एवम्, क्वचिदहेतुकफलप्रदत्वे क्वचिद्दुःखफलप्रदत्वमपि स्यात् । असत्यसंकल्पस्य नियततापत्तिश्च । न चोक्तसर्वदोषपरिहारः प्रपत्तेरधिकारिविशेषणत्वाभ्युपगमाद्भवतीति वाच्यम् । वरणस्य चेतनमतिपूर्वकत्वेन चेतनगतत्वे, तस्य चानिष्टनिवृत्तिपूर्वकेष्टप्राप्तिप्रयोजकत्वे, तथात्वस्य चानादिसङ्कल्पसिद्धत्वे अस्मदुक्ताशक्ताधिकारप्रपत्त्यन्तर्भाव एवेति तस्याधिकारिविशेषणत्वकथनमनर्थकम् । तस्य भगवन्मतिपूर्वकत्वेन भगवदीयत्वे, विद्यासमाप्तिरिव तत्प्रारम्भरूपप्रपत्तेरपीश्वरकृत्यत्वेन चेतन-गतत्वाभावादतिप्रसंगवारकत्वमपि न स्यात् । चेतनबुद्धिपूर्वकत्वे परं चेतनगतत्वम् । अतोऽतिप्रसंगादिकं न स्यादेव ॥

ननु, क्षिपामि इत्यादिसङ्कल्पस्य प्रातिकूल्यव्यवसितविषयत्वात् * प्राप्योऽहं नान्यथा प्राप्यः * नान्यः पन्थाः * इत्यादिसङ्कल्पस्य स्वतन्त्रचेतनविषयत्वाच्च, अभिमुखपरतन्त्रचेतने पुरुषकारवशाद्भगवतो रक्षकत्वे
॥

शास्त्रमर्यादा, भगवतो वात्सल्यादिगुणजातं च संरक्षितं भवेदिति चेत्, न । अभिमुखपरतन्त्रसंरक्षणसङ्कल्पस्यैच्छिकत्वे अनादिकृतमर्यादाभङ्गेनासत्यसङ्कल्पता । तत्सङ्कल्पस्याप्यनादित्वे, तत्राप्याभिमुख्यपारतन्त्र्यज्ञानयोश्चेतनमतिपूर्वकत्वे भक्तिप्रपत्त्योरिव तयोरपि हेतुत्वात्सहेतुता । ईश्वरमतिपूर्वकत्वे चेतनगतत्वाभावेनातिप्रसङ्गादिवारकत्वमपि न सिद्ध्येत् ॥

अतः, सत्यसङ्कल्पत्वादिवाचकाहंशब्दान्वयवैघट्यान्न वरणस्याधिकारिविशेषणत्वम् । अतः, शास्त्रमर्यादासिद्ध्यर्थम् ईश्वरस्येश्वरत्वादिसिद्ध्यर्थं च वरणस्य साधनत्वमभ्युपेत्यम् । एवं सति * नान्यः पन्थाः * इति भक्तिप्रपत्तिव्यतिरिक्तसिद्धसाध्यरूपसमस्तोपायान्तरनिषेधपरः, स्वतः प्राप्तसङ्कोचे बाधकाभावात् । उक्तातिप्रसङ्गादेव सिद्धोपायविधीनामपि साध्योपायविशिष्टपरत्वमिति न केवलं सिद्धोपायविधिसंभवः ॥

न चैवं सर्वत्र सापेक्षत्वे मांशब्दोपस्थापितवात्सल्यादिगुणहान्यापत्तिरिति वाच्यम् ; वात्सल्यस्य * दोषो यद्यपि तस्य स्यात् * इत्युक्तप्रकारेणाश्रितदोषादर्शनेनाङ्गीकारहेतुत्वात् ; सौशील्यस्य विश्वसनीयताहेतुत्वात् ; सौलभ्यस्य दुष्प्रापताशङ्कावारकत्वात् ; सार्वज्ञस्येष्टप्राप्त्यनिष्टनिवृत्तिपर्यालोचनाहेतुत्वात् ' परमकारुणिकत्वस्य * मित्रभावेन संप्राप्तम् * * यदि वा रावणस्स्वयम् * इत्युक्तप्रकारेणानन्तापराधिनोऽपि केनचिद्व्याजमात्रेण रक्षणोपयोगित्वात् ; कृपायाश्च, चेतनसत्तास्थित्योस्तदनुवर्तने, नित्यानुभवे, मुक्तानावृत्तौ, सामान्यसृष्ट्यादौ, स्वावतारे, शास्त्रप्रवर्तने, मोक्षश्रद्धायाम्, सुकृतविशेषे, निग्रहशमनोपायप्रदाने, उपायान्तरभङ्गभावे, उपायान्तरस्थाननिवेशे, व्याजमात्रेण संसारनिवर्तने, आर्तप्रपन्नस्य फलप्रदत्वे, बुद्धिपूर्वाघप्रायश्चित्तकल्पने, अकृतप्रायश्चित्तानामपि यमवश्यत्वविरहेण फलाविरोधेन यत्किञ्चिदुपद्रवकल्पने च हेतुत्वात् । अतःशरणागतेर्हेतुत्वाभ्युपगमेऽपि मांशब्दोक्तगुणानामक्षतेः वरणं नाधिकारिविशेषणमिति ॥

तत्राह :

( इरण्डुमित्यादि )

पुरुषकारोपायत्वयोः यद्यहेतुकत्वाङ्गीकारे ईश्वरत्वगुणहानेः मर्यादाभञ्जनेन दोषापत्तेश्च अङ्गीकारे दोषगुणहानिव्यतिरेकेण भाव्यमिति मन्येत : तदा, तयोः मांशब्दोक्तवात्सल्यादिगुणाभावः नैर्घृण्यादिदोषश्च स्यातामित्यर्थः ॥

अयं भावः: यदुक्तं वरणस्याधिकारिविशेषणत्वे गुणहीनदुष्टचेतनाङ्गीकारात् विधिनिषेधशास्त्रमर्यादाभङ्गः, * क्षिपामि * नान्यः पन्थाः * इत्यादिसत्यसङ्कल्पत्वभङ्गः, ईश्वरत्वादिगुणहानिश्च स्यादिति । तदेतत्सर्वं वरणस्याधिकारिविशेषणत्वाभ्युपगमात् परिहृतम् । न च वरणस्य चेतनमतिपूर्वकत्वे च तदभावे दोषस्योक्तत्वान्न तथात्वमिति वाच्यम् । चेतनमतिपूर्वकत्वेऽपि तस्य हेतुत्वप्रसङ्गाभावात् । मुख्यगौणसाधनद्वयरहितस्यात्यन्ताकिञ्चनस्य संरक्षणार्थं परमकारुणिकेनातिप्रसङ्गवारणार्थं किञ्चिद्व्याजीकृत्यानादिरक्षणसङ्कल्पकरणोपपत्तेः । अतः, परतन्त्राणां तदनुमत्यनुरोधेनासाधनमेव शरणवरणमि(म)ति प्रसङ्गवारणाय व्याजीकृत्य रक्षणेनासत्यसङ्कल्पत्वाद्यापत्तिः । व्याजमात्रेण फलप्रदत्वसङ्कल्पस्याप्यनादित्वात् ॥

नापि सहेतुकता, अहेतुकत्वे सत्यतिप्रसङ्गवारकत्वं व्याजत्वमिति व्याजेन सहेतुकत्वशङ्काया

व्याहतत्वात् । वरणस्येश्वरमतिपूर्वकत्वेऽपि नानुपपत्तिः । तस्य प्रथमप्रवृत्तेश्वरव्यापारतया चेतनगतफलसाधनत्वाभावेऽपि, अतिप्रसङ्गपरिहारत्वमुपपद्यते । यथा साधारणे द्रव्ये परानुमत्या राज्ञ उपायने दत्ते, प्रथमप्रवृत्तस्य तत्फलभागित्वे यदि प्रथमं प्रवृत्त औदार्यादनुमन्तुस्तत्फलं ददातीति तत्रानुमन्तुरंशे पूर्वं स्वाम्यसत्त्वात्, अनुमन्तृत्वाच्चातिप्रसङ्गः, दातुर्वैषम्यादिदोषश्च न संभवति; तथा अस्य ज्ञानचिकीर्षाप्रयत्नानामुभयकर्तृकत्वेनोभयसाधारण्यात् मोक्षार्थप्रथमप्रवृत्तेर्यादृच्छिकादिषु सुकृतत्वकल्पनरूपाया भगवदीयतया मोक्षार्थप्रवृत्तिमात्रस्य चेतनफलसाधनत्वाभावेऽपीश्वरस्य गुणाधिक्यादनुमन्तुश्चेतनस्याननुमन्तृत्वादिवैषम्यात् तस्य फलानन्वये स्वस्य फलित्वासंभवाच्च तत्फलं ददाति चेत्; कोऽत्रातिप्रसङ्गादिदोषः । कथं वा तस्य सर्वसमत्वहानिः कथं वा सहेतुकत्वशङ्कावकाशः । कथं वा चेतनस्य फलानन्वयप्रसक्तिश्चेति । अतो वरणस्याहेतुत्वेऽप्यतिप्रसङ्गादिदोषपरिहारसमर्थत्वान्न किञ्चिदपहीनम् ॥

यत एवमतिप्रसङ्गादिदोषाभावः, तत एव सिद्धोपायविधीनां साध्योपायनैरपेक्ष्येण स्वतन्त्रत्वात् * नान्यः पन्थाः * इत्यादिविधेस्सिद्धोपायातिरिक्तविषयत्वेन सङ्कोचस्सिद्ध्यति । * नान्यथा प्राप्यः * इति संकल्पोऽपि स्वतन्त्रचेतनविषय इति सेत्स्यति । * क्षिपामि * इति सङ्कल्पोऽपि न विद्याहीनमात्रविषयः । अपि तु तद्धीनप्रातिकूल्यव्यवसितविषयः । अतः अहंशब्दोपस्थापितसत्यसङ्कल्पत्वादेः, शास्त्रमर्यादास्थापकत्वादेश्च न विरोधः ॥

यदि शरणवरणमपि साधनमभ्युपगम्यते; तदा सर्वत्र सहेतुकत्वेन मांशब्दोपस्थापितवात्सल्यादिगुणानामनवकाशेनासिद्धिरेव स्यात् । न च वात्सल्यस्याश्रितदोषादर्शनेनाङ्गीकारहेतुत्वम् । साधनपक्षे—आश्रयणविरोधिपापानां पञ्चसंस्कारदीक्षाविधानादिना आत्मज्ञानेन च नष्टत्वात् तत्प्राप्तिप्रतिबन्धकानां विद्याधिगमेन नष्टत्वाच्च दर्शनीयपापाभावात् । सौशील्यमपि न विश्वसनीयताहेतुः भक्तस्यैव विश्वाससंभवात् । सर्वतपसामतिरिक्तत्वप्रमाणेन ततोऽपि महाविश्वाससम्भवाच्च । दुष्प्रापत्वशङ्काऽपि * नार्हन्ति शरणस्थस्य * इत्युक्तस्य न सम्भवतीति सौलभ्यमप्यफलम् । सर्वज्ञत्वस्यानिष्टनिवर्तनाद्युपयुक्तत्वेऽपि अत्र विशिष्य वेद्यत्वे प्रयोजनाधिक्याभावात् अघटितघटनासामर्थ्यस्य वेद्यत्वाभावेऽपि भक्तस्यैव नित्यसूरिसङ्घे स्थापनसम्भवात् ज्ञानशक्त्योश्च वैफल्यम् । स्वामित्वस्य * देहि मे ददामि ते * इति प्रकारेण इन्द्रादेरिव संबन्धाभावेऽपि फलप्रदत्वसंभवे अत्र वेद्यत्वविधानानुपपत्तिः । कारुण्यस्यापि * अतिरिक्तं तपः श्रुतम् * इति श्रुतस्य कौस्तुभादप्युत्कृष्टात्मसमर्पणस्य फल्गुत्वेन व्याजमात्रत्वायोगात् न फलदानौपयिकत्वमिति निष्फलत्वम् । चेतनसत्तास्थित्यनुवर्तनमुक्तानावृत्तिनित्यानुभवमहदादिसामान्यसृष्ट्यवतारादीनां कृपाकार्यत्वेऽपि अत्र विशिष्य वेद्यत्वे प्रयोजनाभावात्; अन्यथा उपासनेऽपि वेद्यत्वापत्तेः । तद्वेद्यत्वविधिर्व्यर्थ एव स्यात् । ततश्चाहेतुकमेव क्वचिद्रक्षकत्वाभावे वात्सल्यादिगुणानां तदुद्बोधकपुरुषकारस्य च विषयाभावादभावपर्यवसानं स्यात् । तत्प्रतिपादकशास्त्राणामप्रामाण्यं च स्यात् । एवं सर्वत्र व्याजत्वेऽपि प्रधानहेतुस्सहजकारुण्यादिकमिति चेत्; तर्हि स्वर्गादिप्रदत्वमपि तथा स्यात् । यागादेः फलसदृशत्वात् न तत्र कृपाया अवकाशः । मोक्षसाधनानां विसदृशत्वाद्विसदृशसाधनस्य निरतिशयफलप्रदत्वं दयादिकार्यमिति चेत्; तर्हि, भक्तावपि वात्सल्यादेरुपास्यतापत्तिः । यदि मुख्यसाधनफलस्य गौणसाधननिष्ठस्यापि प्रदाने दयाद्यपेक्षा, तदा, गौणकर्म-

स्वष्टकादिश्राद्धादिषु सर्वत्राराध्यदेवतागुणानुसन्धानस्याप्यङ्गत्वप्रसङ्गः । दयायाः प्रातिकूल्यव्यवसायनिवृत्तिमात्रविषयत्वप्रतिपादकश्रुतप्रकाशिकावाक्यविरोधश्च । क्वचिदहेतुकमेव रक्षणे परं कृपायास्सहजत्वं सिद्ध्यति । तथात्वे क्वचित्सिद्धे हि शास्त्रविहितहेतूनां व्याजत्वसिद्धिश्च ॥

किं च "माम्" इत्यत्रार्जुनसारथ्यवेषस्योपास्यगुणत्वेन विधानात्तत्पारतन्त्र्यस्य स्वातन्त्र्यकाष्ठारूपत्वात् स्वातन्त्र्यस्यापि वेद्याकारत्वमिति वाच्यम् । न च * संसरणे भगवत्स्वातन्त्र्यं प्रधानहेतुः कर्मादिकं सहकारि * इति वेदान्ताचार्यैरुक्तमिति वाच्यम् । * त्राणे स्वामित्वमौचित्यं न्यासाद्यास्सहकारिणः । प्रधानहेतुस्वातन्त्र्यविशिष्टा करुणा विभोः ॥ * इति तैरेवोक्तत्वात् ततश्च तस्य वेद्यत्वं वरणोपायत्वेन सिद्ध्यति । न च न्यासादिव्याजमात्रनिष्ठस्यानन्तस्थिरफलप्रदत्वं स्वातन्त्र्यकृत्यमिति वाच्यम् । क्षणार्धकृतपापस्य कल्पकोटिनियतानुभवेप्यनाद्यदुःखप्रदत्वेऽपि तस्य साधारण्यात् । अकल्याणगुणत्वाच्च रक्षणे न्यासापेक्षत्वेन कर्मपारतन्त्र्यमेवास्तीति कुतश्च स्वातन्त्र्यम् । ततश्च क्वचिदहेतुकत्वे (न) रक्षणे स्वातन्त्र्यसिद्धिः, तस्य कल्याणत्वसिद्धिश्च ॥

यद्यपि कर्मव्यवस्थायाः स्वातन्त्र्यकृतत्वात्तदनुगुणफलप्रदत्वमपि तत्कार्यम् । तथाऽपि, तस्य सुखदुःखसाधारण्यान्न कल्याणगुणत्वसिद्धिः । अतः * केवलं स्वेच्छयैवाहं प्रेक्ष्ये कंचित्कदाचन * इत्युक्तप्रकारेण स्वकृतमर्यादातिलङ्घनेन क्वचिद्रक्षकत्वे तस्य तथात्वं सिद्ध्येत् । एवम्, ज्ञानशक्त्यादीनां शिक्षारक्षोभयसाधारणानां क्वचिदहेतुकरक्षकत्वोपयुक्तत्वं स्वाभाविकम् । अन्यत्र दुःखप्रदत्वौपयिकत्वमौपाधिकमितीश्वरस्य कल्याणगुणस्वभावत्वं सिद्ध्येत् । अत ईश्वरस्य तद्गुणानां लक्ष्म्याश्च रक्षकत्वं स्वभाविकम्, शिक्षकत्वमौपाधिकमित्येतत् क्वचिन्निरुपाधिकरक्षकत्वे सिद्ध्यति । एवम् चेश्वरतद्गुणानां शिक्षारक्षयोरुपाधिसापेक्षत्वे तयोस्तन्निरपेक्षत्वे शिक्षाया निरुपाधिकत्वे, रक्षायास्सोपाधिकत्वे च कल्याणत्वं न सिद्ध्यतीति तत्सिद्ध्यर्थं शिक्षायामुपाधिसापेक्षत्वम्, रक्षयास्तन्निरपेक्षत्वं च वाच्यम्ः तदा च रक्षकत्वमेव स्वाभावः, शिक्षकत्वमौपाधिकम् । क्वचिद्रक्षणे उपाधिदर्शनं चेतनस्वभावकृतम्; तत्स्वभावश्च कर्तृत्वलक्षणस्वातन्त्र्यम्, सोपाधिकरक्षकत्वभ्रमश्च । तद्रहितेषु तन्निरुपाधिकरक्षकत्वं नित्येष्विव प्रवहिष्यतीति निरुपाधिकत्वमेव भगवतस्तत्त्वम् । तदुक्तम् * उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ * इति । अतः शरणवरणस्याधिकारिविशेषणत्वे अहंशब्दस्य बाधकत्वाभावात् प्रत्युत, साधनत्वे मांशब्दस्य बाधकत्वाच्च । वरणमधिकारिविशेषणम् । तस्मात् चरमश्लोकस्य भगवन्निरपेक्षस्वभावत्वावगमकत्वान्मन्त्र निरपेक्षत्वसिद्धिरिति ॥

अयमत्र संग्रहः :

गुणहीनस्य दुष्टस्य स्वीकारे स तथा भवेत् । ददामि न क्षमामीति सङ्कल्पस्य तथा विभोः ॥
वैषम्यादिप्रसङ्गश्च मर्यादायाश्च भञ्जनम् । अतो विद्याविनष्टार्थं चेतनं स्वीकरोति हि ॥
इत्येतन्न विभोर्दोषगुणहानिप्रसक्तितः । यदि कुत्राप्यहेतुत्वं त्राणे नाभ्युपगम्यते ॥
विभोः कारुण्यवात्सल्य सौशील्याद्या महागुणाः । असत्कल्पा भवेयुस्ते विषयालाभतः परम् ॥

कृतप्रतिकृते लोके गुणत्वं नैव दृश्यते । दुष्टदुःखिपरित्यागे निर्घृणत्वादिकं भवेत् ॥
अङ्गीकारे सदोषाणां वैषम्यादिप्रसञ्जनम् । श्रयद्विशेषणीभूतप्रपत्त्यैव निवारितम् ॥
यद्यप्यहेतुककृपाफलमेषां श्रियःपतेः । तथाऽप्यत्रानुमन्तृत्वाच्चेतनस्य च तद्गता ॥
सङ्कल्पासत्यतादेश्च परिहारतया मता ॥

इति द्वितीयप्रकरणे प्रपत्तव्यगुणनिरूपणाधिकारः ॥ १४ ॥

॥ १५ ॥ अथ शोकनिवृत्तिकारणचिन्ताधिकारः ॥

इरण्डुम् कुलैन्ददेन्निरुक्किलित्तलैक्किरण्डुमुण्डायृत्तताम् ।

यदि, मांशब्दविहितवात्सल्यादिगुणानुपपत्त्या वरणस्यासाधनत्वम् । तर्हि * मा शुचः * इति शब्देन कृतकृत्यत्वविधानानुपपत्त्या हेतुत्वसिद्धिः किं न स्यादिति शङ्कया संगतिः ॥

संशयस्तु, मन्त्ररत्ने उपायत्वस्य निर्हेतुकत्वप्रतिपत्तिर्नास्ति, उतास्तीति । तदर्थम् तदुपबृंहणे चरमश्लोके * मोक्षयिष्यामि * इति भगवतः स्वीकृतभरत्वं भरसमर्पणस्यानुपायतां नावगमयति, उतावगमयतीति । तदर्थम् * मा शुचः * इत्यत्र शोकनिवृत्तिहेतुत्वेनोपायांशे कृतकृत्यत्वमभिप्रेतम्, उत चेतनस्य स्वप्रवृत्त्यनर्हत्वम्, ईश्वरस्य तत्कार्याधिकृतत्वं च हेतुत्वेनाभिप्रेतमिति । तदर्थम्, * तस्यैवं विदुषः * इत्यादिका पुरुषविद्या, उपायांशे कृतकृत्यत्वानुसन्धानपरा, उत यज्ञाद्यनुष्ठानस्थाननिवेशेनोपासकावयवेषु अहरहस्तदङ्गानुसन्धानपरेति । तदर्थम्, कृत्योपायकृतत्वाभिप्राये या (उपायकृतकृत्यत्वाभिप्राये) उपबृंहणमाहात्म्यमस्ति, उत नास्तीति । यदाऽस्ति; तदा, उपबृंहणसध्रीचीनायाः श्रुत्याः उपायांशे कृतकृत्यत्वाभिप्रायत्वात् * मा शुचः * इत्यस्यापि तदभिप्रायत्वेन वरणस्योपायतावगमकत्वात्, स्वीकृतभरत्वमनुपायतावगमकं न भवतीति, वरणस्योपायत्वान्न मन्त्रे निर्हेतुकत्वप्रतीतिः ॥

यदा च पुरुषविद्यायाः कृतकृत्यत्वपरत्वे उपबृंहणसाचिव्यं नास्ति, तदा तस्या अन्यपरत्वेन मा शुच इत्यत्र कर्तव्योपायस्य कृतकृत्यत्वाभिप्रायत्वे मानाभावात् वरणस्याधिकारिविश्वासोत्तम्भकत्वात् स्वीकृतभरत्वमनुपायत्वद्योतकं भवतीति चरमश्लोके नैरपेक्ष्यप्रतीतेः मन्त्रप्रतिपन्नमुपायत्वं निर्हेतुकमिति सिद्ध्यति ॥

पूर्वपक्षस्तु: वरणस्याधिकारिविशेषणत्वमनुपपन्नम्: समभिव्याहृतस्य * मा शुच * इत्यस्यान्वयवैघट्यात् । तत्र हि शोकनिवृत्तिहेतुत्वेन उपायांशे कृतकृत्यत्वमभिप्रेतम् । सुदुष्करोपायविधानात् शोचन्तं प्रति वरणे सकृत्त्वविधानस्य तन्निवृत्त्यपेक्षितत्वात् । एकशब्दादिना इतरनिरपेक्षत्वविधानेऽपि वरणस्यास्यावृत्तिरूपत्वेन दर्शनपर्यन्तत्वशङ्काया निवारकाभावात् ॥

न च, त्वाशब्दे स्वप्रवृत्त्यनर्हत्वस्य विवक्षिततया कर्तव्योपाये तवानर्हत्वात्, तत्र ममाधिकृतत्वाच्च, * मा शुचः * इति तात्पर्यं किं न स्यादिति वाच्यम् । तैत्तिरीयके प्रपत्तिविधानानन्तरम् * तस्यैवं विदुषः * इति वाक्ये पूर्वोक्ताधिकारिणः कृतकृत्यत्वविधानेनात्रापि स्थानप्रमाणेन * मा शुच * इत्यस्यापि तत्परत्वात् ।

न च, पुरुषविद्याया यज्ञादिप्रतिनिधित्वेनाङ्गतयाऽहरहरनुष्ठेयत्वात् न नैर्भर्यपरत्वमिति वाच्यम् । पूर्वानुवाके विहिताया न्यासविद्यायाः * सकृदेव हि शास्त्रार्थः कृतो यं तारयेन्नरम् * सकृदेव प्रपन्नाय * इत्यादिना सकृत्त्वविधानेनासकृदावृत्ततया पुरुषविद्या न तत्राङ्गम् । किं च प्रपत्तेरानुकूल्यसंकल्पादिव्यतिरेकेणाङ्गान्तरासहत्वाच्च पुरुषविद्याङ्गत्वानुपपत्तिः ॥

न च वेदान्तविहितविद्यात्वेन * विकल्पोऽविशिष्टफलत्वात् * इति न्यायविषयत्वेनाविशिष्टफलतया गुरुलघुविकल्पायोगेन विद्यान्तरोक्तावृत्त्यादिप्राप्तिः न्यासविद्यायामप्यविशिष्टेति वाच्यम् । * न हि वचनविरोधे न्यायः प्रभवति * इति न्यायेन सकृत्त्वस्य वचनसिद्धतया तत्रावृत्त्यादिप्रसञ्जकन्यायानामप्राप्तेः । तदुक्तं श्रुतप्रकाशिकायाम् * यद्यपि साक्षात्काररूपत्वभक्तिरूपत्वादिपराणां वाक्यानां विद्याविशेषप्रकरणगृहीतत्वेऽपि सर्वोपासनसाधारणत्वं गुरुलघुयत्नविकल्पानुपपत्तेः प्राप्तम्; तथाऽपि प्रपदने तु लघुगुरुविकल्पानुपपत्तिरूपन्यायो वचनबलप्रतिक्षिप्तः । * न हि वचनविरोधे न्यायः प्रभवति' वचनविरोधाभावादुपासनेषु तस्य प्रवृत्तिः * इति । अतः, न्यासविद्यायास्सकृत्त्वादसकृदात्मकत्वेन न तत्र पुरुषविद्याया अङ्गत्वम् । अपि तर्हि निर्भरत्वानुसन्धानपरत्वमेव ॥

किं च * अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति * इति स्मृतौ प्रपत्तिविधानानन्तरं कृतकृत्यत्वविधानेन अत्रापि स्थानप्रमाणेन पूर्वानुवाकस्य न्यासविधायकत्वेनात्र कृतकृत्यत्वविधानस्योचितत्वात् । तस्मात्सर्वत्र प्रपत्तिविधानानन्तरं तदनुष्ठातुरुपायांशे कृतकृत्यताविधानात् उपायान्तरदुश्शकत्वकृतशोक(स्य)निवृत्तेः, वरणमात्रोपदेशेनानिवृत्तेश्च । मा शुचः इत्यस्योपायांशे कृतकृत्यताभिप्रायत्वात्; तदन्वयवैघट्येन वरणं नाधिकारिविशेषणम्, अपि तु साधनमेवेति ॥

अत्राह:

(इरण्डुमित्यादि)

"वरणस्य साधनत्वादेव हि 'मा शुचः' इत्यस्य साधनानुष्ठानांशे कृतकृत्यता विधीयते. अतस्तस्य साधनत्वात्तदनुष्ठानेन मम दोषगुणहान्योर्हानिर्जाता । अतः परमहं निर्भरो निर्भयोऽस्मि" इति चेन्मन्यसे; तदा स्वकृतभरसमर्पणस्य ईश्वकृतभरस्वीकारस्य च प्रच्युतत्वात् दोषगुणहानियुक्तपूर्वावस्थैव स्यादित्यर्थः ॥

अयं भावः; अस्य भरो नाम भक्त्याद्युपायान्तरानुष्ठानम् * त्वमेवोपाय भूतो मे भव* इति, उपायान्तरस्थाननिवेशनप्रार्थनेन तस्य तथात्वात् । भरसमर्पणं च न भरो भवितुमर्हति, येन. स्वकृत्योपायस्य कृतत्वसंभवः । ततश्च, यदि स्वानुपायमेवोपायसमर्पणमुपायानुष्ठानत्वेन बुध्येत: तदा भरस्य समर्पितत्वमनुष्ठितत्वं च विरुद्धमिति समर्पणं प्रच्युतं भवेत् । स्वभरानुष्ठानासामर्थ्यात् मयि भरे न्यस्ते सति मया च तं स्वीकृत्य तस्मिन्नधिकृते सति पुनर्दुर्वासनावशादनुष्ठितभरसमर्पणमेव स्वोपायकृत्यत्वेन मत्वा कृतघ्नस्सन् स्वात्मानमनुष्ठितोपायं मनुते, तस्मादयं भरस्त्यक्तव्य इति स्वीकृतोपायस्य त्याग एव प्रसज्येतेति पूर्वावस्थैवापद्येतेति ॥

यदुक्तम्, * मा शुचः * इत्यस्य स्वकृत्योपायस्य कृतत्वाभिप्रायत्वाद्धरणस्य साधनत्वसिद्धिरिति । तदयुक्तम् । तस्योक्ततात्पर्यकत्वे कल्पकाभावात् । न च शोकनिवृत्तिः कल्पिका । सर्वधर्मपरित्यागाङ्गत्वेन एकशब्दोक्तस्वीकारानुपायत्वबुद्धिसंस्कृतेन प्रकृतस्वीकारेण विशिष्टस्य * त्वाशब्दोपस्थापितत्वात् स्वप्रवृत्त्यनर्हत्वं प्रकृतम् । * मोक्षयिष्यामि * इत्यत्र भगवतश्चेतनकृत्याधिकृतत्वं चोक्तम् । अतः प्रकृतयोः स्वप्रवृत्त्यनर्हत्वचेतनकार्याधिकृतत्वयोश्शोकनिवृत्तिहेतुत्वेन विवक्षितत्वोपपत्तेः । तस्यान्यथासिद्धत्वात् । पूर्वं स्वकृत्यस्य भरस्य भगवति समर्पितत्वेन कृतकृत्यत्वासिद्धेश्च ॥

ननु, स्थानप्रमाणेन एतदुपबृंहणश्रुतौ पुरुषविद्यायां कृतकृत्यत्वस्योत्तरकृत्यत्वेनोक्तत्वात् शोकनिवृत्तिहेतुत्वं कृतकृत्यत्वस्य श्रुतिसिद्धमिति प्रकृतत्वलिङ्गमात्रं श्रुत्या बाधितमिति चेत् न; तस्याः प्रकृतन्यासविद्याङ्गभूतयज्ञाद्यनुष्ठानप्रतिनिधित्वेनोपासकशरीरावयवेषु यज्ञावयवकल्पनेनासकृदावृत्तानुसन्धानपरत्वात् ॥

न च * सकृदेव पन्नाय * इति स्मृतिवचनात्, श्रुतप्रकाशिकावचनाच्च पूर्वप्रकृतन्यासविद्याया अनावृत्तेरुक्तत्वात् पुरुषविद्या नाङ्गविद्येति वाच्यम् । स्मृतिवचनश्रुतप्रकाशिकावाक्ययोष्षडङ्गप्रपत्तिविषयत्वात् । * ब्रह्मणे त्वामहस ओम् इत्यात्मानं युञ्जीत * इति पूर्वानुवाकविहिताया वसुरण्यादिप्रणवान्तमन्त्रकत्वेन षडङ्गयोगभिन्नत्वस्योत्तरत्र वक्ष्यमाणत्वाच्च । पुरुषविद्याङ्गत्वेन कृतकृत्यत्वविधानपरत्वाभावात् * तैत्तिरीयाम्नाता पुरुषविद्या ब्रह्मविद्याङ्गम् * इति भाष्यकारवचनाच्च ॥

न च, अङ्गशब्दो विद्याङ्गभूतार्थवादभागपरः । विद्याशब्दाङ्गशब्दयोरस्वारस्यापत्तेः । * ब्रह्मप्राप्तिरेवात्र फलम् * इति भाष्यविरोधश्च । किं च पुरुषविद्याया उपासनात्मकत्वाभावे अङ्गोपसंहारार्थभेदचिन्तनमनर्थकमापद्येत । * यन्मरणं तदवभृथः * इति पुरुषविद्याया आप्रयाणं विद्यान्तरवदहरहरनुष्ठेयत्वं शब्दादेवावगम्यत इति । पूर्वानुवाकोक्तन्यासलक्षणब्रह्मविद्याया विलम्बाक्षमाधिकारत्वात् विलम्बाक्षमस्य भगवदनुभवशिथिलीकृतबाह्यान्तःकरणत्वात् * सहकारित्वेन च * इति यज्ञाद्यनुष्ठानाभावे विद्यानिष्पत्त्यनुपपत्तेश्च । उपासकावयवेषु यज्ञाङ्गपरिकल्पनं तदनुष्ठानप्रतिनिधित्वेन विधीयते । यज्ञादिचाप्रयाणादहरहरनुष्ठेयमितीयमप्यहरहरनुष्ठेया ॥

किं च * इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयते * इति भाष्यग्रन्थे * पुरुषविद्यायामपि चेतरेषमनाम्नानात् * इत्यधिकरणचिन्तितयोः तैत्तिरीयकछान्दोग्यपुरुषविद्ययोः छान्दोग्यपुरुषविद्यावत्, तैत्तिरीयकपुरुषविद्याप्युपासनरूपेत्यवगम्यते । एवम्, पुरुषविद्याया उपासनात्मिकाया उपासनरूपन्यासविद्याङ्गत्वात्, यज्ञाद्यनिष्ठानप्रतिनिधित्वेनाप्रयाणादहरहरनुष्ठेयत्वाच्च न कृतकृत्यतानुसन्धानपरत्वमिति ॥

न च, * अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति * इति वचने प्रपत्तिविधानानन्तरं कृतकृत्यताविधानात्, स्थानप्रमाणेनात्रापि पूर्वोत्तरानुवाकयोस्तथात्वं प्रत्यभिज्ञायत इति वाच्यम्; तत्र कृतकृत्यत्वस्योपायांशे कृतकृत्यतापरत्वाभावात्; किं तु नित्यनैमित्तिकांशे कृतकृत्यता हि तत्र विधीयते; उक्तवचनस्य सामान्यस्य * छागपशुन्यायेन * देवर्षिभूतात्मनृणाम् * इत्यादिविशेषवचने पर्यवसानात् । यथा * तेषां राजन् सर्वयज्ञास्समाप्ताः । * इति वचनस्येवास्यापि तत्र

पर्यवसानात् । ततश्च, ऋणत्रयापाकरणाभिप्रायं कृतकृत्यत्ववचनमिति न तदनुरोधेनोपायांशे कृतकृत्यत्वसिद्धिः । तस्मात् * मा शुचः * इत्यस्योपायांशे कृतकृत्यताविधानपरत्वाभावात् स्वकार्ये स्वस्यानधिकृतत्वम् । तत्र भगवतोऽधिकृतत्वमेव शोकनिवृत्तिहेतुत्वेन विवक्षितम् । अन्यथा, भरसमर्पणस्य स्वकृत्यत्वाभावेऽपि समर्पणमात्रात् कृतकृत्यताभिमाने स्वानुष्ठितभरसमर्पणम्, भगवदनुष्ठितभरस्वीकारश्च, प्रच्युतो भवेत् । तस्मात् वरणस्याधिकारिविशेषणत्वे * मा शुचः * इत्यस्य बाधकत्वाभावात् वरणमधिकारिविशेषणमिति सिद्ध्यति ॥

एवम् * मा शुचः * इत्युक्तेश्वराभिप्रायरूपतत्स्वभावपर्यालोचनया चरमश्लोके निरपेक्षत्वप्रतीतेः मन्त्रेऽवगतमुपायत्वं निर्हेतुकमिति ॥

संग्रहः ;

श्लोके शोकनिवृत्तिश्चेत्कृतकृत्यत्वतत्परा । कृत्यं भक्त्याद्यनुष्ठानं न भरस्य समर्पणम् ॥
अतोऽकृत्यकरे स्वस्मिन् कृतकृत्यत्वमानतः । समर्पणश्च स्वीकारः प्रच्युतो भवति ध्रुवम् ॥
तस्माच्छोकनिवृत्त्यर्थं प्राप्तः कारुणिकस्सदा । शक्तस्त्वद्रक्षणोद्युक्तो यतोऽहमखिलेश्वरः ॥
अतोऽनधिकृतश्चासि प्राप्तौ नार्हसि शोचितुम् । ‡ इत्युक्तवान्यतोऽतश्च पदं 'मा शुच' इत्यपि ॥
श्रुत्या पुरुषविद्यायां कृतकृत्यत्वबोधनात् । अनेनेति स्मृतौ चापि कृतकृत्यत्वमुच्यते ॥
वरणस्यानुपायत्वे तन्न सिद्धं भवेत्ततः । वरणस्याप्युपायत्वं वक्तव्यमिति चेन्न तत् ॥
प्रपत्तेरनुपायत्वं व्यनक्तीति सतां मतम् । यतः पुरुषविद्या च यज्ञप्रतिनिधिः श्रुता ॥
कृतकृत्यस्मृतिश्चापि अनृणत्रयगोचरा । तस्मात् क्वापि प्रपन्नेस्मिन् कृतकृत्यविधिर्न च ॥

ननु, * भगवति हरौ पारं गन्तुं भरन्यसनं कृतं परिमितसुखप्राप्त्यै कृत्यं प्रहीनमकृत्यवत् ।
भवति च वपुर्वृत्तिः पूर्वं कृतैर्नियतक्षमा परमिह विभोराज्ञासेतुर्बुधैरनुपाल्यते ॥ *

इति प्रपत्तावनुष्ठितायामुपायांशे कृतकृत्यत्वानुसन्धानम्, वेदान्ताचार्योक्तं कथं संगच्छत इति चेन्; तस्य षडङ्गयोगभूतसाधनप्रपत्तिपरत्वात् शरणागतेस्तद्भेदस्य वक्ष्यमाणत्वाच्च ॥

इति शोकनिवृत्तिकारणचिन्ताधिकारः ॥ १५ ॥

इति श्रीवचनभूषणस्य विरोधिपरिहारे प्रथमस्य परिच्छेदस्य द्वितीयं प्रकरणम् ।

॥ १६ ॥ अथ देशकालादिनियमाभावाधिकारप्रारम्भः ॥

एवम् द्वितीयप्रकरणे प्रथमाधिकारे, * व्रज * इति विध्युत्था शङ्का परिहृता । द्वितीये * मोक्षयिष्यामि * इति पदोत्था । तृतीये * अहं शब्दोत्था । चतुर्थे * मा शुचः * इति शब्दोत्था । एवमधिकारचतुष्टयेन वरणस्याधिकारिविशेषणत्वस्थापनमुखेन निर्हेतुकत्वं स्थापितम् । तदेव निर्हेतुकत्वम् ।

पा. ‡ इत्युक्तवान्यतश्चेशः श्लोके मा शुच इत्यपि ।

तृतीयचतुर्थप्रकरणाभ्यामपि मुखभेदेन स्थाप्यते. ॥

द्वितीयप्रकरणे विधेरधिकारिविशेषणविषयत्वाद्गुणाभावदोषयोस्सतोरपि तदनादरेणार्जुनादीनामङ्गीकारदर्शनात्, प्रत्युत दोषगुणहान्योः भोग्यत्वेन स्वीकृत्य विषयीकारस्वाभाव्यात्, सौशील्यवात्सल्यकारुण्यादिकल्याणगुणयुक्तत्वस्वाभाव्यात्, स्वीकृतचेतनकृत्यत्वप्रदर्शनेन शोकनिवर्तकत्वस्वाभाव्याच्च वरणस्याहेतुत्वमिति प्रपत्तव्यस्वभावपर्यालोचनया समर्थितम् ॥

इतः परं प्रपत्त्यनुबन्धिदेशकालाद्यनियमस्वभावपर्यालोचनयापि तदेव समर्थ्यते ॥

यद्यपि प्रपत्तिस्वरूपपर्यालोचनानन्तरं प्रपत्तव्यस्वरूपनिरूपणं कार्यम् । तथापि, श्रीनारायणशब्दार्थयोः पुरुषकारोपायस्वरूपसंबन्धिनोः निरूपणानन्तरं तत्संबन्धभूतस्य मतुप्प्रत्ययार्थस्य निरूपणमन्तरङ्गमिति, तन्निरूपणमुखेन वरणस्याहेतुत्वमुच्यते ॥

पूर्वम्, अधिकारचतुष्टयेनाप्यस्य वरणस्याधिकारिविशेषणत्वस्थापनात् विधिरधिकारिविशेषणविधिरिति प्रधानविधिनिरूपणं कृतम् । इदानीं, प्रधानभूतानुबन्धविधिर्निरूप्यत इति वा सङ्गतिः ॥

प्रथमे श्रीशब्दार्थः, द्वितीये नारायणवरणशब्दार्थः, तृतीये मतुप्प्रत्ययार्थः, चतुर्थे क्रियाशब्दार्थः, आहत्य प्रकरणचतुष्टयेनार्थचतुष्टयनिरूपणमुखेन परिच्छेदमात्रानुयायिशरणशब्दार्थो निर्हेतुक इति निरूप्यते. । वरणस्योपायत्वे पुरुषकारस्यापि व्यर्थत्वात् । पुरुषकारप्रकरणमप्युपायतानिर्हेतुकत्वौपयिकमिति, परिच्छेदमात्रं निर्हेतुकोपायत्वपरमिति वा योजनीयम् । कालानियमपरस्य च मतुप उपलक्षणत्वात् । अत्र देशाद्यनियमोऽपि निरूप्यते । कर्माद्यनुष्ठाने कालस्याभ्यर्हितानाङ्गत्वात् । तदनियमे देशप्रकाराद्यनियमोऽप्यर्थसिद्ध इति वा देशाद्यनियमस्य मतुबर्थत्वेन वर्णनम् । पूर्वम् * अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् * इति प्रकृतत्वात् तत्र नियतमन्त्रकत्वप्रतीत्या कालादिनियतत्वमपि प्रत्यभिज्ञाप्यते । ततश्च, नियतपरिकरस्य कथमहेतुत्वमिति शङ्कया चरमाद्याधिकारयोस्सङ्गतिः ॥

वरणस्याधिकारिविशेषणत्वे सिद्धोपायाङ्गत्वे वा व्याजमात्रत्वमुक्तं भवति । सहेतुकत्ववादिभिरपि तस्य व्याजत्वमेवोच्यते । अत एवोक्तं वेदान्ताचार्यैः * प्रपत्तेर्व्याजमात्रत्वम् * इति । ततश्च यया कयाचिद्विधया यत्किंचिच्चेतनव्यापारसापेक्षत्वेऽपि न निर्हेतुकत्ववादसिद्धिरित्याशङ्कायाम्, अधिकारिविशेषणत्वे स्वरसात्, द्वितीयप्रकरणे सिद्धोपायाधिकारत्वेन स्थापितस्य वरणस्यास्मिन् तृतीयप्रकरणे फलप्रपत्तित्वं प्रसाध्यते । देशकालादिनियतसाधनप्रपत्तिभूतषडङ्गयोगभेदसाधनमुखेन देशाद्यनियता शरणागतिः फलरूपेति वर्ण्यते ॥

## प्रपत्तिक्कु देशनियममुम् कालनियममुमिल्लै ।

अयमत्र संशयः । मन्त्ररत्ने भगवदुपायतानिर्हेतुकत्वावगमो नास्ति, उतास्तीति । तदर्थम्, शरणागतेः फलरूपत्वं न संभवति, उत संभवतीति । तदर्थम् देशादिनियमाभावविधिर्नास्ति, उतास्तीति । तदर्थम् तदस्तित्वे देशकालनियमानियमविध्योरेकत्रोपसंहारस्संभवति, उत न संभवतीति । तदर्थम्, अनियम-

विधेरापद्विषयत्वं वा, अमन्त्रकप्रपत्तिविषयत्वं वा, तान्त्रिकमन्त्रकप्रपत्तिविषयत्वं वा संभवति, उत न संभवतीति ॥

यदा न संभवति, तदा नियमानियमविध्योरेकत्रोपसंहारसंभवान्न तयोर्विद्याभेदकत्वम् । यदा चानियमविधेरेवासंभवः तदा न सुतरां विद्याभेदसिद्धिरिति पूर्वपक्षे फलफलिभावः । यदा चानियमविधिस्संभवति; यदा च तस्यापदादिविषयत्वं च न संभवति; तदा नियमानियमविध्योरेकत्रोपसंहारस्याशक्यत्वात् विद्याभेदसिद्धौ फलप्रपत्तिसिद्धिरिति राद्धान्ते फलफलिभावः ॥

पूर्वप्रकरणे चरमाधिकारे चरमश्लोकचरमपदार्थो निरूपितः । अत्र प्रथमाधिकारे चरमश्लोकप्रथमपदार्थो निरूप्यते । * सर्वधर्मान्परित्यज्य * इत्यत्र सर्वशब्दार्थभूतानुबन्धिदेशकालप्रकाराधिकारिणां सवासनपरित्यागस्याङ्गत्वेन प्रतिपादनात् मन्त्रस्थमतुप्प्रत्ययः कालानियतिपरः प्रथमपदेनोपबृंहितो भवतीति मतुप्प्रत्यये लक्षणया अर्थतो वा देशकालप्रकारादीनामप्युपस्थितेः उपबृंहणानुरोधेन मतुप्प्रत्ययार्थतया देशकालप्रकाराधिकार्यनियमोऽत्राधिकारत्रयेण निरूप्यते ॥

पूर्वपक्षस्तु; प्रपत्तेः देशकालनियमाभावोऽसिद्धः । * पुण्येऽनुकूले समये देशे भागवतोत्तरे । निमज्ज्य नियतस्तीर्थे प्रणिपत्याश्रयेद्गुरुम् । * द्वादश्यां श्रवणे वापि कस्मिंश्चिद्वैष्णवे दिने । अनुकूलेऽहनि शुभे * इत्यादिषु देशकालाङ्गत्वं हि प्रतिपाद्यते । यत्साङ्गम् तत्साधनम् * इति हि व्याप्तिः ॥

ननु, * स एष देशः कालश्च * इत्यादीनां तन्नियमाभाववचनानामपि सत्त्वात् नियमानियमयोरेकत्रोपसंहारस्याशक्यत्वात् विद्याभेदसिद्धिः । तत्र नियमसापेक्षा साधनप्रपत्तिः । तन्नियमनिरपेक्षा फलप्रपत्तिरिति सिद्ध्यतीति चेत् न; अनियमवचनानां प्रपत्तिवैभवपरत्वेनार्थवादत्वात् । अनियमस्य स्वतः प्राप्तत्वेन विधेयत्वासंभवाच्च । तथा हि — तत्र किं कर्तव्यताबोधने विधिव्यापारः? उताज्ञातज्ञापनमात्रे । नाद्यः' प्रपत्तिगतदेशकालनैरपेक्ष्यस्य यत्नागोचरत्वात् । न च तद्विधेर्विशिष्टदेशकालत्यागे तात्पर्यम्, अपसिद्धान्तात् । तथाऽनुष्ठानादर्शनाच्च । न द्वितीयः, तदविधानादेव त रपेक्ष्यसिद्धेः, तज्ज्ञानस्याविधेयत्वात् ॥

ननु, भक्त्यादिवदस्या अपि श्रेयस्साधनतया देशकालविशेषाङ्गकत्वप्राप्तौ तन्नैरपेक्ष्यं विधीयत इति चेत्; तर्हि, तद्विधानानर्थक्यपरिहाराय देशकालनैरपेक्ष्यज्ञानमङ्गमित्युक्तं स्यात् । तथा सति प्रतिज्ञाव्याघातः; तस्मात् देशाद्यनियमविधेरसंभवात्तद्वचनमर्थवादमात्रम् । अस्तु वा तद्विधिसंभवः । तथापि न विद्याभेदसिद्धिः । दृष्टार्थप्रपत्तेर्मन्त्रानिरपेक्षतया तत्रानियमविधेरवकाशत्वात् * कामं लोकप्रमाणस्य कामास्सिद्ध्यन्ति कामिनः । गृहीतसत्पथस्यैव निरपायः फलोदयः * इति दृष्टार्थप्रपत्तेर्मन्त्रानपेक्षत्ववचनात् ॥

यद्वा, देशाद्यनियमविधिरापद्विषयः । आपस्तम्बव्यासादौ नियमादर्शनात् । अथवा * देशकालादिनियममरिमित्रादिशोधनम् * इत्याद्यनियमवचनानि स्त्रीशूद्राद्यधिकारतान्त्रिकमन्त्रकप्रपत्तिपराणि * न स्वरः प्रणवोऽङ्गानि नाप्यन्यविधयस्तथा । स्त्रीणां तु शूद्रजातीनां मन्त्रमात्रोक्तिरिष्यते ॥ * इत्यादिविशेषवचने सामान्यविशेषन्यायेन पर्यवसानात् । अतश्च देशकालादिनियमविधिः वैदिकमन्त्रप्रपत्तिविषयः । तदनियमविधिस्तान्त्रिकमन्त्रप्रपत्तिविषय इति न विद्याभेदसिद्धिः ॥

न च ※ श्रद्धैव कारणं पुंसामष्टाक्षरपरिग्रहे । ※ आसीना वा शयाना वा ※ इत्यादिषु वैदिकमन्त्रस्याप्यनियम उक्त इति वाच्यम् । ※ तत्रोत्तरायणस्यादिर्विन्दुमान्विष्णुरन्ततः । बीजमष्टाक्षरस्य स्यात्तेनाष्टाक्षरता भवेत् ॥ ※ इत्युक्तया तान्त्रिकस्याप्यष्टाक्षरतोपपत्तेः । तस्मात् न देशाद्यनियमविधिवशात्फलप्रपत्तिसिद्धिरिति ॥

तत्राह :

( प्रपत्तिक्किन्यादि )

मन्त्ररत्नप्रतिपाद्यप्रपत्तेः देशकालविशेषनियमापेक्षा नास्ति । अतस्सा भगवत्प्रसादफलभूता । लोके यद्यत्साधनम्, तत्तत् देशकालनियमसापेक्षं दृष्टम् । यथा यागादि । या फलप्राप्तिः सा सर्वा तदनपेक्षा दृष्टा ; यथा स्रक्चन्दनादिनिषेवणम् ॥

न चानियमवचनानां विधित्वासंभवः, कर्तव्यताबोधनस्यैव विधित्वात् । न च देशकालनैरपेक्ष्यस्य प्रपत्तिधर्मस्य विधेयतानुपपत्तिः । तत्त्यागे विधितात्पर्यात् । न च विनिगमनाविरहः । नैरपेक्ष्यमात्रपरत्वस्यापि संभवादिति वाच्यम् । ※ सर्वधर्मान्परित्यज्य ※ तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ※ इत्यादित्यागविधौ पर्यवसानात् । न चोक्तवाक्यस्य देशविशेषादित्यागपरत्वाभावः ※ तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ※ इत्युक्तरीत्या देशादीनामपि श्रेयस्साधनत्ववेषेण धर्मत्वोपपत्तेः । ※ कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत । शरीरे च गतौ चापि वर्तते मे महद्भयम् ॥ ※ इत्युपायान्तरवत् तदनुग्राहकदेशादेरपि त्याज्यतावचनेन देशादेरपि सर्वशब्दोपस्थितत्वात् । न चैवं विशिष्टदेशकालपरित्यागेनाशुद्धदेशकालादिप्रसङ्गः, विशिष्टदेशकालयोः प्रपत्त्युपकारकत्वबुद्धित्यागस्य विधेयत्वात् । न च, तेन साङ्गतया साधनत्वापत्तिः । भावरूपत्वाभावेन तदप्रसङ्गात् । एवम्, देशकालानियमविधिसंभवात् नियमानियमयोश्च एकत्रोपसंहारायोगाच्च विद्याभेदसिद्धिः ॥

ननु, अनियमविधिसंभवेऽपि न फलप्रपत्तिसिद्धिः, अनियमविधेरापद्विषयत्वादित्यत्राह ※ स एव देशः कालश्च ※ इत्यादि । अनियमविधिरापद्विषयेति न युज्यते वक्तुम् ; विभीषणप्रपत्तावनियमदर्शनेनाप्यापदो दृष्टत्वात् । तथा च विद्याभेदप्रयुक्तावेव नियमानियमौ ॥

ननु, विभीषणप्रपत्तिरमन्त्रका । अत एव तत्रानियमदर्शनम् । नियमविधिस्समन्त्रके प्रपदने स्यादित्यत्राह –

( इव्वर्थम् मन्त्ररत्नत्तिल् प्रथमपदत्तिले सुस्पष्टम् )

मन्त्ररत्न एव मतुपा तत्प्रतिपाद्यप्रपत्तिमात्रे कालादिनियमानपेक्षत्वस्य प्रतिपन्नत्वात् । समन्त्रकप्रपत्तावपि तन्नैरपेक्ष्यसिद्धिरित्यर्थः ॥

अयं भावः ; सापेक्षत्वं समन्त्रकत्वोपाधिकृतम्, न तु प्रपत्तिस्वरूपकृतमिति समन्त्रकप्रपत्तावेव

तन्नियमः ; अमन्त्रकायां त्वनियम इति न शक्यते वक्तुम् । मन्त्रे तस्य देशादिनैरपेक्ष्यदर्शनात् * देशकालादिनियमस्तु * अरिमित्रादिकं तस्य पौन (र) श्चरणकं न तु * इत्यादिस्मृत्युपबृंहितमतुप्प्रत्ययस्य तत्र मानत्वादिति । नन्विदं वचनं तान्त्रिकमन्त्रविषयम् ; वैदिकमन्त्रे देशादिनियमोऽस्त्येव ; अतः वैदिकमन्त्रविषयो नियमविधिः, तदतिरिक्तसर्वविषयस्तदभावविधि इति चेत् ; मैवम्, द्वयेऽपि प्रणवान्वयेन वैदिकमन्त्रेऽपि मतुप्प्रत्ययसिद्ध-देशाद्यनियमदर्शनात् * ओमित्येकाक्षरं मन्त्रमेकं गूढार्थमुच्यते । प्रकाशार्थं तयोरेकमक्षरैः पञ्चविंशकैः ॥ तस्मान्मन्त्रद्वयं ब्रह्म षड्विंशत्यक्षरं विदुः । तस्य विष्णोः प्रसादेन मया लब्धं द्वयं विभोः ॥ प्रणवं मन्त्ररत्नं च मन्त्रद्वयमुदाहृतम् । प्रणवं प्रणवादूर्ध्वं मन्त्रद्वयमुदाहृतम् ॥ * इति वचनात् ॥

न च, प्रणवस्य द्वयान्वितत्वेऽपि तद्विहीनस्य तान्त्रिकत्वात् तद्विवक्षयां मतुप्प्रत्यय इति वाच्यम् * सर्वेषां तान्त्रिकं तु वा * इत्युक्तस्य विकल्पस्यासिद्धिप्रसङ्गात् । अनियतदेशकालादिकस्य तान्त्रिकस्य लघुत्वात् । नियतदेशादिकस्य वैदिकस्य गुरुत्वाच्च । उभयोरनियतविकल्पानुपपत्तेः । अन्यथा गुरु-शास्त्रप्रामाण्यापातात् । अतः देशादिनियमापेक्षा न वैदिकमन्त्रस्वभावकृता ; अपि तु, प्रपत्तेर्मोक्षसाधनत्व-कृता । तन्नैरपेक्ष्यमपि प्रपत्तेः फलत्वकृतम् । न तु वैदिकमन्त्राङ्गकत्वाभावकृतम् । ततश्च देशादि-नियमसापेक्षत्वानपेक्षत्वयोः विद्यास्वभावनिबन्धनत्वाद्विद्याभेदसिद्धिः ।

किंच, अत्रानियमविधेः विशिष्टदेशकालपरित्यागविधिपर्यवसन्नत्वात् तत्यागाङ्गत्वम् ; आपत्कालीने अमन्त्रके तान्त्रिकमन्त्राङ्गके च प्रपदनेन संभवति ; आपत्कालीनकर्मणः अनापत्कालीनकतिपयाङ्गनैरपेक्ष्येऽपि तद्विरोधित्वाभावात् । अमन्त्रकेऽपि तद्विरोधित्वं नास्ति, विशिष्टदेशकालकृतत्वे फलासिद्धिप्रसंगात्, तान्त्रिकमन्त्रकेऽपि तद्विरोधो नास्ति । विशिष्टदेशकालयोस्स्वरूपेण वा बुद्ध्या वा त्यागस्याङ्गत्वेनानुष्ठानादर्शनात् विशिष्टदेशकालयोः कृतस्य वफल्यप्रसङ्गाच्च । तान्त्रिकमन्त्रस्य विशिष्टदेशकालविरोधित्वे प्रमाणाभावाच्च । तस्मात् विशिष्टदेशकालयोः तदभावस्य चैकत्रोपसंहारायोगेन विद्याभेदसिद्धौ, सिद्धोपायसाध्यत्वेन फलप्रपत्ति-भूता शरणागतिः चेतनप्रवृत्तिरूपसाधनविरुद्धेति तदभावाङ्गिका शरणागतिः फलरूपा ; तन्नियमश्च षडङ्गयोगे उपसंहार्य इति षडङ्गयोगस्साधनप्रपत्तिरिति विद्याभेदसिद्धिरिति ॥

यद्यपि * न देशकालौ नावस्थां योगो ह्ययमपेक्षते * इति षडङ्गयोगे तन्नैरपेक्ष्यं श्रुतम् । तथापि * प्रणामः कीर्तनं वाऽपि स्मरणं वाऽपि केवलम् । एकैकमपि चाङ्गानां प्रपत्तिः प्राज्ञसंश्रया ॥ * इत्यादिना यथाचार्यनिष्ठप्रपत्तेः अङ्गाङ्गिपौष्कल्यविरहेऽपि कार्यकरत्वम् ; एवमेव देशकालवैकल्येऽपि तन्निष्ठप्रपत्तेः फलाव्यभिचार इत्यत्रोदाहृतवचनतात्पर्यम् । शरणागतौ तु नैवं तन्नैरपेक्ष्यमात्रम्, अपि तु विरुद्धत्वात्तत्यागाङ्गक-त्वमिति साधियत एव । ततः फलप्रपत्तिरूपत्वाच्छरणस्य मन्त्रे उपायत्वस्य निर्हेतुकत्वसिद्धिरिति ॥

संग्रहः ;

देशादिनियमाभावे विधिर्युक्तो न तद्विधिः । नैरपेक्ष्ये प्रपत्तिर्न तज्ज्ञानेऽभिमतिर्न च ॥
युज्यतां सतु अमन्त्रे वाऽप्यापदीयेऽथ तान्त्रिके । संग्राह्यो वरणे तस्मान्न विद्या भिद्यते ततः ॥
तत्त्यागाङ्गविधिस्साध्ये वरणे पर्यवस्यति । किं चात्र तान्त्रिकः कालेनिरपेक्षो यदीष्यते ॥

सर्वेषां तान्त्रिकं वेति विकल्पश्च न युज्यते । 'न जातिभेद' मित्यादिप्राज्ञसंश्रयगोचरम् ॥
तस्माद्देशादितत्त्यागोपादानाशक्तितः फलम् । वरणं सिद्धमित्याहुः न्यायमार्गे सुशिक्षिताः ॥

इति देशकालनियमाभावाधिकारः ॥ १६ ॥

॥ १७ ॥ अथ प्रकारनियमाभावाधिकारः ॥

प्रकारनियतियिल्लै

पूर्वाधिकारे देशकालनैरपेक्ष्यविधिसाधनपूर्वकं विद्याभेदः प्रसाधितः । अत्र वर्णाश्रमाचारसापेक्षता-विधिसाधनपूर्वकं विद्याभेदसमर्थनेन फलप्रपत्तिसिद्धिरुच्यत इति सङ्गतिः ॥

अत्र संशयः : फलप्रपत्तिर्नास्ति, उतास्तीति । तदर्थम् विद्याभेदो नास्ति, उतास्तीति । तदर्थम् प्रपत्तेः वर्णाश्रमधर्माङ्गकत्वे प्रमाणं नास्ति, उतास्तीति । तदर्थम् * आनुकूल्यस्य संकल्पः * इत्यत्र संकल्पमात्रमङ्गम्, उत वर्णाश्रमधर्मानुष्ठानमङ्गत्वेन निर्दिश्यत इति । तदर्थम् तस्य वर्णाश्रमधर्मानुष्ठानपरत्वे विनिगमकं नास्ति, उतास्तीति ॥

यदा नास्ति तदा संकल्पमात्रं तत्राङ्गत्वेन विवक्षितमिति, वर्णाश्रमधर्माङ्गकत्वे प्रमाणाभावात् वर्णाश्रम-धर्माङ्गकत्वतदभावाङ्गकत्वलक्षणविरुद्धधर्मसमाजाभावेन विद्याभेदाभावात्फलप्रपत्त्यसिद्धिरिति पूर्वपक्षे फलफलिभावः ॥

यदा च संकल्पशब्दस्य संकल्पविषयवर्णाश्रमधर्माचारपरत्वे प्रमाणमस्ति ; तदा वर्णाश्रमधर्मस्याङ्गत्वा-देकत्र वर्णाश्रमधर्मस्य तत्त्यागस्य चोपसंहारासंभवेन विद्याभेदसिद्धेः फलप्रपत्तिसंभवेन सिद्धोपायनैरपेक्ष्य-सिद्धिरिति राद्धान्ते फलफलिभावः ॥

पूर्वपक्षस्तु ; प्रपत्तौ * सर्वधर्मान्परित्यज्य * इति विद्याविशेषत्वात् वर्णाश्रमधर्मसापेक्षत्वस्यापि प्राप्तौ तन्नैरपेक्ष्यं तावद्विधीयते तद्विरुद्धम्, अत्र वर्णाश्रमधर्माणामप्यङ्गत्वात्, विरुद्धशास्त्रद्वयसमाजेन विद्याभेदात्फलप्रपत्तिसिद्धिरिति यदुच्यते, तन्नोपपद्यते । प्रपत्तेः वर्णाश्रमधर्माङ्गत्वे प्रमाणाभावात् । न च * सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु । वर्णाश्रमाचारवता पुरुषेण परः पुमान् ॥ विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः * इति सामान्यविशेषरूपवचनैः प्रपत्तेरपि तदङ्गत्वमवगम्यत इति वाच्यम्, * सर्वधर्मान् परित्यज्य * इति विशेषविधिबलेन उत्सर्गापवादनयात् सामान्यवचनानां विहितव्यतिरिक्तविषयत्वात् ॥

न च, * यज्ञेन * इति वचनात् * सहकारित्वेन च * इति सूत्राच्च तत्प्राप्तिः, तस्यापि विद्यामात्र-साधारण्येन न्यासविद्याव्यतिरिक्तविद्यान्तरविषयत्वात् ; न च * आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् * इत्यादौ विहितकरणनिषिद्धाकरणयोः प्रपत्त्यङ्गत्वेनोक्तत्वात्, वर्णाश्रमधर्माङ्गत्वप्रसङ्गः ; तत्र संकल्पमात्रस्याङ्गत्वेन श्रुतत्वेन तदधिककल्पनायां श्रुतहान्यश्रुतकल्पनयोः प्रसङ्गात् । न चानुष्ठानस्यैवाङ्गत्वं सर्वत्र दृष्टम्, न तु संकल्पमात्रस्येति वाच्यम्, * आचार्याधीनो भव, बाढम् * इत्यत्र तदङ्गत्वदृष्टेः ॥

न च वाच्यम्. * या स्वधर्मेषु निरतिस्सा भवत्यनुकूलता * इत्यानुकूल्यसंकल्पनिर्वचनात् स्वधर्मानुष्ठानमेव संकल्प इति तत्रानुकूल्यलक्षणमुक्तम्, न तु तत्संकल्पलक्षणम् । किञ्च * आनुकूल्यमिति प्रोक्तं सर्वभूतानुकूलता * इत्यादिलक्षणान्तरसत्त्वेन तदनिश्चयात्, अनुष्ठानवाक्ये च * कृतानुकूल्यसंकल्पः प्रातिकूल्यं विवर्जयन् । विश्वासशाली कृपणः प्रार्थयन् रक्षणं प्रति ॥ आत्मानं निक्षिपति यद्धिया देवस्य पादयोः । सा प्रपत्तिरियं सद्यः सर्वपापप्रणाशिनी * इति संकल्पमात्रमङ्गमिति च श्रुतम्, किञ्च संकल्पशब्दस्य अनुष्ठानपरत्वे लक्षणा च स्यात्, सा चायुक्ता, मुख्ये संभवति तत्कल्पनानुपपत्तेः । संबन्धानुपपत्तिभ्यां हि लक्षणा समाश्रीयते? किञ्च लाक्षणिकशब्दप्रयोगो हि सर्वत्र सफलो दृष्टः? यथा गङ्गाशब्दस्य घोषपावनत्वातिशयप्रकाशनम् । न चात्र संकल्पशब्दस्य लक्षणाविवक्षायां प्रयोजनमस्ति । तस्मादत्र यावज्जीवं भगवदानुकूल्यं चरामीति संकल्पमात्रमङ्गम् । प्रातिकूल्यवर्जनं च क्वचिद्धर्मानुष्ठानमुच्यते, * स्वस्य स्वामिनि वृत्तिर्या प्रातिकूल्यस्य वर्जनम् * इति । क्वचिच्च * वर्जनं प्रतिषिद्धानां तथैवाप्रतिकूलता * इति निषिद्धवर्जनमित्युच्यते; ततश्चोदाहृतवचनेषु निष्पन्नोऽर्थः * आनुकूल्येतराभ्यां तु विनिवृत्तिरपायतः * इति दर्शितः । अतः यावद्देहावसानं कर्तव्ययोः विहितकरणनिषिद्धाकरणयोः आनुकूल्यप्रातिकूल्यवर्जनशब्दाभ्यां विवक्षितत्वात् तादृशयोश्चांम्यनुष्ठानकाले कर्तुमशक्यत्वात्, साङ्गप्रपदनस्य सकृत्त्वाच्च तदुभयसंकल्पमात्रमङ्गमिति निश्चीयते ॥

न च यावज्जीवकर्तव्यत्वेन संकल्पितयोस्तयोरनन्तरमनुष्ठानं संकल्पप्रयुक्तमित्यङ्गता स्यात् इति वाच्यम् * वाढम् * इत्यादावङ्ग्यनुवृत्त्या उत्तरतनगुर्वनुवर्तनादेस्तत्संकल्पप्रयुक्तत्वेऽपि अत्राङ्गिनस्सकृत्त्वेन तयोस्तत्प्रयुक्तत्वाभावात् । तदुक्तम् वेदान्ताचार्यैः * संकल्पमात्रमेवाङ्गं श्रुतमाचरणं पुनः । अनङ्गमाज्ञया प्राप्तं न संकल्पनिबन्धनम् * इति । अतः वर्णाश्रमधर्माणां प्रपत्त्यङ्गत्वे प्रमाणाभावात् न विरुद्धविधिद्वयसमाज इति फलप्रपत्त्यसिद्धेः न निर्हेतुकत्वसिद्धिरिति ॥

सिद्धान्तस्तु; यदुक्तं प्रपत्तेः वर्णाश्रमाचाराङ्गत्वे प्रमाणाभाव इति तन्नोपपद्यते, * न्यासः पञ्चाङ्गसंयुतः * इत्यादेः प्रमाणत्वात् । अत्र * आनुकूल्यस्य संकल्पः * इत्यानुकूल्ये संकल्पशब्दश्रवणेऽपि प्रातिकूल्यवर्जने संकल्पशब्दस्तावत् क्वचिदपि न श्रुतः । प्रातिकूल्यवर्जनलक्षणं च * स्वस्य स्वामिनि वृत्तिर्या प्रातिकूल्यस्य वर्जनम् । तदङ्गं पञ्चमं प्रोक्तं आज्ञाव्याघातवर्जनम् । अशास्त्रीयोपसेवा तु तद्व्याघात इतीर्यते * इति प्रातिकूल्यवर्जनस्य प्रवृत्तिनिवृत्तिलक्षणस्वधर्मानुष्ठानरूपत्वमुक्तम् । न चात्रापि संकल्पशब्दोऽध्याहर्तव्यः, श्रुतहानाश्रुतकल्पनाप्रसङ्गात्; अन्यथा विश्वासादिष्वपि संकल्पशब्दाध्याहारप्रसङ्गः ॥

किञ्चात्र संकल्पशब्दोऽपि न सार्वत्रिकः, * आनुकूल्यं समाचरेत् * प्रातिकूल्यं परित्यक्तमानुकूल्यं च संश्रितम् * आनुकूल्यमिति प्रोक्तं सर्वभूतानुकूलता * इत्यादौ संकल्पशब्दाश्रवणात् । * आनुकूल्येतराभ्यां तु विनिवृत्तिरपायतः * इत्येतदपि आनुकूल्यसंकल्पस्य अङ्गत्वेनोपपद्यते, संकल्पमात्रेण कृत्याकरणप्रयुक्तापायनिवृत्त्यसंभवात् । अतः, क्वचित्सङ्कल्पशब्दो वचनान्तरबाहुल्यानुगुण्येनानुष्ठानपरः, क्वचित्सङ्कल्पशब्दप्रयोगोऽपि यावज्जीवमनुष्ठेयस्यानुकूल्यस्य प्रपत्त्यङ्गत्वात् तत्प्रारम्भमात्रं पूर्वाङ्गमिति सूचनार्थः; तथा हि आनुकूल्यादिस्वरूपमात्रं न प्रपत्त्यङ्गम्; किन्तु तेषां पूर्तिः, * पूर्णैरङ्गैरुपाङ्गैश्च अङ्गपूर्तिमिमां शृणु * इत्यादौ

पूर्णानामानुकूल्यादीनां प्रपत्त्यङ्गत्वश्रवणात् । अत एवोच्यते * आर्तप्रपत्तावेतेषां सन्निधिस्तु विधीयते । दृप्तप्रपत्तावेतानि भविष्यन्त्युत्तरोत्तरम् * इति । सकृत्त्ववचनानि, अङ्गारम्भविशिष्टाङ्गिपराणि : ततश्चानुकूल्यादीनां प्रथमप्रयोगः पूर्वाङ्गम् : तत्सहानुष्ठानानन्तरं यावज्जीवं तेषां षण्णामप्यनुष्ठानमुत्तराङ्गम् : यावज्जीवमनुष्ठानमेव दृप्तविषये तेषां पूर्तिः ; आर्तानां स्वधर्मानुष्ठानपूर्तेः पूर्वमेव जातत्वात् । पूर्णान्यानुकूल्यादिपञ्चकानि तेषां पूर्वाङ्गानि, दृप्तानां स्वधर्मानुष्ठानपूर्तेः पूर्वमसंभवात्, पूर्वाङ्गप्रारम्भरूपप्राथमिकानुष्ठानं पूर्वाङ्गम् ; अङ्ग्यनुष्ठानानन्तरं तेषां षण्णामपि यावज्जीवमनुष्ठानमुत्तराङ्गम् ; तदुच्यते, * एतानि भविष्यन्त्युत्तरोत्तरम् * इति । ततश्चार्तानामङ्गपूर्तिः पूर्वमेवभवति, दृप्तानामन्तकाले भवतीत्युक्तं भवति ॥

न च अनुकूल्यादीनां षण्णामप्युत्तराङ्गत्वे मानाभावः ; * षडङ्गंतदुपायत्वं च शृणु मे पद्मसंभव * इत्यादेः प्रमाणत्वात् । न च, अष्टाङ्गयोग इतिवदङ्गाङ्गिसमुदायविवक्षया षडङ्गत्वेन निर्देशः, * सांगेत्वष्टाङ्गयोग-व्यवहृतिनयतष्षड्विधत्वोपचारः * इति वेदान्ताचार्यवचनादिति वाच्यम् ; स्वारसिकाङ्गसमुच्चयसंभवे तदयोगात् । न च अङ्ग्यन्तरानुपपत्तिः ; अस्योत्तराङ्गपरत्वेन पूर्वं पञ्चाङ्गैस्सहानुष्ठितस्य तथात्वात् । अत एव * न्या... पञ्चाङ्गसंयुतः *, प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृताम् * इत्यादेरपि न विरोधः, तेषां पूर्वाङ्गपरत्वात् अत्र * षडङ्गम् * इत्यङ्गषट्कं पृथक् निर्दिश्य * तमुपायम् * इत्यङ्गिचार्थान्तरं निर्दिश्यते ; एवं स्वारसिकार्थ-परित्यागे बाधकाभावात्, पञ्चाङ्गत्वस्मृतेश्च, वर्णाश्रमाचारस्य सन्निपत्योपकारकत्वमारादुपकारकत्वं च सिद्धम् ॥

न च * स एवोपर्युपर्यस्य परां प्रीतिमुपावहन् । वृत्त्याख्यः फलतां याति * इत्यादिवचनविरोधः, तत्र सकृत्कृतप्रपत्त्यनन्तरमानुकूल्याद्यनुष्ठानस्य फलत्वश्रुतेरिति वाच्यम् ; उत्तरवृत्तेः * तस्यैव बोधो न्यासाख्यः प्रथमं यात्युपायताम् * इत्युक्तप्रपत्तिफलत्वेपि प्राप्त्यपेक्षयाङ्गत्वस्याप्युपपत्तेः । अतः फलत्ववचनानि फलत्वबुद्धिसंस्कृतानां तेषामारादुपकारकत्वं नान्येषामिति नियमपराणि ॥

न च अहिर्बुध्न्यसंहितोक्तप्रथमाङ्गविवक्षया षडङ्गमिति निर्देशः, तस्य भक्त्यादिसाधारणस्य षडङ्गयोग इति शास्त्रप्रसिद्धनिरूपणासिद्धेः, तथानभ्युपगमेनापसिद्धान्ताच्च ; * भविष्यन्त्युत्तरोत्तरम् * इति पूर्वाचार्य-वचनाच्च । इदं वचनमानुकूल्यसंकल्पस्यानुष्ठानपरत्वमप्यवगमयति, उत्तरोत्तरं संकल्पानुवृत्तेरदर्शनाच्च ; अन्यथा, केवलसंकल्पमात्रस्यानुवृत्तौ * आनुकूल्येतराभ्यां तु विनिवृत्तिरपायतः * इत्युक्तापायनिवृत्तेरसिद्धिप्रसङ्गः । उक्तानुपपत्तिरेव संकल्पशब्दस्य लक्षणाकल्पिका । लक्षणाप्रयोजनं प्रोक्तम् । कथं तर्हि वेदान्ताचार्यवचनमिति चेत्, अशक्तस्वतन्त्राणां षडङ्गयोगे अश्रद्धावारणाय स्वधर्मानङ्गिकां शरणागतिं तत्रान्तर्भावयितुं संकल्पमात्रमेवाङ्ग-मित्युक्तम् ॥

न च * उपायापायसंत्यागी मध्यमां स्थितिमास्थितः * उपायापाययुक्तस्य वर्तमानस्य मध्यतः * इत्यादिषु शरणागतेरपि वर्णाश्रमानुष्ठानाङ्गकत्वप्रतीतिरस्तीति वाच्यम् ; वर्तमानयोरेव कृत्यकरणाकृत्याकरणयोः प्रवृत्त्यर्थत्वत्यागस्य * सर्वधर्मान्परित्यज्य * इत्यादिना विधीयमानत्वात् ; * आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् * इत्यादिनानुष्ठीयमानयोस्तयोरेवाङ्गतया कार्योपयोगित्वस्य विधीयमानत्वाच्च । शरणागतेः तदभावाङ्गत्वस्य षडङ्गयोगस्य तदङ्गकत्वस्य च सिद्धेः । एवं, आनुकूल्यसंकल्पप्रातिकूल्यवर्जनयोः स्वधर्मानुष्ठानत्वात् ;

प्रपत्तेः स्वधर्मानुष्ठानार्थकत्वे पूर्वोत्तराङ्गविधीनामेव प्रमाणत्वात्, स्वधर्मानुष्ठानत्यागाङ्गकत्वे * सर्वधर्मान् * इत्यादेः प्रमाणत्वाच्च, एकत्र विरुद्धगुणोपसंहारायोगाद्विद्याभेदसिद्धौ फलप्रपत्तिसिद्धिरिति ॥

* आनुकूल्येतराभ्यां यद्वर्णधर्माङ्गमीरितम् । वरणं तन्नसंकल्पमात्रमङ्गं श्रुतं यतः ॥
अतो विरुद्धधर्मत्वाद्विद्याभेदो न सिद्ध्यति । इति चेत् तन्नसंकल्पशब्दोनुष्ठानलेक्षकः ॥
स्वस्येत्यादि स्मृतेस्तेषां सन्निधिस्तु विधीयते । इत्याचार्यस्य सूक्तेश्चाप्याचारोप्यङ्गमीरितम् ॥
तथोत्तराङ्गता चास्य षडङ्गमिति च स्मृतेः । द्वतप्रपत्तावित्यादिगुरुवाक्याच्च सिद्ध्यति ॥
क्वचित्सङ्कल्पशब्दश्च पूर्णाङ्गारम्भसूचकः । तस्मादाचारसापेक्षप्रपत्तेश्शरणागतिः ॥
भिन्ना तत्त्यागसापेक्षा फलरूपेति वर्णिता ॥

अथवा प्रकारशब्देन विद्यारंभविरोधिपापनाशकप्रायश्चित्तानुष्ठानं विवक्षितम् । तदेवं संशयः — भगवदुपायत्वस्य निर्हेतुकत्वं न संभवति, उत संभवतीति । तदर्थम् फलप्रपत्तिर्नास्ति, उतास्तीति । तदर्थम् प्रपत्तिविद्या न भिद्यते, उत भिद्यत इति । तदर्थम् कृतप्रायश्चित्तत्वाकृतप्रायश्चित्तत्वाधिकाररूपविरुद्धधर्मद्वयसमावेशो नास्ति, उतास्तीति । तदर्थम् * शाश्वती मम संसिद्धिः * इत्याद्यभिहितशेषत्वज्ञानस्य तापादिसंस्कारत्रयस्य मन्त्रदीक्षाविधेश्चाङ्गत्वम, उत प्रायश्चित्तत्वमिति । यदा तेषामङ्गत्वम्, तदा सर्वत्र प्रपत्तेरकृतप्रायश्चिताधिकारत्वाद्विरुद्धधर्मद्वयाभावेन विद्याभेदासिद्धेः न फलप्रपत्तिसिद्धिरिति न निर्हेतुकत्वसिद्धिः । यदा तेषां प्रायश्चित्तत्वम्; तदा अकृतप्रायश्चित्तानां काकादीनामपि दर्शनात्, विरुद्धधर्मद्वयसमावेशेन विद्याभेदात् फलप्रपत्तिसिद्धेः निर्हेतुकत्वसिद्धिरिति ॥

पूर्वपक्षस्तु; अहमस्म्यपराधानामालयः * पापिष्ठः क्षत्रबन्धुश्च * वधार्हमपि काकुत्स्थः * दोषो यद्यपि तस्य स्यात् * इत्यादिष्वकृतप्रायश्चित्तानामेव प्रपत्तावधिकारदर्शनात्, प्रपत्तेस्सर्वत्राकृतप्रायश्चित्ताधिकारत्वेन कृतप्रायश्चित्ताधिकारत्वे मानाभावात् । न च श्रेयस्साधनभूतकर्ममात्रस्य कर्तृयोग्यतापादकतत्संस्काररूपानुग्रहादिप्रायश्चित्तानुष्ठानपूर्वकत्वदर्शनेन अत्रापि विद्यारम्भविरोधिपापनाशार्थं प्रायश्चित्तमनुष्ठेयमिति वाच्यम् । * अहमस्म्यपराधानाम् * इत्यादिविशेषवचनेन तत्परसामान्यवचनानां प्रपत्तिव्यतिरिक्तविषयत्वात् ॥

ननु, * शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत् । पुरुषं परमुद्दिश्य न मे सिद्धिरतोऽन्यथा * इत्याद्युक्तशेषत्वज्ञानस्य * क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता * इत्यादिविशेषवचनपर्यवसानात् पापानां निबर्हणत्वं सिद्धम् । तथा च * वक्ष्यामि मुनयस्सर्वे विष्णोराधराणक्रियाम् । मन्त्रदीक्षाविधिं चैव मत्पूजनविधिं तथा ॥ आद्यं तु शङ्खचक्रादिधारणं वैष्णवं स्मृतम् । पुण्ड्रं नामक्रिया चैव मन्त्रं चैवार्चनं हरेः । संस्काराः पञ्च कर्तव्याः ब्राह्मणस्य विधानतः । तस्माच्चक्रादिसंस्काराः कर्तव्या मुनिसत्तमाः ॥ चक्रसंस्कारहीनेन कृतं कर्म हि निष्फलम् । स्नात्वा शुभर्क्षे पूर्वाह्णे सम्यगभ्यर्च्य केशवम् ॥ स्नातं शिष्यं समाहूय कृतकौतुकबन्धनम् ॥ * इत्यादि । अन्यत्रापि * प्रथमं तापसंस्कारो वैष्णवं मुनिभिस्स्मृतम । मन्त्रसंस्कारसिद्ध्यर्थं मन्त्रदीक्षाविधौ तथा ॥ * अन्यत्रापि शङ्खचक्राङ्कनं कुर्याद्ब्राह्मणो बाहुमूलयोः । हुताग्निनैव सन्तप्य सर्वपापापनुत्तये ॥ * इत्यादि । एवं प्रपन्नाध्यायेषु तापादिसंस्कारत्रयस्य मन्त्रदीक्षाविधेश्च पापनाशकत्वमुक्तम् ।

* अतप्ततनूर्न तदामो अश्नुते * इति श्रुतावपि तापसंस्कारस्य पापनाशकत्वमुक्तम् । अत्र शेषत्वज्ञानस्य तापादिदीक्षाविधेश्च विद्यारम्भविरोधिपापनाशकत्वेन प्रायश्चित्तत्वं वक्तव्यम्; अन्यथा नियमेन प्रपत्तेः पूर्वं तदनुष्ठानानुपपत्तेरिति चेत्; मैवम्; * इत्यङ्गमुदितं श्रेष्ठं फलेच्छा तद्विरोधिनी * इति प्रपत्तिकालीनात्मज्ञानस्याङ्गत्वप्रतिपादनात् । दाहादिसंस्कारस्य अङ्गिफलनिर्देशेन पापनाशकत्ववचनोपपत्तिः । दाहादेरपि प्रपत्त्यङ्गतया प्रायश्चित्तत्वाभावात् । न च पञ्चाङ्गत्वविरोधः; एतेषामुपासकसाधारण्येन साधारणाङ्गत्वात् । असाधारणाङ्गविवक्षया तदुपपत्तेः; अतः प्रपत्तेस्सर्वत्राकृतप्रायश्चित्ताधिकारत्वात् न विरुद्धगुणोपसंहार इति न फलप्रपत्तिसिद्धिरिति ॥

अत्र ब्रूमः — प्रपत्तेः कृतप्रायश्चित्ताधिकारत्वे मानाभाव इति यदुक्तम्, तदयुक्तम्, * शाश्वती * इत्याद्युक्तशेषत्वज्ञानलक्षणप्रह्वीभावस्य, तत्पूर्वकतापादित्रयस्य, मन्त्रदीक्षाविधेश्च प्रायश्चित्तत्वात् । न चैतेषामङ्गत्वसंभवः, पञ्चाङ्गवचनविरोधात् । न च तस्य प्रधानाङ्गपरत्वम् । फलवत्सन्निधावफलस्याङ्गतया एतेषां पापनाशफलश्रवणेनानङ्गत्वात् । न चाङ्गिफलं प्राप्तिविरोधिपापनाशः तत्राप्युपचरितम् । न तु विद्यारम्भविरोधिपापनाशकत्वमिति वाच्यम् । आनुकूल्यसंकल्पादिष्वन्तरङ्गाङ्गेषु अङ्गिफलोपचारसंभवेऽपि बहिरङ्गेषु तदुपचारे निदानाभावात् ॥

किञ्च, एतेषामङ्गत्वं सन्निपत्योपकारकत्वात्, आरादुपकारकत्वाद्वा? नाद्यः, अदृष्टद्वारकल्पनाया गुरुत्वात् । दृष्टद्वारकत्वे च विद्योत्पत्तिप्रतिबन्धनाशद्वारमेवाङ्गीकार्यमिति प्रायश्चित्तत्वस्यैव सिद्धेः । न द्वितीयः, प्रपत्त्यनन्तरमनुष्ठेयत्वेन तद्योगात् * इत्यङ्गमुदितं श्रेष्ठम् * इत्यहिर्बुध्न्यसंहितायां शेषत्वज्ञानस्याङ्गत्वनिर्देशस्तु, विद्यारम्भविरोधिपापनाशकत्वाभिप्रायः । अत एव वेदान्ताचार्यैः शेषत्वज्ञानस्य प्रायश्चित्तत्वमुक्तम् "तदा शेषत्वज्ञानमधिकारेऽन्तर्भवति * क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता * इति; तस्य शेषत्वज्ञानपरत्वे उपायान्तरनिवृत्तिर्भवति" इति । तथा * परशेषत्वधीमात्रमधिकारिविशेषणम् * इति च । अतः प्रपत्त्यनुष्ठानपूर्वभाविशेषत्वज्ञानतापादिसंस्काराणां प्रायश्चित्तत्वात् काकादीनां शरणागतत्वेन च कृतप्रायश्चित्तत्वाकृतप्रायश्चित्तत्वरूपविरुद्धाधिकारात् प्रपत्तिर्भिद्यत एव ॥

नन्वेवमपि न विद्याभेदः प्रसजति, प्रपत्तेश्शास्त्रवश्येषु सर्वत्र कृतप्रायश्चित्ताधिकारत्वात्; काकादीनां अशास्त्रवश्यत्वादिति चेत्; न, शास्त्रवश्येष्वप्यर्जुनादिषु दिव्यसूरिषु च तापादिसंस्कारादर्शनात् ॥

न च वाच्यम्, फलप्रपत्तावपि तदुभयाधिकारो दृश्यते, दिव्यसूरिषु तापाद्यदर्शनात्, आधुनिकेषु भवत्सु तद्दर्शनाच्च; अतः फलप्रपत्तिरपि भिद्यत इति । अस्मदादिभिस्तापादिसंस्कारस्याग्निकार्यादिविधिविशेषरहितस्यानुष्ठीयमानत्वेन प्रायश्चित्तत्वाभावात् केवलचक्रादिधारणस्य तान्त्रिकस्य देवर्षिभूतादिनैराश्य सिद्ध्यर्थं स्वस्य तच्छेषत्वभ्रमानुत्पत्त्यर्थं भोगार्थञ्च क्रियमाणत्वात् । अत एवोच्यते * अमी परमसंस्काराः पारमैकान्त्यहेतवः । * इति । अत्र * तापः पुण्ड्रस्तथा नाम * इति तापादिस्वरूपमात्रमुक्तम्; न तु विधिशब्दोऽप्यभिहितः । न च साधनप्रपत्तिवादेऽप्येतेषां पारमैकान्त्यहेतुत्वमेवेति वाच्यम्; प्रपत्तिप्रकरणाधीतानां तापादीनां ग्राहकग्रहणेन प्रपत्त्यर्थत्वात् । अस्माकं तु शरणवरणस्य साधनत्वाभावेन ग्राहकग्रहणाभावात् ॥

कश्चित्पापनाशद्वारा प्रपत्त्यर्थत्वाभावात् तद्दीक्षाविधेः । फलश्रवणस्य चाप्रामाण्यापत्तेश्च; अतः तान्त्रिकपक्षावलम्बिनां प्रपत्तेः फलतया संस्काराणां केवलं पारमैकान्त्यहेतुत्वम्; वैदिकपक्षावलम्बिनां तु साधनप्रपत्तिवादिनां विद्योत्पत्तिप्रतिबन्धकनाशद्वारा प्रपत्त्यर्थत्वं चावश्यकम् । ननु, फलप्रपत्तिवादे तापादीनां प्रपत्त्यनुपकारकत्वेऽपि शेषत्वज्ञानस्य नियतपूर्वभावित्वात् प्रायश्चित्तात्मकत्वं वक्तव्यमिति चेत्; न, अस्माकं प्रपत्तेः पूर्वभाविनश्शेषत्वज्ञानस्य श्रवणात्मकत्वेन अविधेयतया प्रायश्चित्तत्वाभावात् । * शाश्वती मम संसिद्धिः * इत्यादौ यत्नसाध्यं ज्ञानान्तरमेवाङ्गमिति विधीयते । तत्र भगवच्छेषत्वमेव मम संसिद्धिः प्रयोजनान्तरासिद्धिः नास्तीति स्वाधिकारविज्ञापनपूर्वकप्रह्वीभावः स्वाचार्यादिविषयो हि तत्र विधीयते । एवं साधनप्रपत्तिवादे आद्यप्रह्वीभावस्येति तापादिविधेश्च प्रकरणाधीतत्वेन ग्राहकगृहीतत्वात् प्रपत्तिशेषत्वे सिद्धे अकिञ्चित्करस्य तदसिद्ध्या अदृष्टरूपकिञ्चित्कारकल्पने दृष्टे संभवति तदयोगात्, श्रुतहान्यादिप्रसंगाच्च । प्रपत्त्यारम्भविरोधिपापनाशद्वारा तदर्थत्वात् । फलप्रपत्तिवादे ग्राहकग्रहाभावात्, श्रवणात्मकशेषत्वज्ञानस्याविधेयत्वात्, तापादीनां तत्तद्दीक्षाविधिरहितत्वेनान्यार्थत्वेन च पारमैकान्त्यमात्रावहत्वाच्च । परमते प्रायश्चित्तरूपत्वम्; स्वपक्षे तदभावश्चेति वैषम्यसिद्धिः ॥

एवं परांकुशादिभिरपि अस्मदादिभिरपि प्रायश्चित्तस्यानुष्ठानात्, स्वगतस्वीकारनिष्ठैरनुष्ठीयमानत्वाच्च । कृतप्रायश्चित्तत्वाकृतप्रायश्चित्तत्वरूपविरुद्धधर्मावेशाद्विद्याभेदसिद्धेः फलप्रपत्तिसिद्ध्या निर्हेतुकत्वसिद्धिरिति ॥

संग्रहश्च ;

प्रायश्चित्ताधिकारत्वात्तदभावाच्च भिद्यते । प्रपत्तिरिति वादस्तु विधेरभावाद्विहन्यते ॥
इति चेत्तन्न तापादेः शेषत्वस्मरणस्य च । ग्राहकेण गृहीतत्वात् प्रपद्युत्पत्तिहेतुता ॥
श्रुतपापविनाशेन स द्वारावश्यकी यतः । अतश्शेषत्वविज्ञानं मन्त्रदीक्षादिकं च यत् ॥
प्रायश्चित्तं प्रपन्नस्य स्वतन्त्रस्य हि विद्यते । दिव्यसूरिप्रभृतिषु तापादेर्न हि संभवः ॥
अस्मदादिषु दृष्टस्य दीक्षाविधिविवर्जनात् । परशेषत्वविज्ञानं श्रवणं च भवेद्यतः ॥
प्रायश्चित्तमतः किञ्चिद्विशिष्टेषु न दृश्यते । अतो भिन्नाधिकारत्वात्प्रपत्तिर्भेदमर्हति ॥

इति प्रकारनियमाभावाधिकारः ॥ १७ ॥

॥ १८ ॥ अथ अधिकारनियमाभावाधिकारः ॥

## अधिकारनियमम्

वर्णाश्रमधर्मप्रायश्चित्तसाध्ययोग्यतानिरूपणेन फलप्रपत्तिस्साधिता, इदानीमुत्कृष्टवर्णरूपसहजयोग्यतानिरूपणेन सा साध्यते ॥

संशयस्तु: फलप्रपत्तिर्नास्ति, उतास्तीति । तदर्थं विद्या न भिद्यते, उत भिद्यत इति । तदर्थं प्रपत्तेरधिकृताधिकारत्वसर्वाधिकारत्वलक्षणविरुद्धधर्मावेशो नास्ति, उतास्तीति । यदा नास्ति तदा

विद्याभेदाभावात्फलप्रपत्यसिद्धिः । यदा चास्ति, तदा विद्याभेदात्तत्सिद्धिरिति ॥

पूर्वपक्षस्तु : यदुक्तम्, प्रपत्तेः वैदिककर्मत्वेन योगविशेषतया न्यासविद्यायामुक्तत्वादस्य सर्वाधिकारत्वं न सिद्ध्यतीति : तदयुक्तम् । सर्वेश्वरस्य सर्वसमाश्रयणीयतया श्वेताश्वतरोक्तत्वात् । तत्र हि * मुमुक्षुर्वै शरणमहं प्रपद्ये * इति मुमुक्षुमात्रमधिकारत्वेनोक्तम् । स्मृतिष्वपि * सर्वलोकशरण्याय * सर्वयोग्य-मनायासमप्रमादमनूपमम् । प्रपन्नार्तिहरं विष्णुं शरणं गन्तुमर्हसि ॥ * त्रयाणां क्षत्रियादीनां प्रपन्नानां च तत्त्वतः । कुर्यानिष्वपि संजातो यस्सकृच्छरणं गतः ॥ न मातृपितृहन्तारं अपि पाति भवानि ह्य । * इत्युपबृंहितम् । तस्मात् उपासनस्य त्रैवर्णिकाधिकारत्वेन अपशूद्राधिकरणसिद्धत्वेऽपि वैदिकस्य सत्यवचनादेरिव प्रपत्तेरपि सर्वयोग्यत्वस्य विशेषवचनसिद्धत्वात् : यथाधिकारं वैदिकेन वा तान्त्रिकेण वा मन्त्रेण सर्वेषामपि प्रपदनानुष्ठाने विरोधो नास्ति । * मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ * इति । सामान्येन भगवत्समाश्रयणमात्रं सर्वसाधारण-मभिहितम् । उपासनप्रारम्भस्य त्रैवर्णिकशरीरसापेक्षत्वेऽपि उपासनसमाप्तिस्सर्वशरीरेऽपि संभवतीत्येतत् * धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते । वर्णावरत्वे संप्राप्तास्संसिद्धिं श्रमणी यथा ॥ * इत्युक्तम् । उपासनं त्रैवर्णिकशरीर एवारम्भणीयमितिवत् । प्रपत्तावपि कस्यचिन्नियामकस्याभावात्, सामान्यवचन-संकोचाभावात्, विशेषवचनप्राबल्याच्च प्रपदनं सर्वयोग्यमिति सिद्धम् । अत एवोक्तं सारे * अतस्त्रैवर्णिकत्वादेः भावोऽभावोऽपि कस्यचित् । नाधिकारः प्रपत्तेस्स्यात् आकिञ्चन्यमनाश्रितः ॥ * इति ॥

सिद्धान्तस्तु : उदाहृतस्मृतिषु शरणागतिप्रपत्तिशब्दयोः श्रवणात्, निरपेक्षसमर्पणशब्दाश्रवणाच्च न न्यासविद्याविषयत्वसिद्धिः । * ओमित्यात्मानं युञ्जीत * इति प्रणवान्तवसुरण्यादिमन्त्रकन्यासस्य सर्वाधिकारत्वाभावात् । न च रथकारादेरिवाग्न्याधानादौ विशेषवचनबलात् सर्वाधिकारत्वसम्भवः ; तादृशवचनस्यासिद्धेः । उदाहृतवचनानां तान्त्रिकमन्त्रकशरणागतिविषयत्वात् । तदुक्तम् : निक्षेपरक्षायाम्, " वसुरण्यादिप्रणवपर्यन्तमान्त्रानुबन्धी तु न्यासः निषादस्थपत्यादिवद्विशेषवचनाभावादधीतवेदानां त्रैवर्णिकाना-मेवेति नापशूद्राधिकरणविरोधोऽपि " इति ॥

यद्यपि, * न जातिभेदं न कुलं न लिङ्गं न गुणक्रियाम् । न देशकालौ नावस्थां योगो ह्ययमपेक्षते * इत्यादौ अहिर्बुध्न्यसंहितादिपठिततान्त्रिकमन्त्रान्तरकरणकेषु षडङ्गयोगन्यासेषु सर्वाधिकारत्वसम्भवः ; तथापि, षडङ्गन्यासस्य फलान्तरोपायत्वे त्रैवर्णिकशरीरानपेक्षत्वेऽपि, मोक्षोपायत्वे तदपेक्षा वर्तत एव । अत्रैवर्णिकानुष्ठित-प्रपत्तेः स्वातन्त्र्येण मोक्षसाधनत्वाभावात् । तेषामाचार्याभिमानादेव मोक्ष इति अवश्यवाच्यत्वात् । अत्रैवर्णिकानुष्ठितप्रपत्तेः देशकालप्रकारावस्था, गुणादिनियमरहितत्वात् ; अङ्गाङ्गिनोः पूर्णानुष्ठाननिरपेक्षत्वात्, गौणतान्त्रिकमन्त्राङ्गत्वाच्च, पूर्णानुष्ठानाभावात् । * सकलांगोपसम्हारे काम्यं कर्म प्रसिद्ध्यति * इति न्यायेन यत्किञ्चिदङ्गवैकल्येऽपि मोक्षसाधनत्वायोगात् । तस्मात्, न मोक्षसाधनत्वम् । तस्मात्, मोक्षस्य च पूर्णानुष्ठानसापेक्षत्वात् समस्ताङ्गोपाङ्गोपसम्हारेण सर्वत्र मुख्यकल्पाश्रयणेन प्रपत्तेः पूर्णानुष्ठानं मोक्षहेतुः ॥

एवं पूर्णानुष्ठानरहितानामत्रैवर्णिकानां चाचार्यानुष्ठितपूर्णप्रपदनादेव सिद्धिः । स्वानुष्ठितामुख्यापूर्णप्रपदनं

तु आचार्यसमाश्रयणेऽङ्गं भवति अन्यथा पूर्णापूर्णप्रपदनयोः गुरुलघुविकल्पायोगेन गुरुशास्त्राप्रामाण्यापत्तेः; काम्यगौणविभागानुपपत्तेश्च; अत एवोच्यते * आत्यन्तिकमनुष्ठानं सद्यश्शान्तिमभीप्सता । प्रपत्तिरङ्गना कार्या * इति । आचार्यानुष्ठितपूर्णप्रपत्तेरेव तदभिमाननिष्ठानामप्युत्तारकत्वम् । * अन्वयादपि चैकस्य रूप्यङ्न्यस्तात्मनो हरौ सर्वे एव प्रमुच्येरन्नराः पूर्वे परे तथा * इत्यत्रोक्तम् । तस्मात् प्रपत्तिशास्त्रे देशकालप्रकारगुणावस्थावर्णाश्रमाद्यङ्गिपूर्वाद्यनियमान्वितामुख्यप्रपदनोपदेशः आचार्यनिष्ठाभिप्रायः; तन्नियमान्वितमुख्यप्रपदनोपदेशः स्वातन्त्र्येणोत्तारकत्वाभिप्राय इति वक्तव्यम्; अन्यथा पूर्वोक्तबाधापत्तेः । न च वर्णाद्यनियमस्याचार्याभिमाननिष्ठषडङ्गप्रपत्तिपरत्वे शरणागतेस्तद्भेदासिद्धिः अनियमवचनानामन्यपरत्वादिति वाच्यम् । देशादित्यागस्येवात्रापि विशिष्टवर्गत्यागस्य शरणागत्यङ्गतया तद्भेदसिद्धेः । विशिष्टवर्णस्यापि श्रेयस्साधनत्ववेषेण धर्मत्वेन * सर्वधर्मान् * इत्यत्र सर्वशब्दवाच्यान्तर्गतत्वात् । अत एवोच्यते, * शरीरं च गतौ चापि * इति ॥

एवं च * कुले जातो गुणैर्युक्तः इति कुलजातत्वनियमवचनानि, स्वातन्त्र्येणोत्तारकपूर्णमुख्यषडङ्गप्रपदनपराणि; * न जातिभेदं न कुलम् * इत्यादीनि तदनियमवचनानि, आचार्याभिमाननिष्ठा मुख्यप्रपदनपराणि; * सर्वधर्मान् * इत्यादिविशिष्टकुलत्यागवचनानि शरणागतिविषयाणि । ततश्च, वसुरण्यादिमन्त्रकन्यासस्य त्रैवर्णिकाधिकारत्वात् पूर्णमुख्यषडङ्गन्यासस्यापि विशिष्टवर्णसापेक्षत्वात्, आचार्यनिष्ठानुष्ठेयामुख्यषडङ्गप्रपदनस्याप्याचार्यगतविशिष्टवर्णसापेक्षत्वात्, तदपेक्षया विशिष्टवर्णत्यागाङ्गका शरणागतिः अर्थान्तर मितिसिद्ध्यति ॥

संग्रहश्च;

वर्णादिनियतो न्यासो वसुरण्यादिमन्त्रकः । वर्णानियतियुक्तस्तु षडङ्गन्यास उच्यते ॥
अतो वर्णस्य नियमानियमौ च न साधनम् । फलप्रपत्तेरिति चेत् नैनत् क्षोदसहं भवेत् ॥
षडङ्गस्यापि मुख्यस्य मुख्यवर्णाद्यपेक्षणम् । 'कुले जातो गुणैर्युक्त' इत्यादिस्मृतिबोधितम् ॥
वर्णादिनिरपेक्षश्च न्यासो मुक्तेर्न साधनम् । गुरुलघ्वोर्विकल्पस्य काम्ये गौणविधेस्तथा ॥
युक्तिबाधादतो मुख्या प्रपत्तिर्गुरुसंश्रये । अङ्गं गुरुः कुलीनस्स्यात्तस्मान्न्यासश्च सर्वशः ॥
विशिष्टवर्णसापेक्षस्तत्त्यागाङ्गं फलं भवेत् । शरणागतिरित्येषा न्यासविद्भिर्विनिश्चिता ॥

इति वर्णनियमाभावाधिकारः ॥ १८ ॥

॥ १९ ॥ अथ फलनियमाभावाधिकारः ॥

## फलनियमम्

पूर्वमधिकारत्रयेण, * सर्वधर्मान् परित्यज्य * इत्यत्र सर्वशब्दविवक्षितदेशकालवर्णाश्रमधर्मप्रायश्चित्ताधिकारिरूपानुबन्धिधर्मपर्यालोचनया वरणस्य फलत्वमुक्तम् । अत्र, * सर्वपापेभ्यः * इत्यत्र सर्वशब्दार्थभूतस्य परार्थानुभवकैङ्कर्ययोः स्वार्थतानुद्धयापादकस्य पापस्यापि नाशात् परार्थकैङ्कर्यं वरणफलमिति फलभेदाद्विद्याभेदः प्रसाध्यते ॥

संशयस्तु ; उपायत्वं सहेतुकम्, उत निर्हेतुकमिति । तदर्थम्, फलप्रपत्तिर्नास्ति, उतास्तीति । तदर्थम, विद्याभेदो नास्ति, उतास्तीति । तदर्थम् · प्रपत्तौ फलसंयोगभेदो नास्ति, उतास्तीति । तदर्थम्, परार्थकैङ्कर्यमित्यतिरिक्तं फलं नास्ति, उतास्तीति । तदर्थम्, तत्क्रतुन्यायः तादृशं फलं कल्पयितुं न प्रभवति, उत प्रभवतीति । तदर्थम्, प्रपत्तिविद्यायां परार्थकैङ्कर्यप्रदत्वलक्षणगुणस्योपास्यत्वं नास्ति, उतास्तीति । तदर्थम् ; प्रार्थनाचतुर्थ्यां तादृशकैङ्कर्यप्रार्थना नास्ति, उतास्तीति । तदर्थम्, प्रणवे प्रधानकर्तृत्वभोक्तृत्वत्यागलक्षणपारतन्त्र्यव्यतिरेकेण कर्तृत्वभोक्तृत्वमात्रत्यागलक्षणात्यन्तपारतन्त्र्यप्रतीतिर्नास्ति, उतास्तीति ॥

यदा नास्ति, तदा उत्तरचतुर्थ्यां तादृशकैङ्कर्यप्रार्थनाविरहेण तादृशकैङ्कर्यप्रार्थनाया असत्वात् तत्कैङ्कर्यप्रदत्वगुणस्य प्रपत्त्यवेद्यतया तत्क्रतुन्यायेन उक्तफलकल्पनं न संभवतीति तदसिद्धेः विद्याभेदाभावान्नफलप्रपत्तिसिद्धिः । यदा चास्ति तदा, उत्तरचतुर्थ्यां तादृशकैङ्कर्यप्रार्थनासंभवेन तादृशकैङ्कर्यप्रार्थनासत्त्वेन तत्कैङ्कर्यप्रदत्वगुणस्य प्रपत्तिवेद्यतया तत्क्रतुन्यायेनोक्तफलकल्पनं संभवतीति तत्सिद्धेः ; विद्याभेदात्फलप्रपत्तिसिद्धिरिति पूर्वोत्तरपक्षयोः फलफलिभावः ॥

पूर्वपक्षस्तु ; न तावत् प्रणवे चेतनस्य ; स्वार्थभोक्तृत्वमात्रस्याभावलक्षणं शेषत्वं प्रतीयते ; किं तु स्वस्यप्रधानभोक्तृत्वाभावलक्षणम् । तदुक्तं वेदान्ताचार्यैः " शेषत्वं नाम स्वार्थं कंचनोपकारं प्राधान्येनास्वीकृत्य परोपकारार्हत्वं " इति । अन्यथा भोक्तृत्वमात्राभावे कर्तृत्वमपि न सिध्येत् ; तदभावे च विधिनिषेधशास्त्रानर्थक्यम्, प्रत्यक्षादिप्रमाणविरोधश्च । तस्य गुणगतत्वाभ्युपगमे साङ्ख्यमतरीतिः ; उभयानभ्युपगमे निर्विशेषवादता । ननु भोक्तृत्वस्यात्यन्ताभावं न ब्रूमः, तत्तु विशिष्टस्वरूपगतम् ; अत्र निष्कृष्टे मकारवाच्ये तदभावो न दोष इति चेत्, मैवम् ; * सोऽश्नुते सर्वान् कामान् * येन येन धाता गच्छति * इति मोक्षदशायामपि तच्छ्रवणात् ; अत्र भोक्तृत्वस्य स्वाभाविकत्वात् स्वस्य प्रधानभोक्तृत्वं तत्र निषिध्यते । ततश्च स्वस्य भोक्तृत्वसत्त्वात् केवलपरार्थकैङ्कर्यं चतुर्थ्यांप्रार्थ्यत इत्यसिद्धम् ॥

ननु, * सोऽश्नुते * इत्यत्र प्रतीतं भोक्तृत्वं (न) तत्त्वयाथात्म्यम् । तत्त्वयाथात्म्यं तु केवलभोग्यत्वम्, * अहमन्नम् * इति श्रुतेरिति चेत् ; मैवम् ; तादृशतत्त्वयाथात्म्यं ब्रह्मभोक्तॄणां न प्रतीयते, उत प्रतीयते । आद्ये * सर्वं ह पश्यः पश्यति * इत्यस्य विरोधः, द्वितीये, केवलभोग्यत्वमतिशयितपुरुषार्थः, उत न ; न चेत् उत्तरचतुर्थ्यां तन्न सिध्येत् अपुरुषार्थभूतस्वरूपाविर्भावस्य मोक्षत्वे नैयायिकरीतिः । आद्ये, ब्रह्मणा सह सर्वकामभोक्तॄणां स्वभोग्यादप्यधिकपुरुषार्थत्वेन प्रतीते तस्मिन् अभिलाषोऽस्ति, उत नास्ति ; अस्ति चेत् भोक्तृत्वत्यागप्रसङ्गः तथात्वे तस्यानादिकतापत्तिः । नास्ति चेत् तत्प्रतिबन्धकं वक्तव्यम् । तच्च कर्म, ईश्वरसंकल्पो वा ? नाद्यः स्थूलपापानां विधूननात्, सूक्ष्माणां विरजातरणेन नष्टत्वात् । न द्वितीयः, स च निर्हेतुकः, सहेतुको वा ? नाद्यः, तत्प्रतिबन्धकस्यानुग्रहरूपत्वे वैषम्यम् ; निग्रहरूपत्वे नैर्घृण्यम् ; सहेतुकत्वे हेतोः दुर्निरूपता । अतः भोक्तृत्वमात्रविरहस्यानेकप्रमाणोपपत्तिबाधितत्वात् अप्रधानभोक्तृत्वं प्रणवबोध्यमिति केवलपरार्थकैङ्कर्यस्य चतुर्थ्यर्थत्वाभावात् तादृशकैङ्कर्यप्रदत्वं नोपास्यगुण इति तत्क्रतुन्यायेनोक्तफलविशेषासिद्धेः न तद्धेतुकविद्याभेदसिद्धिरिति ॥

अत्रोच्यते ;

( फलनियमम् )

परार्थकैङ्कर्यपर्यन्तरूपफलसाधनत्वाच्छरणागतेः फलनियमो नास्ति ; षडङ्गस्य परार्थकैङ्कर्यासाधनत्वात्तन्नियमोऽस्तीत्यर्थः ॥

अयं भावः ; मध्यमाक्षरेण प्रणवे अन्यशेषत्वं तावन्निवर्त्यते , तत्र शब्दासंकोचात् अन्येष्वन्यतमत्वात् स्वशेषत्वमपि व्यावर्तितम् । नमश्शब्देऽपि विशेषतः स्वशेषत्वं वारितम् । "शेषत्वं च परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेषः" इत्यचेतनसाधारणं चेतनेऽप्यभिहितम् । ततश्चाचेतन इव फलित्वमात्रविरहे चेतनेऽप्युपगम्यमाने बाधकाभावात् स्वभोक्तृत्वमात्रविरहश्शब्दासंकोचसिद्धस्तिष्ठत्येव । न च , * भोक्ता भोग्यम् * इत्यादिना स्वस्यापि फलित्वश्रवणात् मन्त्रे शब्दसंकोचः कल्प्यत इति वाच्यम् । भोक्तृत्वश्रुतीनां परार्थभोक्तृत्वपरत्वेनासंकोचकत्वात् । भोक्तृत्वस्य परार्थत्वं व्याहतमिति चेत् , उत्तरोत्तरेश्वरभोगं प्रति स्वस्य भोग्यतातिशयसिद्ध्यर्थत्वेन तदुपपत्तेः ; पुष्पादेस्सौरभ्यादिकस्येव चेतने भोक्तृत्वगुणस्य भोग्यताहेतुत्वात् । तच्च मिथुनस्य संश्लेषे पत्नीभोक्तृत्वं पतिभोगातिशयार्थमिति स्पष्टम् । अतः * भोक्ता * इत्यादिश्रुतीनां नमश्शब्दादिसंकोचकत्वाभावात् केवलभोग्यत्वलक्षणस्वरूपाविर्भावप्रार्थनोपपत्तेः तत्क्रतुन्यायसिद्धिः ॥

किंच * अहमन्नम् * इत्यादिश्रुतिरपि उक्तस्वरूपयाथात्म्याविर्भावे प्रमाणम् । तत्र प्रथमं भोग्यत्वस्वरूपाविर्भावमुक्त्वा तदर्थत्वेन पश्चात् भोक्तृत्वाविर्भाव उक्तः । * अदन्तमद्मि * इति च भगवद्भोक्तृत्वानन्तरं स्वभोक्तृत्वप्रतिपादनात् स्वभोक्तृत्वस्येश्वरभोगार्थत्वमवगम्यते । न चेयं श्रुतिः स्वस्य अप्रधानभोक्तृत्वद्योतिका , * सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता * इति ब्रह्मतुल्यभोक्तृत्वविरोधात् । तस्मात् स्वार्थभोक्तृत्वपरार्थभोक्तृत्वप्रतिपादकश्रुतिभ्यामपि फलभेदसिद्धिः । तर्हि तादृशशेषत्वयाथात्म्यस्य व्यासादीनां संसारित्वादप्रतीतत्वेऽपि मुक्तिदशायां प्रतीतत्वेन तत्रापेक्षायां च प्रतिबन्धकाभावात् सर्वेषामप्युक्तस्वरूपाविर्भावापत्तिः इति चेत् ; न , * सर्वं ह पश्यः पश्यति * इत्युक्तस्वरूपयाथात्म्ये प्रतीतेऽपि तत्राभिलाषो न जायते प्रतिबन्धकसत्त्वात् ; प्रतिबन्धकश्चेश्वरसंकल्पः ; स च ब्रह्मणा सह सर्वान् कामानश्नामि , सर्वविधकैङ्कर्यं कुर्यामिति संकल्पपूर्वकमनुष्ठितभक्तिप्रपत्तिरूपकर्मजन्यापूर्वलक्षणः ; यागादेः फलदानसंकल्पो अनित्यः भक्त्यादेः फलदानसङ्कल्पः यावदात्मभावित्वान्नित्यः ; * न ह्यध्रुवैः प्राप्यते * इत्यत्र विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् , ध्रुवैः प्राप्यत इत्यर्थः ॥

न च * प्रकाश्यन्ते न जन्यन्ते * इत्यादिविरोधः यावदात्मभाविप्रकाशानुवृत्तेःअपूर्वस्थानीयेश्वरसंकल्पसाध्यत्वात् । ननु उक्तस्वरूपयाथात्म्यनिष्पत्तेःअकामनाविषयत्वेऽपि प्राप्तिदशायां सर्वेषामपि स्वरूपयाथात्म्याविर्भावो न विरुध्यते । न च तत्क्रतुन्यायात्तदसिद्धिः तस्यायोगव्यवच्छेदकत्वात् । तदुक्तं वेदान्ताचार्यैः * उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया । सा तत्क्रतुनयग्राह्या नाकारान्तरवर्जनम् ॥ * इति । ततश्च भक्तिप्रपत्तिरूपतत्तत्कर्मजन्यापूर्वस्थानीयनित्यसंकल्पसत्त्वेऽपि न तस्य फलदशायामाकारान्तरप्राप्ति-

प्रतिबन्धकत्वमिति चेन् : सत्यम्, न क्रतुन्यायेन हि उपासितगुणाविरुद्धाकारान्तरानुप्रवेशोऽभिमतः ; न तु उपासितगुणविरुद्धाकारान्तरानुमतिः : तथात्वे अयोगव्यवच्छेदस्यैव असिद्धिप्रसङ्गात् । अत्र च परार्थकैङ्कर्यप्राप्तिलक्षणस्वरूपयाथात्म्याविर्भावस्य स्वार्थानुभवकैङ्कर्याविर्भावविरोधितया उपायदशायामुपासितस्य स्वार्थानुभवकैङ्कर्यप्रदत्वस्य फलदशायां बहिष्क्रियैव स्यात् । ततश्च यथाक्रतुश्रुत्यर्थरूपस्य उपासनषडङ्गजन्यस्य संकल्पस्य परार्थानुभवकैङ्कर्याभिलापप्रतिबन्धकत्वात् न सर्वेषां तत्प्राप्तिः ॥

न चास्य निग्रहरूपत्वानुग्रहरूपत्वविकल्पकृतदोषस्य संभवः ; अस्य न्या ( सस्यो ) स्युपासकापेक्षया अनुग्रहत्वात्, शरणागतापेक्षया निग्रहत्वात् ; यागादिजनितस्वर्गादिप्रदानसंकल्पो हि स्वर्गार्थ्यपेक्षयाऽनुग्रहरूपः, मुमुक्ष्वपेक्षया निग्रहरूपश्च दृश्यते ? तद्वत्, तस्मात्, प्रणवावगतस्वरूपयाथात्म्यानुगुणपरार्थकैङ्कर्यप्रदत्वस्योत्तरचतुर्थ्याऽवगतस्य उत्तरवाक्ये उपास्यगुणत्वेन अनुसन्धानात् ; तत्क्रतुन्यायेन फलदशायामपि तत्सिद्धेः ; * अहमन्नम् * इत्यादिश्रुतेश्च परार्थकैङ्कर्यं सिद्धमिति । फलसंयोगभेदात् विद्याभेदसिद्धिरिति ॥

संग्रहस्तु :

* भोक्ता * इत्यादिश्रुतेः मन्त्रे स्वभोक्तृत्वनिवारकः । नमश्शब्दप्रभृतिकस्सङ्कोचं भजते यतः ॥<br>
अतः परार्थकैङ्कर्यप्रार्थनाया अभावतः । तत्क्रतुन्यायतस्तस्य प्राप्तौ सिद्धिरसंगता ॥<br>
प्रतिबन्धकराहित्याद् मुक्तिभेदोऽप्यसंगतः । ततः फलस्य भेदेन विद्याभेदो न युज्यते ॥<br>
इति चेत्तन्न भोक्तृत्वश्रुतिरन्यार्थतापरा । संकोचिका नैव भवेन्नमश्शब्दादिकस्य सा ॥<br>
अतः परार्थकैङ्कर्यकामात्तत्क्रतुनीतितः । * अहमन्नश्रुतेः तच्च स्वयमाविर्भविष्यति ॥<br>
तत्क्रतुन्यायतोऽन्येषां स्वयमाविर्भविष्यति । कामाभावेऽपि पारार्थ्यम् ; इति चेत् तदसंगतम् ॥<br>
अत्राप्रतीतं पारार्थ्यं मुक्तौ नाविर्भविष्यति । तत्क्रतुन्यायतस्तच्च विरुद्धाकारयोगतः ॥<br>
* सर्वं ह पश्यः इत्यादेः ज्ञातृत्वं चास्य यद्यपि । तथापि तद्रुचिर्न स्यादुक्तन्यायानुरोधतः ॥<br>
भक्तिप्रपत्तिनिष्ठानामतो नैवास्य संभवः । तस्मात्फलस्य संयोगभेदाद्विद्या च भिद्यते ॥

इति फलनियमाभावाधिकारः ॥ १९ ॥

॥ २० ॥ अथ विषयनियमाधिकारः

## विषयनियमम्

न केवलं कृत्स्नानुबन्ध्यनियमात्फलरूपत्वं प्रसाध्यते ; अपि तर्हि ? तेषु कस्यचिन्नियमादपि तत्साध्यत इति सङ्गतिः ॥

पूर्वाधिकारे सर्वशब्दासङ्कोचादनुभवकैङ्कर्ययोः स्वार्थतारुचिजनकपापनाशोऽपि विवक्षितः इति शरणागतेः सर्वफलसाधनत्वमुक्तम् । तत्साधनत्वं च मां शब्दोक्तसुलभविषयस्य । अतः विषयफलं विषयिण्युपचर्य फलभेदाद्विद्याभेद इत्युक्तमिति पूर्वाधिकारार्थशङ्कापरिहारकत्वादुत्तराधिकारसङ्गतिः ॥

संशयस्तु ; भगवदुपायत्वं सहेतुकम्, उत निर्हेतुकमिति ; तदर्थम्, शरणागतिविद्या फलरूपा न भवति

उत भवतीति ; तदर्थम्, शरणागतिः न्यासान्न भिद्यते – उत भिद्यत इति ; तदर्थम्, न्यासः शरणागतिवन्नियतविषयः, उत अनियतविषय इति ; तदर्थं, न्यसस्यार्चावतारविषयत्ववत् अन्तर्यामिविषयत्वमपि नास्ति, उतास्तीति तदर्थम्, तस्योपासनारूपत्वमपि न विद्यते उत विद्यत इति । यदा उभये उपासनरूपत्वं नास्ति, तदा अन्तर्यामिविषयत्वायोगात् न्यासः शरणागतिवत् नियतविषय एवेति उभयोस्तादात्म्यसिद्धिः ; यदाचोपासनरूपत्वे प्रमाणमस्ति ; तदा, अन्तर्यामिविषयत्वसंभवात् अनियतविषयो न्यासः ; नियतविषयायाः शरणागतेः भिद्यत इति तस्याः फलरूपत्वान्निर्हेतुकत्वसिद्धिरिति पूर्वपक्षे सिद्धान्ते च फलफलिभावः ॥

पूर्वपक्षश्च ; न्यासस्योपासनात्मकत्वं वदन् वादी प्रष्टव्यः ; अहिर्बुध्न्यसंहितादिषु विहिततान्त्रिकमन्त्राङ्गकस्य वा, वसुरण्यादिमन्त्राङ्गकस्य वा न्यासस्योपासनत्वमुच्यते ? नाद्यः, * आर्तानामाशुफलदा सकृदेव कृताह्यसौ * इत्यादिविरोधात् ; न द्वितीयः, तस्य तथात्वे नियामकाभावात् ; प्रत्युत, * तेषां तु तपसां न्यासमतिरिक्तं तपश्श्रुतम् * इदं महोपनिषदं देवानां गुह्यमुत्तमं इत्यादिषु संहितादिषु सकृत्त्वेन विहितान्न्यासात् श्रुतावतिरिक्ततपस्त्वेन श्रुतस्य न्यासस्याभेदप्रतिपादनात् । ननु, संहितासु तान्त्रिकमन्त्रविधानात्, यज्ञाङ्गकल्पनस्य सुदर्शनभगवदात्मकतया विपरिणामाच्च भेदसिद्धेः न प्रत्यभिज्ञासिद्धिः इति चेत्, नैवम्, मन्त्रादिभेदेऽपि अङ्गिमात्रप्रत्यभिज्ञायां विरोधाभावात् ; विवाहादौ, तत्तत्सूत्रभेदेन मन्त्रादिभेदेऽपि प्रधानाभेदो हि दृश्यते ? न च वसुरण्यादिमन्त्रकस्याधिकृताधिकारत्वात् शरणागतेः सर्वाधिकारत्वाच्च भेदः, मन्त्रस्वभावकृताधिकारभेदस्यार्चनादाविव प्रधानभेदकत्वासिद्धेः ; अत एव पुरुषविद्यागतिचिन्तनाद्यङ्गकत्वमपि न विद्याभेदसाधकम् ॥

न च प्रधानैक्ये वेदविहितमन्त्राङ्गाधिकारविरुद्धमन्त्रादिविधानानुपपत्तिः ; स्मार्तानां मन्त्रादीना विरोधाधिकरणन्यायेन बाधापत्तेरिति वाच्यम् ; श्री पाञ्चरात्रस्य वेदतुल्य प्रमाणतया तेषां विकल्पतः स्थाप्यत्वात् ; अतः सकृत्कर्तव्यत्वेन विहितात् स्मार्तन्यासात् वसुरण्यादिमन्त्रकः श्रौतो न्यासो न भिद्यते ; अतः, सोऽपि सकृदेव भवति । एवं सकृत्त्वे प्रमाणसंभवात् आवृत्तौ तदभावाच्च, न्यासस्य सर्वत्रानुपासनात्मकस्य नान्तर्यामिविषयत्वयोग्यतेति, उभयविधोऽपि न्यासोऽर्चावतारविषय एवेति, नियतविषयायाः शरणागतेः न भिद्यते ; अतः फलप्रपत्त्यसिद्धेः न निर्हेतुकत्वसिद्धिरिति ॥

अत्र सिद्धान्तः ; श्रीपाञ्चरात्रस्य वेदतुल्यप्रमाणत्वात् श्रौतानां स्मार्तानां च विकल्पेनैकत्रोपसंहार इति न शक्यते वक्तुम् । तत्र व्यवस्थितविकल्पस्याष्टदोषदुष्टत्वात् । व्रीहियवशास्त्रयोरिव आधुनिकेषूभयानुष्ठानादर्शनात् ; व्यवस्थितिश्च न संभवति । तद्व्यवस्थापकदेशकालाधिकारिविशेषस्य प्रमाणासिद्धत्वात्, तथा कैश्चिदनुष्ठानादर्शनाच्च । अतः श्रौतस्मार्तपरस्परविरुद्धाङ्गोपसंहारस्यैकत्राशक्यत्वात् विद्याभेदस्तावदावश्यकः तत्र वसुरण्यादिमन्त्राङ्गका उपासनात्मिका भवितुमर्हति । * ओमित्यात्मानं युञ्जीत * इत्यत्रयुञ्जीतेति युजेः युजिर् योगे, युज समाधौ इति वा योगार्थकत्वे समाध्यर्थकत्वे वा ध्यानवाचकत्वात् । * योगस्सन्नहनोपायध्यानसंगतियुक्तिषु * इति हि पर्यायवचनम् ? अत्र सन्नहनाद्यर्थकत्वायोगात् उभयथापि ध्यानसिद्धिः । समानप्रकरणे च सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः * इत्यादिना न्यासं विधाय * दहरम् * इत्यादिना तस्य ध्यानरूपत्वं स्थानविशेषं

चाभिधाय, * यद्वेदादौ * इत्यादिना प्रणवमन्त्रकत्वं चोक्तम्. न्यासस्योपासनत्वं भाष्येप्युक्तम्, "इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयते" इति. तथा "सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम्" इति. तथा "ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्" इति च एवम् * आवृत्तिरसकृदुपदेशात् * इत्येवमादिषु स्थलेष्वपि वेदनशब्दस्य ध्यानपर्यायत्वमुक्तम्. अत्रापि * य एवं वेद * तस्यैवं विदुषः * इति वेदनशब्दश्रवणात् । ध्यानपर्यायत्वसिद्धिः ॥

किं च अस्य पुरुषविद्यागतिचिन्तनाङ्कत्वाच्चावृत्तिसिद्धिः, तयोरनावृत्तिरूपत्वे विदेयत्वासिद्धिः, तस्मात्, वसुरण्यादिमन्त्रकन्यासस्योपासनत्वात् * तस्मिन् यदन्तस्तदुपासितव्यम् * इत्यन्तर्यामिण उपास्यत्वेनोक्तत्वाच्च, अन्तर्यामिविषयत्वसिद्धिः उपासनस्य सर्वस्य * आत्मेत्येव तु गृह्णीयात् * आत्मेत्येवोपासीत * आत्मेति तूपगच्छन्ति ग्राहयन्ति च * इत्यन्तर्यामिविषयत्वं श्रुतिसूत्रयोस्सिद्धम्. एवं न्यासविद्यायाः सद्विद्यादितुल्यत्वे * तेषां तु तपसां न्यासमतिरिक्तं तपः श्रुतम् * इदं महोपनिषदं देवानां गुह्यमुत्तमम् * इति । श्रौतस्मार्तयोरैक्यप्रतिसन्धानं कथमिवोपपद्येत इति चेत् ।

उच्यते; प्रथमं तावत् * स्वाध्यायोऽध्येतव्यः * इति विधिना साङ्गाध्ययने उक्ते, आपातप्रतीत्या पूर्वभागविचारानन्तरमुत्तरभागविचारे कृते, तत्र पूर्वद्विके श्रुते, कस्य चित् सुकृतविशेषात् * भूमिरापोऽनलो वायुः * इत्यादिश्रवणेनार्जुनस्येव शरीरवदत्यन्तपारतन्त्र्यज्ञानं जायते; कस्य चिन्न न जायते; एवं तृतीये, प्रथमद्वितीयपादयोः श्रवणेन कस्य चित् विलम्बासहत्वं जायते; कस्य चिन्न न जायते. तत्र शास्त्राधिकृतविलम्बक्षमशक्तस्वतन्त्राणां सदादिविद्या विहिता; शास्त्राधिकृतविलम्बाक्षमशक्तस्वतन्त्राणां न्यासविद्या विहिता, शास्त्राधिकृतविलम्बाक्षमाशक्तस्वतन्त्राणां तदनधिकृतविलम्बक्षमशक्तस्वतन्त्राणां च कर्मयोगादिकं विहितम्. अत्र शास्त्राधिकृत तदनधिकृतविलम्बाक्षमाशक्तस्वतन्त्राणां उज्जीवनाय भगवानपारकारुण्यपरवशो न्यासविद्याविषयभूतं श्रवणमननफलभूतं ध्यानरूपमात्मसमर्पणमादाय तं च वसुरण्यादिमन्त्रपुरुषविद्यागतिचिन्तनाद्यनङ्गकमावृत्त्यादिरहितमानुकूल्यादिपश्चाङ्गकत्वेन विहितस्वोपायभावमर्चावतारविषयं षडङ्गयोगं कृत्वाऽवतारयामास ॥

तथा, शास्त्राधिकृतानधिकृतशक्ताशक्तविलम्बक्षमतदक्षमपरतन्त्राणां उज्जीवनाय तदेव न्यासविद्याविषयभूतं श्रवणमननफलभूतशास्त्रार्थाध्यवसायरूपध्यानाद्यात्मभरसमर्पणरूपं तदेव ज्ञानमादाय, तत्र पुरुषविद्यादिश्रौताङ्गमन्त्रनिरपेक्षमानुकूल्यसंकल्पादिस्मर्ताङ्गनिरपेक्षं सर्वधर्मत्यागाङ्कं प्रकटितस्वोपायाभावं अर्चावताराविषयं शरणवरणरूपमधिकारिविशेषणं कृत्वाऽवतारयामास. मोक्षस्य सदादिविद्यानिष्ठस्यैवानेकजन्मसाध्यपरभक्तिपरज्ञानापन्नपरमभक्तिसाध्यत्वात्; वसुरण्यादिमन्त्रकन्यासस्य, * यन्मरणं तदवभृथः * इति यावन्मरणमनुष्ठेयत्वात्; मोक्षस्य तावन्मात्रसाध्यत्वायोगाच्च * न्यास इति ब्रह्म * इति ब्रह्मण उपायत्वं उपासनव्यावृत्ताकार इति दर्शितम्, तस्य स्वतन्त्राधिकारत्वात्. तच्च ब्रह्मोपायत्वं तन्त्वाङ्गकलापविधानेन पिहितम्, तदेव ब्रह्मोपायत्वं, षडङ्गस्यापि स्वतन्त्राधिकारत्वात् आनुकूल्याद्यङ्गविधानेन पिहितम्. तच्च ब्रह्मण उपायत्वं शरणागतौ परतन्त्राणां प्रकटितम्. एवम्, आत्मनिक्षेपस्य न्यासविद्याविहितावृत्त्यादिगुणरहितप्रधानज्ञानरूपत्वात्, * तेषां तु तपसां

न्यासम् * इत्यादिना ऐक्योपदेशः, आनुकूल्याद्यङ्गकलापादिना तदुपबृंहणं च युज्यते. अतःन्यासस्य ध्यानात्मकत्वेनोभयरूपत्वात् अन्तर्यामिविषयत्वं अर्चावतारविषयत्वं चोपपन्नम् ।

न च वाच्यम्; षडङ्गयोगवत् शरणागतेरपि वसुरण्यादिमन्त्रकध्यानात्मकन्यासविद्याविकृतित्वाविशेषात् विषयानियमः किं न स्यादिति; वसुरण्यादिमन्त्रकन्यासस्य षडङ्गयोगस्य च स्वतन्त्राधिकारत्वात्, पिहितब्रह्मोपायत्वात्, अङ्गकलापयुक्तत्वात्, साधनत्वाभिमानयोग्यत्वात्, स्वातन्त्र्यगर्भभरसमर्पणरूपत्वात्, अत्यन्तसाजात्यात्, तत्रैवानियतविषयत्वोक्त्युपपत्तेः; शरणागतावुक्ताकाराभावात्, पारतन्त्र्यगर्भभरस्वीकारप्रार्थनारूपत्वाच्च, अत्यन्तं न्यासविसजातीयत्वाच्च नियतविषयत्वोक्तिरुपपद्यते. तस्मात्, न्यासस्यानियतविषयत्वात्, शरणागतेः नियतविषयत्वाच्च, भेदसिद्धेः फलप्रपत्तिसिद्धिः ॥

ननु, वसुरण्यादिमन्त्रकन्यासस्य अन्तर्यामिविषयत्वेन शरणागतिभिन्नत्वेपि षढङ्गस्यार्चावतारविषयतया शरणागत्यभेदः किं न स्यात् ? इत्यत्राह (इदुतान् इत्यादि)

अर्चावतारगुणानां सर्वेषां षडङ्गयोगे उपयोगाभावात् । तस्याप्यनियतविषयत्वं संभवति; विमुखचेतनानां वैमुख्यवारकत्वस्य, रुचिजनकत्वस्य उपायोपेयोभयात्मकत्वस्य च तत्रोपयोगाभावात्, षडङ्गप्रपत्तेः साधनत्वेन अद्वेषाभिमुख्ययोः कटाक्षद्वारकसुकृतमूलकत्वात्; स्वगतस्वीकारस्योपायत्वेन * तत्रार्चावतारस्य केवलं फलप्रदत्वेनानुपायत्वात्; तत एव प्राप्यप्रापकैक्यस्यापि विनियोगाभावाच्च; उक्तगुणविशेषविशिष्टोऽर्चावतारष्षडङ्गे विषयः इति निर्बन्धो नास्ति; परं तु सौलभ्यमात्रं तत्रोपयुक्तम्; कस्य चिदर्चावतारे प्रपन्नस्य, पश्चाद्योगसामर्थ्ये सति अन्तर्यामिणोपि सुलभत्वात् तन्निष्ठाप्युपपद्यत इति षडङ्गोऽप्यनियतविषयः इति भावः ।

सङ्ग्रहस्तु:—

अभेदात् स्मृतिसंसिद्धात् षडङ्गप्रणवाङ्गयोः । अर्चाविषयतो विद्या न भिन्नेति न युज्यते ॥
इयमर्चावतारैकविषयत्वाफलात्मिका । न्यासस्त्वन्तर्नियन्त्रर्चाविषयत्वेन साधनम् ॥
अन्तर्याम्याश्रयत्वं च ध्यानात्मकतया भवेत् । ध्यानरूपत्वमप्यस्य युञ्जीतेति विधानतः ॥
सन्न्यासयोगादित्युक्त्योपासितव्यमितिश्रुते. । तेषां तु तपसां न्यासमित्यादि वचनं तु यत् ॥
विरुद्धाङ्गोपसंहारान्न तच्छ्रौतस्य वाचकम् । किं त्वङ्गपट्कसहितं सुकरं न्यासमाह हि ॥
श्रौतस्मार्तैक्यबुद्धिस्तु तदङ्गैक्यनिबन्धना । अयं विवेको विज्ञेयो भगवद्भावगोचरः ॥
शक्तस्वतन्त्रस्य चिरं सहिष्णोश्च द्विजन्मनः । सदादिविद्याविहिता तदङ्गस्य विधिः पुनः ॥
तस्याशक्तिविशिष्टस्यतदंशाङ्गविधिः पुनः । सहिष्णुशक्ताशक्तात्मतन्त्रशूद्रादिगोचरः ॥
शक्तस्वतन्त्रस्य चिरासहिष्णोश्च द्विजन्मनः । वसुरण्यादिमन्त्रोक्ता न्यासविद्या विधीयते ।
कालक्षेपाक्षमाशक्तस्वतन्त्रा ये तु मानवाः ॥ तेषामुज्जीवनायाहषडङ्गं योगमुत्तमम् ।
स्वात्यन्तपरतन्त्राणां सर्वेषामपि देहिनाम् । श्रौतस्मार्ताङ्गरहितं धर्मत्यागाङ्कं परम् ॥
अर्चावतारविषयमधिकारिविशेषणम् । स्वोपायत्वप्रकटितशरणागतिलक्षणम् ॥
अवातीतरदत्यन्तदयापरवशोविभुः । षडङ्गोऽन्तर्यामिणि च कृतः पद्मभुवा स्वयम् ॥
अतस्तस्याप्यनियतो विषयो भिद्यते हि सः ॥

इति विषयनियमाधिकारः ॥ २० ॥

## (२१ प्रपत्त्यधिकारज्ञानशोधनाधिकारः)
## (इदिल्प्रपत्तिपण्णुमधिकारिकळ् मूवर)

एवम् अर्चावतारपर्यन्तसौलभ्यविशिष्टं मां शब्दार्थभूतम्, सिद्धोपायम्, उक्त्वा तदसाधारणाधिकारस्य तत्पूर्वपदोपस्थापितस्यस्वरूपपर्यालोचनयापि, वरणस्य फलत्वं स्थाप्यते. सर्वधर्मपरित्यागस्य सिद्धोपायाधिकारकोटिनिविष्टत्वम्, स्वीकाराङ्गकोटिनिविष्टत्वमप्यस्ति; तत्र, अङ्गकोटिनिविष्टत्वं उत्तरत्रोच्यते; अत्र पुनः अधिकारकोटिनिविष्टत्वमुच्यते. पूर्वाधिकारे, अनुबन्धेषु कस्य चिन्नियमात् फलप्रपत्तिस्साधिता; अत्र नियमान्तरात्, तत् साध्यते. पूर्वं त्रैवर्णिकत्वादिलक्षणसाधारणाधिकारनियम उक्तः; अत्रासाधारणाधिकारिनियम उच्यते.

संशयस्तु—भगवदुपायत्वं निर्हेतुकम्, उत सहेतुकम् तदर्थम् शरणागतेः फलत्वं न संभवति उत, संभवतीति. तदर्थम् शरणागतिःन्यासात् न भिद्यते उत भिद्यते इति, तदर्थम्, * इदं शरणम् * इत्यत्रोक्तमधिकारित्रयम् न्यासे संभवतीति उत न संभवतीति. तदर्थम्, तद्वचनस्थो विज्ञान शब्दः अशक्तिपरः उत ज्ञानविशेषपरः. तदर्थम्, * देवे परिबृढतया वा विदितया * इत्यनेनाशक्तिपरत्वं निर्णतुं शक्यते उत ज्ञानविशेषपरत्वमिति. यदा देवेपरिबृढतया * इत्यनेन अशक्तिपरत्वनिर्णयः तदा वचनस्थ विज्ञान शब्दस्य अशक्तिपरत्वात्, तत्रोक्ताधिकारित्रयस्य न्यासे संभवात् तदधिकारत्वेनोक्ता शरणागतिःन्यासान्न भिद्यत इति तस्याः फलत्वासिद्धेः न निर्हेतुकत्वसिद्धिः इति पूर्वपक्षः यदा * देवे परिबृढतया * इत्यनेन विज्ञानविशेषपरत्वनिर्णयः, तदा वचनस्थ विज्ञान शब्दस्य ज्ञानविशेषपरत्वात् तदुक्ताधिकारित्रयस्य न्यासे असंभवेन तत्रितयाधिकारत्वेन श्रुता शरणागतिः न्यासात् भिद्यते इति फलत्वसिद्धौ निर्हेतुकत्वसिद्धिरिति सिद्धान्तः।

(इदिल्) इत्यादि. अज्ञसर्वज्ञभक्तानां त्रयाणांशरणागतावधिकारात् न्यासे स्वरूपविरुद्धत्वज्ञानस्यानधिकाराच्च न्यासाच्छरणागतिर्भिद्यत इत्यर्थः ॥ तत्र प्रमाणमाह * इदं शरणम् * इति. तत्र विज्ञानशब्दः उपायान्तरस्वरूपविरुद्धज्ञानपर इति भावः ॥

ननु विजानताम् * इति ज्ञानी अशक्तो लक्ष्यते; न तु उपायान्तरस्वरूपविरुद्धत्वज्ञानवानुच्यते अन्यथा अशक्तस्य संग्रहाभावप्रसङ्गात्. न च वाच्यम् अज्ञविज्ञानशब्दयोरज्ञानाशक्त्युपस्थापकत्वे उपायान्तरतदनुष्ठानाशक्तानां सर्वेषामपि प्रपत्तावधिकारात् कर्मयोगाद्यङ्गविधिवैयर्थ्यापत्तिरिति. विज्ञानपदं स्वरूपविरुद्धत्वज्ञानपरमितिपक्षेऽपि अशक्तस्याज्ञशब्दात्संग्रहो वाच्यः ततश्च त्वन्मतेपि कर्मयोगादि विधिवैयर्थ्यं तुल्यमिति चेत् तत्राह (इप्पडि शोल्लुकिरदुमुत्तत्तप्पत्त) अधिकारिविषयेऽपि स्वरूपविरुद्धत्वज्ञानम् अनुयायि, भेदकीर्तनम् तत्प्राधान्यात् अतोऽस्मिन्मते कर्म योगविधेः नानर्थक्यम्. उपायान्तरस्वरूपविरुद्धत्वज्ञानरहितानां तत्रोपायान्तरे चाधिकारित्वात् अतोऽत्राज्ञाशक्तयोरधिकारित्वविध्यनुपपत्त्या विज्ञानशब्दस्य स्वरूपविरुद्धत्वज्ञानपरत्वमित्यर्थः ॥

ननु ममाप्यङ्गविधेर्नानर्थक्यम्; भक्तेरनुयायित्वात् विलम्बाक्षमाणां प्रपत्तिः तत्क्षमाणां शक्तानां भक्तिः, तत्क्षमाशक्तानां नामसंकीर्तनादिकर्मयोगः इति नातिप्रसङ्गः न च वाच्यम् अत्र भक्ति शब्दितस्य काष्ठापन्नस्य ज्ञानविशेषस्याप्यज्ञाशक्तयोरभावात् तस्याप्यनुयाय्यधिकारत्वं न स्यात् यदि विज्ञानशब्दोपस्थापितप्रापकान्तरस्वरूपविरुद्धत्वज्ञानपूर्तेः अज्ञाशक्तयोरभावेपि तद्गोचरमन्दज्ञानसंभवात् अनुयायित्वं तस्येष्यते; तर्हि अज्ञाशक्तयोःकाष्ठापन्नभक्तिराहित्येऽपि जन्मान्तरविलम्बासहत्वलक्षणमन्दभक्तिसत्त्वात् तस्याप्यनुयाय्यधिकारत्वोपपत्तिरिति समश्चर्चे इत्यत्राह (इम्मूत्रम् मुत्र तत्त्वत्तैयुम् पत्तिवरुम्) एवम् मतद्वयेऽपि शङ्कापरिहारयोस्साम्येपि विज्ञानशब्दस्य साधनान्तरस्वरूपविरुद्धत्वज्ञानपरत्वे त्रयाणां तत्त्वत्रयमूलकत्वं नाम सामग्री औचित्यलिङ्गमस्तीत्यर्थः ।

न केवलं लिङ्गं श्रुतिरपीत्याह (एनन्नानित्यादि) द्रमिडोपनिषत् सन्दिग्धार्था इत्यत्राह (अविद्यात) इति श्रीमद्भट्टाचार्यवचनम्. * अज्ञसर्वज्ञभक्तानां गतिर्गम्यो भवेद्धरिः * इति शौनकवचनम्. जितन्ता च अस्मदुक्तार्थे प्रमाणमित्यर्थः ॥

अत्रैवं पूर्वपक्षी मन्यते—उदाहृतवचनस्थविज्ञानशब्दो नोपायान्तरस्वरूपविरुद्धत्वज्ञानपरः;

* अविद्यातःतोदेवे परिबृढतया वा विदितया * इति श्रीमद्भट्टारकार्यैः * सदृशोपायवैधुर्यं साक्षाद्भागवतो विदन् । सर्वज्ञश्शरणं याति योगमार्गपराङ्मुखः * इति वरदाचार्यैश्च, प्रपत्त्युपयुक्तपरिबृढत्वरूपशरण्यगुणविशेषज्ञानमिति व्याख्यातत्वात्. एवं चावाज्ञानं नाम उपायान्तरविषयज्ञानाभावः, अस्मिन्नप्युपाये सूक्ष्मविशेषज्ञानभावश्च भवति. विज्ञानमपि उक्तोभयज्ञानविशेष एव; ततश्च एवमर्थस्संपद्यते ।

उपायान्तरम्, उक्तोपायं च अजानतामपि इ(नी)दमेव; तदुभयगोचरविशेषज्ञानसत्त्वेऽपि, शक्त्यभावे सति तथाभूतानामपि इदमेव ज्ञानशक्तिसंभवेऽपि भक्त्या विलम्बाक्षमाणामपि इदमेव इति ॥

अन्यथा धर्माणां स्वरूपविरुद्धत्वात् ज्ञानविवक्षायां चरमश्लोकाद्युपदेष्टॄणां व्यासादीनां उक्तज्ञानसत्त्वेन तेषांप्रपत्तावेवाधिकारस्स्यात्; ततश्च भक्तत्वं व्याहान्येत ।

न च तेषां प्रमाणोपदेशसमये तथाज्ञानसत्त्वेऽपि पश्चात् व्याकुलचित्ततया उपायान्तरानुष्ठानृत्वमिति वाच्यम् तथात्वे प्रमाणाभावात्न च तेषां प्रपन्नत्वेऽपि लोकसङ्ग्रहार्थमुपासनानुष्ठनमिति वाच्यम् । स्वाधिकारविरुद्धस्य लोकसंग्रहार्थतयाऽनुष्ठाने प्रत्यवायापत्तेः अन्यथा सन्न्यासिनोऽपि लोकसंग्रहार्थं गृहस्थधर्मानुष्ठानप्रसक्तेः न च कैङ्कर्यत्वेन उपायान्तरानुष्ठानसंभवः प्रपत्त्यपेक्षितानां तथानुष्ठने विरोधाभावेऽपि तद्विरुद्धानां कैङ्कर्यत्वेनानुष्ठानेऽपि विरोधापत्तेः ॥

अत एव * नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते * इत्येतदपि अशक्तस्यातिकृच्छ्रेषु दुराशादार्ढ्यशालिनः कस्यचित् बुद्धिदौर्बल्यं लघुन्यायस्य कारणम् । तत्र प्रपत्त्यनर्हाणां अन्यं दित्यपि युज्यते ॥

व्यासादिषु च नैवैषा नीतिस्संशयघातिषु. * इति परिहृतम्. एवम् अज्ञानां अशक्तानां भक्तिपरवशानां च प्रपत्त्यधिकारत्वमिति पूर्वोक्तार्थपरत्वात्, उक्तवचने स्वरूपविरुद्धत्वज्ञानस्यापि अधिकारत्वमिति सिद्धमिति, स शरणागतिर्भिन्ना अतो न तस्याः फलत्वमिति न निर्हेतुकत्वसिद्धिरिति ।

सिद्धान्तस्तु—* इदं शरणमज्ञानम् * इति वचने विज्ञानताम्, इति विज्ञानशब्देन ज्ञानविशेष एवोपस्थापितः; नत्वशक्तिः; * देवे परिबृढतया वाविदितया * इति विदिशब्दस्य परिबृढत्वलक्षण कल्याणगुणज्ञानपरत्वेन व्याख्यातत्वात्; तच्च परिबृढत्व ज्ञानम् * सदृशोपायवैधुर्यं साक्षाद्भगवतो विदन् * इत्यत्र भगवत्सदृशोपायाभावज्ञानमिति विशेषितम्. * अज्ञास्सर्वेऽभक्तानाम् * इति शौनकवचने विज्ञानविशेष एवोक्तः; अतः, सर्वत्र ज्ञानविशेषस्यैवोक्तत्वात्, अशक्तिपरत्वे, सर्वत्रलक्षणा, अश्रुतकल्पना च स्यात्॥

न च अशक्तस्यावश्यं सङ्ग्राह्यत्वात् - लक्षणा युक्ता इति वाच्यम्, अज्ञानशब्द एव तदुपपत्तेः न च विनिगमनाविरहः; पूर्वाचार्यव्याख्यानानुरोधस्य, अजहल्लक्षणायाश्च, विनिगमकत्वात्.

किं च * विधिस्तु धारणेऽपूर्वत्वात् * इत्यत्र अज्ञानादित्रयस्य प्रपत्त्यधिकारत्वं प्रमाणान्तराप्राप्तत्वात् अपूर्वं हि ? अप्राप्तं अपूर्वमिह विधीयते; ततश्च विज्ञानशब्दस्य लक्षणा न युज्यते; * न विधौ परः शब्दार्थः * इति निषेधात्. अज्ञानशब्देऽपि न लक्षणानवत्यज्ञानशब्दस्य योगपरत्वात्; अन्यथा, शास्त्र-पर्युदस्तस्य असंग्रहापत्तेः. योगराहित्यं तु शक्तिरहितानां शास्त्रतः पर्युदस्तानां च अविशिष्टमिति, सर्व-संग्रहस्सिध्यति ॥

अत एवोच्यते * सर्वज्ञाश्शरणं यानि योगमार्गपराङ्मुख(:) * इति ततश्च योगाशक्तानामपीदम्; तत्सत्त्वेपि विज्ञानविशेषवतामपीदम्; तस्मिन् योगे सति, भक्तिपरवशानामपीदम्: इति तात्पर्यम्; क्वचिदपि लक्षणाभावात् पूर्वाचार्यैः विज्ञानशब्देन योगशब्दस्य विशेषितत्वाच्च, वचनान्तरानुगुण्यात्, व्याख्यानानुगुण्यात्, अपूर्वार्थविषयत्वादस्याच्च. * उपायान्तरविज्ञानाशक्तिरज्ञस्य युज्यते * इत्यत्र ह्युपायान्तरस्य विज्ञानमिति तत्पुरुषादपि कर्मधारयो निषादस्थपत्यधिकरणसिद्धो युक्तः. अज्ञानशब्दश्शा-विद्याशब्दश्च योगे स्वरसः; * अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते * इत्यादिप्रसिद्धिप्राचुर्यात्. यद्वा विद्याशब्दस्य, * द्वे विद्ये वेदितव्ये इतिवत्, शब्दजन्ययोगजन्योभयविद्यावाचकत्वात् अविद्याशब्देन तदुभयशक्त्यभावोऽपि विवक्षित इति विज्ञानशब्दो नाशक्तिलक्षकः. अत एव "उपायान्तरविज्ञानाशक्तिः," इत्युक्तम्. तस्मात् अज्ञादिशब्दानां पूर्वपक्षोक्तार्थोऽनुपपन्नः; विज्ञानशब्दस्य भट्टाचार्य वरदार्यवचनाभ्यां उपायपरिबृढत्वोपायान्तरतुच्छत्वज्ञानपरत्वेन व्याख्यातत्वात्; तादृशविज्ञानस्योपायान्तरत्यागहेतुत्वेन पूर्वपक्षोक्त-शृङ्खलितोक्त्यसंभवश्च. ।

ननु, परिबृढत्वाविज्ञानासंभवस्य व्यासादिपुरुद्वचत्वान् कथमस्य अधिकारत्वमिति चेत् ;उच्यते, भक्त्यभावस्यापि तेषु दुर्वचत्वात् भक्तेरप्यधिकारत्वं न स्यात्; यदि तेषां अधिकारिपुरुषत्वात् आशु फलेच्छारूपो भक्तिभूमा नास्तीत्युच्यते, तर्हि, उपायोपेयगोचरसार्वज्ञ्येऽपि किंचित् वैकल्यं प्रमाणबलादभ्युपगन्तव्यम्, इति ।

किं च व्यासादीनां अधिकारविशेषाधिकृतत्वात् यथा, प्रारब्धमात्रनाशे इच्छा न जायते तद्वत् अत्रापि प्राप्यपरिबृढत्वोपायफल्गुत्वज्ञाने सत्यपि प्रारब्धखण्डनाशेपीच्छा न जायते अधिकारारम्भककर्मणो यावदधिकारसमाप्त्यवस्थानेन अनुभवनाश्यत्वात् ।

न च उपायान्तरोपेयगोचरफल्गुत्वपरिबृढत्वज्ञानस्य प्रपत्त्यधिकारत्वे, भक्तिमात्रानवकाशापत्तिः भक्तेरिवोक्तज्ञानपूर्तेरधिकारत्वेन तद्रहितानां भक्त्यारम्भोपपत्तेः ।

एवम् अस्मिन् वचने उपायान्तरफल्गुत्वज्ञानस्य शरणागत्यधिकारत्ववचनात् तस्य चाष्टाङ्गभूते षडङ्गे अत्यन्तफल्गुतरे अधिकारत्वविरोधात् तदधिकारा शरणागतिः असाधनम्, किंतु फलभूता इति विज्ञायते. ॥

यद्वा, ❋ विजानताम् ❋ इत्यत्र विज्ञानशब्दः ❋ देवे परिबृढतया इत्यनेन देवविषयविज्ञानपरः न तूपायान्तरविषयविज्ञानपरः, इति दर्शितः. सदृशोपायवैधुर्येति वरदाचार्यवचनं भट्टाचार्यवचनफलितार्थकथनम् ततश्च परिबृढत्वं उपेयाकारपरिबृढत्वम्, उपायाकारपरिबृढत्वं च विवक्षितम् ।

पूर्वत्र ❋ सदृशोपायवैधुर्यम्, इति, उपायान्तराणां फल्गुत्वं फलितार्थत्वेन विवक्षितम्; उत्तरत्र उपायान्तराणां स्वरूपविरुद्धत्वं तत्फलितार्थत्वेन विवक्षितम्. ।

यद्यपि, उपायाकारपरिबृढत्वं रस्यत्वसकृत्त्वापथ्यसहत्वनिरपेक्षत्वसिद्धत्वचेतनत्वस्वयंफलत्वफलप्रदत्व स्वरूपानुरूपत्वादीनि तथापि, अत्रोपायान्तरत्यागहेतुभूतसादृश्याभावःस्वरूपविरुद्धत्वम्; ततश्च, उपायान्तराणां भगवत्सादृश्याभावः. ।

" यथा, भगवान् स्वरूपानुरूपोपायः, न तथोपायान्तराणि " इत्येवंरूपो मतः, तस्मात् स्वरूपानुरूपत्वं च सादृश्यं विवक्षितमिति. ।

❋ विजानताम् इत्यत्र विज्ञानशब्दः उपायान्तरस्वरूपविरुद्धत्वज्ञानपरः. तस्मात् उपायान्तरस्वरूपविरुद्धत्वज्ञानस्य उपायान्तरवत् स्वरूपविरुद्धे षडङ्गेऽनधिकारात्, तदधिकारा शरणागतिः फलरूपा इति सिद्ध्यति।

एवं च ❋ मामाराधयितुं नृणांकर्म सुज्ञानभक्तयः। अशक्तानां पुनश्चैकस्सुलभोपाय उच्यते ❋ इत्यादि शास्त्रे षडङ्गाधिकारत्वेनोक्ता या उपायान्तराशक्तिः सापि शरणागतावधिकारः; स्वरूपविरुद्धत्वज्ञानं । भक्तिपारवश्यं चेति षडङ्गव्यावृत्तं विलक्षणमधिकारद्वयम् अधिकं शरणागतावधिकारः इति, अनेन वचनेनोक्तं भवति ॥

स्वरूपविरुद्धत्वज्ञानं अनुयाय्यधिकार इति, त्रयाणामपि अष्टाङ्गयोगवत् षडङ्गन्यासोपि सिद्ध्यति. अन्यथा, सुलभत्वादशक्तपरतन्त्राणामाशुफलत्वात्, भक्तिपरवशपरतन्त्राणामपि षडङ्गस्वीकारापत्तेः. षडङ्गे आर्तदृप्तयोः अशक्तिरेवाधिकारः, शक्तानामार्तानां दृप्तानां च ब्रह्मण्यादिमन्त्रकोपासनात्मकप्रपत्तावधिकारात्. अतोऽशक्तिमात्राधिकारात् षडङ्गात् अशक्त्यादित्रयाधिकारा शरणागतिः भिद्यते ।

नन्वेवम्, शक्तानामशक्तानां च शरणागतावधिकारे अष्टाङ्गषडङ्गयोगयोः अनुष्ठात्रभावेन अप्रामाण्यापत्तिः ? इति चेन्नैवम्. * नराणां बुद्धिदौर्बल्यादुपायान्तरमिष्यते * इति स्वतन्त्रस्वरूपविरुद्धत्वज्ञानाभाववतां शक्तानां अशक्तानां च यथाक्रमं तयोरधिकारसंभवात्. ततश्च नराणां इतिवचनमेवशरणवरणोपायान्तरयोः प्रतिनियताधिकारव्यवस्थापरः: बुद्धिदौर्बल्यवतां नराणां उपायान्तरं बुद्धिदौर्बल्यहीनानां प्रकृतशरणागतिः, इति हि तात्पर्यम् ? अतः इदं वचनम्, विजानताम् इत्यस्य उक्तार्थपरत्वे उपोद्बलकं च भवति ॥

ननु, बुद्धिदौर्बल्य शब्दः लघूपायप्रतिपादकप्रपत्तिशास्त्रे प्रामाण्याध्यवसायाभावपरः; नरशब्दश्चाशक्तपरः. अतः, कस्य चिदशक्तस्य कृच्छ्रोपाय एव - दुराशादार्ढ्यशालिनः, प्रपत्त्यनर्हत्वात्; उपायान्तर एवाधिकार इत्युच्यते; अन्यथा व्यासादिषु सर्वसंशयघातित्वादुक्तनीतेरसंभवात्; इति चेन्नैवम्. व्यासादि व्यावर्तनाय अशक्तस्य इति पदं तावदध्याहर्तव्यम्, तथा च अशक्तेन उपायन्तरस्येष्यमाणत्वायोगात् उपायान्तरशब्दस्तदुपायदेशवासादिपरो वाच्यः. ततश्च लक्षणा स्यात्.

ननु, बुद्धिदौर्बल्यशब्दः उपायान्तरे स्वाधिकारपरः; अतः, उपायान्तरशब्दस्य न लक्षणा चेन्न; दार्ढ्याभाववाचकस्य दौर्बल्य शब्दस्य भ्रमपरत्वे लक्षणा अस्वारस्यपत्तेः, अध्याहारदोषतादवस्थ्याच्च ॥

ननु, यदि अनध्याहारयोजनापक्षपातेन व्यासादीपूपायान्तरस्वरूपविरुद्धत्वलक्षणशास्त्रार्थे ज्ञानाभावो वा ज्ञाने सत्यपि, अध्यवसायाभावो वा, अध्यवसाये सत्यपि तस्य दार्ढ्याभावो वा कल्प्येत; तदा, अङ्गत्वेन प्रपत्त्यनुष्ठातॄणां व्यासादीनां स्वोपदिष्टशास्त्रार्थेषु ज्ञानविश्रम्भदार्ढ्याभावस्यानेकोपपत्तिप्रमाणविरोधस्स्यात्. अतस्तदविरोधायास्मिन् वचनेऽध्याहाराद्यस्वरस्याश्रयणमेव युक्तम्; भूयसां न्यायात् इति चेत् नैवम्. अत्र हि वचने, स्वारस्यबलात्, उपायान्तराधिकृतेषु व्यासादिष्वपि प्रपत्तिविषये किंचिदज्ञानं तावत्प्रतीयते * इदं महोपनिषदं देवानां गुह्यमुत्तमम * इत्यादौ प्रपत्तिविषये देवगुह्यत्वमप्यस्तीत्युक्तम्. ततश्च, देवानामिवतत्प्रसादलब्धसार्वज्ञ्यवतां व्यासादीनामपि प्रपत्तिविषये तद्याथात्म्यज्ञानं नास्तीत्यपि स्वीकार्यम्. तत्र प्रपत्तेस्साधनत्ववेषानुबन्धिप्रकारविशेषाणामङ्गत्वेन तदनुष्ठानतदुपदेशदर्शितैः तैः अवगतत्वेऽपि फलत्ववेषानुबन्धिप्रकारविशेषाणामनवगतत्वसम्भवात्, फलप्रपत्तौ प्रधानाधिकारभूतोपायान्तरस्वरूपविरुद्धत्वज्ञानाभावस्यापि तेषु सम्भवात् उक्तज्ञानाभाव एव तेषां उपायान्तरस्वीकारे हेतुरिति पारिशेष्यात्, स्वारसिकवचनार्थोऽवगम्यते. अत एव केषां चित् प्रपत्तिविषयेसार्वज्ञ्यमुच्यते, * अज्ञस्सर्वज्ञभक्तानाम् * इति.

अथवा, व्यासादीनाम्, प्रपत्तियाथात्म्यस्य फलरूपत्वस्य, तदनुबन्धिनां उपायन्तरस्वरूपविरुद्धत्वादीनां च उपदेशज्ञानयोग्यसम्भवेऽपिअनुष्ठानोपयुक्तदृढतरज्ञानं तेषां नास्ति; तेषां अधिकारिपुरुषत्वेन तत्तदधिकारारम्भकर्मण एव प्रतिबन्धकत्वात्. तस्मात् व्यासादिसार्वज्ञ्यादिप्रतिपादकप्रमाणविरोधाभावात्, देवगुह्यत्वादिवचनानुगुण्यात् अन्यथा, अध्याहारादिदोषापत्तेः, शब्दस्वारस्याच्च, बुद्धिदौर्बल्यशब्दः उपायान्तरस्वरूपविरुद्धत्वाध्यवसायाभावपरः ।

एवम्, अत्र, बुद्धिशब्दस्य, परिशेषादुपायान्तरस्वरूपविरुद्धत्वज्ञानपरत्वात्, * दैवेपरिबृढतया * इत्यस्य उपायभावपरिबृढत्वयस्य विवक्षिततया * सदृशोपायवैधुर्यम् * इत्यादितद्विवरणे " सिद्धोपायसादृश्याभावः स्वरूपविरुद्धत्वम् " इति । पर्यवसितत्वाच्च * विजानताम् * इत्यत्र विवक्षितविशेषज्ञानं, इतरोपायत्यागहेतुभूतं उपायान्तरस्वरूपविरुद्धत्वज्ञानमेवभवतीति तदधिकारा शरणागतिः न्यासविद्भिन्ना फलरूपेति सिद्धमिति ।

सङ्ग्रहस्तु:—

इदं शरणम् इत्यत्राज्ञान्यशक्ताऽक्षमाः क्रमात् । उक्ताः विजानतां शब्दो भक्तेरात्मविरोधिताम् ॥
न वक्ति वक्ति चेद्व्यासप्रमुखानां प्रपन्नता । स्यात्तस्मादधिकारस्य भेदाद्विद्या न भिद्यते ॥
नैतद्विधौ निषिद्धास्यात् अशक्तौ लक्षणायतः । अविद्यातनिख्यातादज्ञशब्दादुपस्थितात् ॥
विद्याद्वयस्यराहित्यादशक्तेश्च प्रसिद्धितः । तस्माद्विज्ञानशब्देन विशेषज्ञानमीरितम् ॥
सविशेषः परिबृढतयेति विवृतश्च सः । उपायोपेयभावस्यापरिच्छेदत्वलक्षणा ॥
तस्योपायान्तरत्यागहेतुना वर्णिता पुनः । सदृशोपायवैधुर्यमित्याचार्यस्य सूक्तितः ॥
उपायत्वेनासादृश्यं यदन्योपायस्य फल्गुना । तेनोपायान्तराणां च नोपायत्वं हि वर्णितम् ॥
उपेयत्वैसादृश्यं च स्वरूपाननुरूपता । जितान्ताशौनकश्रीमद्भट्टार्यवरदोदितात् ॥
वचनात्तत्वक्रमतो विज्ञानपदलक्षणा । विरुद्धा वरणत्यापि देवगुह्यस्मृतेस्तथा ॥
नराणां बुद्धिदौर्बल्यवचनाच्छरणागतेः । फलत्वान्यविरुद्धत्वज्ञानेन विधुरास्तथा ॥
सर्वज्ञावा तथाप्येते अधिकारेष्वनिष्ठिताः । बुद्धिदौर्बल्ययुक्ताश्च तस्मात्स्वारस्यबोधिताः ॥
विज्ञानबुद्धिपदयोर्यथोक्तार्थोऽतिसंगतः । ज्ञानाधिकाधिकारत्वात्तस्मात्सेयं फलात्मिका ॥

इति प्रपत्त्यधिकारज्ञानशोधनाधिकारः ॥ (२१)

(अथ प्रपत्त्यधिकारभक्तिशोधनाधिकारः २२.)

(भक्तिपरवश्यत्ताले प्रपन्नर आऴ्वारगळ्)

षडङ्गे, अशक्तिमात्रमधिकारः. शरणवरणे * विजनताम् * इत्युक्तम् उपायान्तरस्वरूपविरुद्धत्वज्ञानमप्यधिकार. अतः षडङ्गान् वरणं भिद्यत इत्युक्तम्. अत्र * इदं तितीर्षताम् इत्याद्युक्तभक्तिभूमाऽपि

वरणे अधिकार इति, तेनापि षडङ्गभेदः प्रतिपाद्यते ।

संशयस्तु, प्रपत्तिर्न भिद्यते, उत, भिद्यत इति; तदर्थम् * तितीर्षताम् * इत्यत्र, कृत्स्नप्रारब्धत तैव्यता, * स्वभक्तेर्भूम्ना वा, इत्यत्र भक्तेः परज्ञानरूपता च न विवक्षिता, उत, विवक्षितेति; तदर्थम्, प्रपत्त्यनुष्ठानात्पूर्वं उक्तलक्षणभक्तिसत्त्वे प्रमाणं नास्ति, उतास्तीति; तदर्थं, प्रमाणास्तित्वे तादृशभक्तिः स्वगत-स्वीकारनिष्ठेषु संभवति. उत नसंभवतीति: यदा, उक्तभक्तिसद्भावे प्रमाणं नास्ति संभवेपि सा स्वगत-स्वीकारनिष्ठे संभवति, तदा तादृशभक्तिरूपाधिकारस्योभयत्राविशिष्टत्वान्न विद्याभेदः. यदा च, तादृशभक्तिसद्भावे प्रमाणमस्ति सा च स्वगतस्वीकारनिष्ठे न संभवति, तदा अधिकारभक्तिभेदात् विद्याभेदसिद्धिरिति पूर्वोत्तरपक्ष-योःफलफलिभावः.

अत्रायं पूर्वपक्षः, प्रारब्धमात्रानभ्युपगमरूपा, परज्ञानरूपा च भक्तिः, प्रपत्तिविद्याधिगमात्पूर्वकाले, न संभवति; तादृशभक्तिसत्त्वे. * भिद्यते हृदयग्रन्थिः * इत्युक्तप्रकारेण सकलबन्धनिवृत्तौ सत्यां प्रपत्तिपरिग्रहा योगात्, तादृशभक्तेः जन्मान्तरशतानुष्ठितयोगफलत्वेन साधनभक्तित्वाच्च, प्रपत्त्यनुष्ठानात्पूर्वं तत्सत्त्वे मानासिद्धेश्च. यतश्च, तादृशभक्तौ विशेषप्रमाणं नास्ति, अतो भक्तिविशेषस्य उदाहृतवचनविवक्षितत्वे माना-भावात्, नात्र स्वगतस्वीकारनिष्ठानां असंभाविताधिकारसिद्धिः. भवतु वा, तादृशोत्कटभक्तेः प्रपत्त्यधिकारत्वे विशेषवचनम्, तथापि, स्वगतस्वीकारविषयतयोदाहृते, * आर्तानामाशुफलदा * इति श्रीभरद्वाजसंहिता-वचने आर्तिशब्दस्यापि तादृशभक्तिपरत्वात् स्वगतस्वीकारनिष्ठेष्वपि कस्यचित्, तत्संभवात्, न विरुद्धाधि-कारसंभव इति न विद्याभेदसिद्धिरिति ।

अत्रोच्यते; (भक्तिपारवश्यत्ताले प्रपन्नर् आळ्वारगळ्) प्रपत्त्यनुष्ठानात्पूर्वं काष्ठापन्नभक्तिसत्त्वे प्रमाणमस्ति; तत्पारवश्येन प्रपन्नाश्च दिव्यसूरय एव: न तु स्वगतस्वीकारनिष्ठाः इत्यर्थः ।

अयं भावः, यदुक्तम् प्रारब्धमात्रासहिष्णुत्वपरज्ञानरूपभक्तिरेव न संभवतीति. तत्तावन्न युक्तम्; * यदापरानन्वयिभिः दुश्शकस्मृतिभिर्विना तेन तत्पुरतःपातस्सा प्रपत्तिस्तदा भवेत् * अथ प्रपत्तिं वक्ष्यामि मुक्तिसौलभ्यकारणम् सा हि ब्रह्मन् परज्ञानभक्त्या परिणतिर्मता * इति प्रपत्त्यधिकाररूपभक्तेः प्रारब्धमात्रा-सहिष्णुत्वरूपत्वम्, परज्ञानरूपत्वं चोक्तम् ।

यदा, इति वचनस्यायमर्थः; परानन्वयिभिः दुश्शकस्मृतिभिश्च यदा तत्पुरतःपातः, तदा सा प्रपत्तिः भवेत् इत्यन्वयः; परानन्वयिभिः, इत्यनेनदर्शनसमानाकारमानसस्मृतिषु अपरोक्षत्वेन परस्य अनन्वय उच्यते; अतस्तासां दुश्शकत्वम्, तेन विना दुश्शकस्मृतिभिः इत्यत्र, स्मृतिः—प्रतिबन्धकसंसारस्मृतिः. तस्याः तद्विनाकृतत्वम्—भगवद्विभूतित्वानुसन्धानविरहः. कर्मकृताकारविशिष्टतामात्रानुसन्धानमिति यावत्, ततश्च, संसारमात्रस्मृतयोपि दुश्शका भवन्ति ।

एवम्, संश्लेषविश्लेषविरूपाभिः दुश्शकोभयविधस्मृतिभिः प्रपत्त्यपेक्षया पारवश्यात् तत्पुरतःपातः प्रपत्तिर्भवतीत्यर्थः. न च उक्ता भक्तिः षडङ्गाधिकारिणी न संभवति; * आर्तानामाशुफलदा * इति वचनस्थस्य आर्तिशब्दस्य, छागपशुन्यायेन उक्तभक्तिविशेषपरत्वोपपत्तेरिति वाच्यम्; * यन्मरणं तदवभृथः * यावद्ध्रियते सा दीक्षा * इत्यादौ न्यासविद्यायाः अनभ्युपगतप्रारब्धखण्डमात्रनाशकत्वश्रवणात् भक्तेः प्रारब्धेतरनाशकत्वम्, षडङ्गप्रपत्तेः अनभ्युपगतप्रारब्धखण्डस्यापि नाशकत्वम्; शरणागतेःसर्वशब्दासंकोचात् पापमात्रनाशकत्वं च तत्तत्प्रमाणवशादवगम्यते तर्हि * आशुफलदा * देहान्तरनिवारिणी * इति षडङ्गप्रपत्तिपरभरद्वाजसंहितावचने प्रतीयमानो भेदः अत्र कथं संगच्छत इति चेत्, प्रत्यक्षश्रुतिविरोधेन स्मृतेरर्थवादत्वात्. एवं वा, स्मृतिनिर्वाहः * तच्चित्तविमलाह्लादक्षीणपुण्यचया तदा तदप्राप्तिमहादुःखविलीनशेषपातका * इत्युक्त चिन्तयन्तीरीत्या भगवदनुभवसंश्लेषविश्लेषाभ्यां अभ्युपगतप्रारब्धफलभूतसुखदुःखानुभवानन्तरं पश्चादनभ्युपगतप्रारब्धादिविधूननं विद्यामाहात्म्याद्भवतीति. पराङ्कुशादीनां च प्रथमत एव प्रारब्धमात्रानभ्युपगमः, तदुक्तादिमप्रबन्धस्य आदिपद्य एव स्पष्टः * सा हि ब्रह्मन्, इत्यत्रोक्ता परज्ञानरूपा भक्तिरपि षडङ्गाधिकारिष्वशक्तेषु योगरहितेषु न संभवति; जन्मान्तरयोगमूलत्वे च, तस्याः प्रपत्त्यधिकारत्वं न संभवति; तस्या एव स्वातन्त्र्येण साधनत्वात्. अत्र मोक्षं प्रति स्वतस्साधनभूता परज्ञानरूपा, प्रारब्धमात्रासहिष्णुत्वलक्षणा, प्रपत्तिपूर्वभाविनी भक्तिः स्वगत स्वीकारनिष्ठेषु असंभाविनी; दिव्यसूरिषु भगवन्निर्हेतुककटाक्षवशात् संभवतीति. भक्तिभूमाधिकारत्वादपि शरणागतिः भिद्यत इति फलत्वसिद्धिः फलभूतंभक्तिभूमापरिणतिरूपत्वात्, फलत्वस्योचितत्वाच्च. ततश्च परभक्तिपरज्ञानपरिणतिरूपा शरणागतिः फलरूपेति सिद्धम्. एतदुक्तं भवति; परभक्तिपरज्ञानरूपेयं भक्तिः अशक्ते न संभवति तस्य योगरहितत्वात् सुकृतविशेषात्संभवे * निदिध्यासितव्यः * द्रष्टव्यः * इति श्रुतिविरोधः, तादृशसुकृतविशेषे प्रमाणाभावश्च अन्यथा निदिध्यासनसुकृतविशेषयोर्विकल्पापत्तिश्च ॥

शक्ते पि सा न संभवति; अप्रारब्धयोगे योगस्यैवाभावात्; प्रारब्धयोगे च योगजन्या परभक्त्यादिरूपा स्वत एव मोक्षहेतुरिति न प्रपत्तावधिकारस्यात्. जन्मान्तरीययोगाभ्यासात् तत्संभवेपि धर्मव्याधादिष्विव स्वातन्त्र्येणैव मोक्षहेतुरस्यात्. अतः परभक्तिपरज्ञानात्मिका भक्तिः भगवन्निर्हेतुककृपाजन्या भक्तव्यक्तिविशेषेऽभ्युपगन्तव्या; अन्यथा उक्तप्रमाणानामनवकाशः प्रसज्येत, निर्हेतुककृपाजन्यपरज्ञानरूपभक्त्यभ्युपगमे तत्परिणतिरूपा शरणागतिरपि तथा, इति वाच्या इति ।

ननु, परज्ञानरूपभक्तेरहेतुकत्वपक्षेऽपि प्रपत्त्यधिकारत्वं न युज्यते; * भिद्यते हृदयग्रन्थिः इति श्रुतत्वात्; भक्त्यैव कर्मक्षयस्य जातत्वात्. सत्यम्; * चक्षुषा तव सौम्येन * इति न्यायेन कटाक्षादेव सकलपापक्षयस्य जातत्वात् प्राप्तिपूर्वभाविपरिपूर्णकटाक्षस्य जायमानकाल एव जातत्वात्, शरीरानुवृत्तिस्तु, प्रयोजनान्तराभिसन्धिमतो भगवतः केवलेच्छया कृता. प्रपत्त्यनुष्ठानं च देहानुवृत्तेः कर्मकृतत्वभ्रान्तिकृतम्. अतः परज्ञानस्येव प्रपत्तेरपि न कर्मनाशहेतुत्वम्, तस्य पूर्वमेव नष्टत्वात् ॥

न च 'साम्पराये तर्तव्याभावात्' इत्यादिविरोधः; मार्गविशेषनियमाभाववत् उक्ताधिकारिविशेषे तदनियमस्याप्युपपत्तेः. तस्मात्साधनप्रपत्तेः प्रारब्धखण्डमात्रनाशकत्वात्, परज्ञानलक्षणभक्तेः तदधिकारत्वानुपपत्तेश्च शरणागतिः तद्भिन्ना फलमिति.

सङ्ग्रहस्तु:—

इदं तितीर्षाऽऽदिपदैर्भक्तिर्भूमा तु सूच्यते । प्रपत्तेः पूर्वकाले हि तत्सद्भावो न युज्यते ॥
प्रमाणाभावतश्चातो नाधिकारो भवेत्तु सा । प्रपत्तेराधिकारत्वे भक्तेर्यदि विशेषतः ॥
वचनं दृश्यते तन्तु षडङ्गेऽपि भवेत्ततः । न विरुद्धाधिकारत्वं नातो विद्या च भिद्यते
इति चेन्न प्रपत्तौ हि विशेषाधिकृतिस्फुटा ॥
इदं तितीर्षादिपदैरुक्ता भक्तिर्विशेषिता । सा हि ब्रह्मन परज्ञानभक्त्या परिणतिर्मता ॥
यदा परानन्वयिभिरित्यादिभिरियं स्फुटम् । प्रारब्धमात्रवैमुख्यपरज्ञानात्मिका च सा ॥
निर्हेतुककृपालब्धा तस्याः परिणतिःफलम् । शरणागतिरित्येतदौचित्यादवगम्यते ॥
अशक्ते योगहीनत्वात् शक्ते चान्यानपेक्षणात् । नाधिकारःप्रपत्तौ स्यात् पश्चाङ्गा या हि सा परा ॥
पूर्वाभ्यासेन चेल्लब्धा नाधिकारस्तदा भवेत् । प्रारब्धखण्डमात्रस्य नाशकत्वश्रुतेश्च सा ॥
षडङ्गेऽधिकृतिर्न स्यात् तत्स्मृतेरर्थवादतः । दिव्यसूरिषु संपूर्णात्कटाक्षात्प्रथमं ततः ।
सर्वकर्मक्षयो जातः प्रपत्तिर्भ्रान्तिजृम्भिता ॥

इति प्रपत्त्यधिकारभक्तिशोधनाधिकारः २२.

## द्वितीयवर्णकम्

(भक्तितत्तिले इत्यादि) प्रकारान्तरेणापि, भक्तेः साधनप्रपत्तौ अधिकारत्वाभावमुपपादयति. संशयश्च, फलप्रपत्तिर्नास्ति, उतास्तीति: तदर्थम्, शरणागतिः न्यासाच्च भिद्यते, उत भिद्यत इति, तदर्थम्, पराङ्कुशादिदिव्यसूरिभक्तिः साधनप्रपत्त्यधिकारो भवितुमर्हति, उत, नार्हतीति; तदर्थम्, तेषां भक्तिः प्रपत्तिशास्त्रमर्यादालङ्घिनी न भवति, उत भवतीति; यदा, भवति, तदा तस्याः शास्त्रीयसाधनप्रपत्त्यधिकारत्वात् विद्याभेदकाभावेन तदसिद्धेः न फलप्रपत्तिसिद्धिः. यदा च तेषां भक्तिः प्रपत्तिशास्त्रमर्यादालङ्घिनी तदा तस्याः साधनप्रपत्त्यधिकारानर्हत्वात् फलप्रपत्तावेव तस्याधिकार इति विद्याभेदात् फलप्रपत्तिसिद्धिरिति ॥

पूर्वपक्षस्तु, दिव्यसूरीणां भक्तिः न तावदुच्छास्त्रा तेषामनुष्ठानस्य स्वस्ववर्णमर्यादानुरोधित्वदर्शनात् तत्प्रबन्धेषु स्वानुष्ठानपरोपदेशयोः स्वत्व श्रुत्यादेः प्रमाणत्वेनोपादानात् भाष्यकारादिपूर्वाचार्यैः तेषां परमाचार्यत्वेन स्वीकृतत्वात् प्रतिष्ठार्चनादिपर्यन्तं तदनुवर्तनदर्शनात् तेषामुत्पथत्वे इदं सर्वं नोपपद्यत इति तेषां भक्तिरपि शास्त्रमर्यादानुरोधिन्येवेति न तद्द्वारकविद्याभेदसिद्धिरिति ॥

सिद्धान्तस्तु, भक्तेरवस्थाभेदान् तेषामुपायान्तरे प्रवृत्तिस्तावत्सुप्रसिद्धा; उपायान्तरप्रवृत्त्यनन्तरम् * यत्पुनश्शरणं व्रजेत् * इति प्रायश्चित्तानुष्ठानमपि न दृष्टम्; अकृतप्रायश्चित्तत्वेपि योगभ्रम्शो पि नदृष्टः; साधनप्रपत्तिनिष्ठनां तु उपायान्तरप्रवृत्तिरेव न संभवति, स्वनिष्ठाभंगभयात्. तत्प्रवृत्तौ च सान भक्तिकार्या; किं त्वविश्वासकार्या. ततश्च, तस्यात्मविश्वासकार्यत्वात् न्यासनिष्ठाभङ्गो भवति. तद्भङ्गे च पुनः प्रपत्तिरनुष्ठेया; अननुष्ठाने तु * शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते * इति नीतिर्भवति. अत्र तु शरणवरणे प्रवर्तिकैव भक्तिः क्षणविलम्बासहत्वापादिका सती, स्वकार्यप्रपत्तिभङ्गफले - उपायान्तरे प्रवर्तयति ॥

एवम् अस्य उपायान्तरप्रवृत्तावपि आश्रयदोषजन्यत्वाभावेन विषयगुणजन्यतया च नैतेषां पापं च संभवति; एवम् पापाभावादेव न निष्ठाभङ्गः; तदभावाच्च, न प्रायश्चित्तानुष्ठानम्; इदं सर्वं साधनप्रपत्त्यधिकारत्वे न संभवति; तदा, उपायान्तरपरिग्रहस्य, स्वार्थतारूप आश्रयदोषजन्यत्वात् पापसंभवेन अकृतप्रायश्चित्तत्वेन च तेषां योगभ्रष्टत्वं भवेत्; ततश्च, पूर्वाचार्यशिष्टपरिग्रहाद्यनुपपत्तिः बाधिका स्यात्; अतः तेषां भ्रष्टत्वपरिहाराय सिद्धोपायफलभूता तेषां भक्तिः सा च फलप्रपत्तावधिकारः. अतःफलप्रपत्तिरेव तैरनुष्ठितेति स्वीकर्तव्यम्; अन्यथा अधिकारभक्तेः सुकृतविशेषजन्यत्वात् तस्याश्च सातिशयशिरस्कत्वात् तत्कृतप्रपत्तेः मत्फलसाधनत्वात् मदर्थमिदं कर्म इत्यधिकारबोधजन्यत्वेन साधनत्वाच्च; साधनान्तरप्र[प[वृ]त्तिरपि आश्रयदोषजन्येति तस्याः पापरूपत्वात् उपायान्तरप्रवृत्तानां अकृतप्रायश्चित्तानां च योगभ्रष्टत्वेन साधनप्रपत्तिवादे न दिव्यसूरीणां उपास्यत्वसिद्धिरिति ॥

किं च तेषां देवतान्तरभजनमपि क्वचिद्दृश्यते; तच्च, अकृतप्रायश्चित्तानां भ्रंशहेतुः * सर्वान् देवान्नमस्यन्ति * इत्यादेरपि परार्थत्वान्नदोषपत्रम्. अत्र भक्तेः सुकृतमूलत्वे तत्प्रयुक्तदेवतान्तरभजनस्य स्वार्थतया पापत्वं भवेदेव; * अत्यन्तभक्तियुक्तस्य * इत्येतदपि एतद्विषयमेव; स्वयत्नजन्यायाः अत्यन्तत्वासिद्धेः. अतस्तेषां भक्तिःसाधनप्रपत्तौ नाधिकारः इति फलप्रपत्तिसिद्धिरिति ॥

संग्रहः—

भक्तिश्च दिव्यसूरीणां न्यासशास्त्रानुरोधिनी । अतस्तदधिकारत्वं भक्तियोगे न युज्यते ॥
इति चेत्तन्न भक्तेरप्यधिकारत्वदर्शनात् । शठजिन्मुनिमुख्यानां भक्तिर्निर्हेतुका यतः ॥
स्वार्थतागन्धरहितास्तस्मात्तत्परिणामिनः । शरणागतिभक्त्यादिक्रमादिभजनादिकाः ॥
न निष्ठाभञ्जिकास्सर्वे फलरूपास्ततोऽभवन् । यदि सा सुकृतारब्धा स्वार्थगर्भा तदा भवेत् ॥
तत्कृता च प्रपत्तिस्स्यात् साधनं तत्कृतं पुनः । भक्तादिकामभजनं स्वनिष्ठाभञ्जनं भवेत् ॥
तच्चाकृते प्रतीकारे योगभ्रंशस्य कारणम् । भ्रष्टाश्च नैवोपास्यास्स्युस्तत्सूरीणां न हेतुजा ॥
भक्तिस्तस्याः परिणतिः स्वीकार्या तत्फलात्मिका । सर्वान्देवान्नमस्यन्ति नशास्त्रं नैव च क्रमः ॥
इत्यादिकं च यद्भक्तेः अनन्यत्वनिबन्धनम् ॥

एवम्, अधिकारत्रयेण * सर्वधर्मान्परित्यज्य * इत्युक्तसिद्धोपायाधिकारः उक्तः. यद्यपि * आकिंचन्यैकशरणाः * अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः * इत्यादिभिः प्रपत्तिशास्त्रे आकिंचन्यमेवाधिकार इत्युक्तम्, इति अधिकारत्रयवचनं विरुद्धमिवभाति ; तथापि, प्रपत्तावाकिञ्चन्यमेक एवाधिकारः, अज्ञानादित्रयं तन्निमित्तं सद्वारकाधिकारः, अतो नोभयवचनविरोधः. षडङ्गे तु अत्राज्ञानशब्दोक्ताऽशक्तिरेवैकैवाधिकारः. एवं शास्त्रे अधिकारत्रयपरवचनानां शरणागतिविषयत्वात् षडङ्गशास्त्रे * प्राप्तुमिच्छन परां सिद्धिं जनस्सर्वोप्यकिञ्चनः * इत्यशक्तमात्राधिकारश्रवणाच्च अधिकारिचातुर्विध्ये किमपि प्रमाणं न पश्यामः; तथापि, * भक्त्यादौ शक्त्यभावः, प्रमितिरहितता शास्त्रतः पर्युदासः कालक्षेपाक्षमत्वं त्विति नियतिवशादापतद्भिश्चतुर्भिः । एकद्वित्र्यादियोगव्यतिभिदुरनिजाधिक्रियास्संश्रयन्ते सन्तः श्रीशंस्वतन्त्रप्रपदनविधिना मुक्तये निर्विशङ्काः ॥ * इत्यस्यायमभिप्रायः, वेदान्ताचार्याणां साधनप्रपत्तिशास्त्रप्रवर्तनाधिकृतत्वात्, देवगुह्यार्थस्य च गोपनीयत्वात्, उपायान्तरस्वरूपविरुद्धत्वात्नुपायत्वप्रदर्शने न्यासस्याप्युपायान्तरतया साधनप्रपत्तौ, अशक्तस्वतन्त्राणां अश्रद्धा भवेत्; इति तद्वारणार्थं च * इदं शरणम्, इति वचने अज्ञानशब्देन, अत्रैवर्णिकानामपि, अनुष्ठानोपयोगिज्ञानाभावात् संग्रहम्. अज्ञानशब्दस्यानुष्ठानाशक्तिवाचकत्वेऽपि विज्ञानशब्दार्थगोपनायविज्ञानशब्दस्याशक्तिपरत्वम्. * इदं तितीर्षताम् * इत्यादेर्भक्तिसामान्यपरत्वं चाभिप्रेत्य अधिकारिचातुर्विध्यं प्रदर्शितम्. इति, शक्ताशक्ताधिकारत्ववादिनां भक्तियोगतदुपायोभयविधिवैयर्थ्यवारणाय, उपायान्तरस्वरूपविरुद्धत्वज्ञानं अनुयाय्यधिकारो वाच्यः; स्वरूपविरुद्धत्वज्ञानाधिकारत्वमनभ्युपगच्छतां देशवासाद्यङ्गविधिवैयर्थ्यवारणाय देहान्तरविलम्बाक्षमत्वम् * आत्यन्तिकीमनिष्टानां सद्यश्शान्तिमभीप्सता प्रपत्तिरञ्जसा कार्या * इत्यादिप्रमाणसिद्धमनुयाय्यधिकारो वाच्यः; तथाप्यत्र * एकद्वित्र्यादियोगव्यतिभिदुरनिजाधिक्रियाः इत्युक्तिः किमभिप्रेत्येति चिन्त्यम् ॥

(इति द्वितीयवर्णकम् २३)

## इति प्रथमस्य परिच्छेदस्य तृतीयं प्रकरणम्.

### अथ न्यासशरणागतिभेदसमर्थनाधिकारः ॥ २४ ॥

प्रथमे प्रकरणे श्रीशब्दार्थः. द्वितीये नारायणचरणशब्दार्थः, तृतीये मतुवर्थश्च निरूपितः, चतुर्थे क्रियापदार्थो निरूप्यते; शरणशब्दोदितोपायत्वस्यनिर्हेतुकत्वप्रतिपादनाय प्रथमं श्रीपुरुषाकारस्वरूपं निरूपितम्. तदनन्तरं अनुबन्धिस्वरूपं चिन्तितम्. इदानीं स्वीकारस्वरूपं चिन्त्यते ; पूर्वस्मिन् प्रकरणे अनुबन्धिस्वरूप निरूपणमुखेन वरणस्य न्यासभेदसाधनपूर्वकं असाधनत्वं साधितम्; अत्र प्रधानस्वरूपनिरूपणेन तथात्वं साध्यते. देशकालादिनियमादिना न्यासस्य वरणाद्भेदो दुर्वचः ; श्रीपाञ्चरात्रादिवचनेषु तयोरभेदश्रुतेः न हि वचनविरोधे न्यायः प्रवर्तते इति न्यायात्, इति पूर्वप्रकरणोक्तसर्वार्थाक्षेपात् आद्याधिकारसंगतिः ।

अत्र संशयः; मन्त्रे शरणशब्दोपस्थितस्य उपायत्वस्य निर्हेतुकत्वं न संभवति, उत संभवतीति; तदर्थम्, शरणागतिः षडङ्गादभिन्ना, उत भिन्नेति ; तदर्थम्, तयोरभेदे प्रमाणमस्ति, उत नास्तीति ; यदा अस्ति, तदा साधनेन षडङ्गेन अभिन्नाशरणागतिरपि साधनं स्यादिति उपायनिर्हेतुकत्वासिद्धिः; यदा तयोरभेदे प्रमाणं नास्ति ; तदा तद्भेदसाधनोपपत्तिभिः भेदसिद्धौ तस्याः असाधनतया निर्हेतुकत्वसिद्धिरिति पूर्वोत्तरपक्षयोः फलफलिभावः।

पूर्वपक्षश्च, न केवलं उपपत्तिभिः अतीन्द्रियार्थोऽवगन्तुं शक्यते; तयोर्भेदे कस्यापि प्रमाणस्य उक्ततर्कानुग्राह्यस्याभावात्, प्रत्युत अभेद एव तदस्ति, * आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥ आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥ निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः सन्न्यासस्त्याग इत्युक्तश्शरणागतिरित्यपि ॥ * मन्त्ररत्नं द्वयं न्यासः प्रपत्तिश्शरणागतिः। लक्ष्मीनारायणं चेति हितं सर्वफलप्रदम् * इत्यादि. अत्रोक्तमैक्यं च अङ्गाङ्गिभावविवक्षया-शरणागतेः गोप्तृत्ववरणरूपत्वात्, सर्वत्र शरणशब्दः गोप्तृवाची ; उपायशब्दः, चेतनाचेतनसाधारण्येन कारणवाची; गोप्तुरपि कारणत्वात्, तत्राप्युपायशब्दः प्रयुज्यते ; * तदेकोपायतायाच्ञा * त्वमेवोपायभूतो मे * इत्यादिषु. एवम् उपायशरणशब्दयोः गोप्तृत्वार्थकत्वात् शरणागतिशब्दः गोप्तृत्ववरणे मुख्यः; न्यासस्य गोप्तृत्ववरणाङ्गकत्वात्, तत्राप्युपचर्यते. अतः * शरणागतिरित्यपि * इत्यादिषु अङ्गाङ्गिभावेनैक्यमुक्तम्॥

यद्वा, शरणोपायशब्दौ सर्वत्र निरपेक्षगोप्तृपरौ ; निरपेक्षत्वं च गोप्तुः उपायान्तरस्थाननिवेशितत्वम्. अतः शरणागतिशब्दः गोप्तृत्ववरणसंवलितभरन्यासे मुख्यः; विश्वासोद्वयार्थश्शरणागतिः इत्यादौ। औपचारिकः, अतः, सन्न्यासत्यागनिक्षेपशरणागतिशब्दानां पर्यायत्वान्न तयोर्भेदः. तदुक्तम् * भक्तौ रङ्गपते यथा खलु पगुच्छागादिवेदनध्यानोपासनदर्शनादिवचसामिच्छन्त्यभिन्नार्थताम्। व्यक्त्यैक्याच्छरणागतिप्रपदनत्यागात्मनिक्षेपणन्यासाद्येषु तथैव तन्त्रनिपुणैः पर्यायता स्मर्यते * इति. तस्मात् उदाहृतस्मृतिवचनैः न्यासशरणागत्योरभेदे सिद्धे तद्भेदसाधकाः पूर्वोक्तास्तर्कास्सर्वे बाधिता इति ॥

अत्रोच्यते ( इदुतन्नैप्पातालि पितावुक्कु पुत्रन् एलुत्तु वाङ्गुमागोले इरुप्पदोन्रु ) स्वरूपलक्ष्मानुष्ठानविद्ध्यादिभिः अत्यन्तविलक्षणं शरणवरणम्, षडङ्गन्यासेनाभिन्नं मत्वा, साधनमिति वक्तुमुद्युक्तश्चेत्; निरुपाधिकरक्ष्यरक्षकसंबन्धहानिनिबन्धनं शरण्यशरणागतयोरुभयोरपि अवद्यं स्यादित्यर्थः. न केवलमस्मदुक्तास्तर्काः प्रमाणविहीनाः, निर्हेतुकरक्षकत्ववाचकप्रणवानुग्राहकाः, इति भावः ॥ शरणागतिभरन्यासयोः, संयोगरूपचोदनाख्याभेदात् भेदस्तावत्सिद्धः ; * मोक्षयिष्यामि * इति परगतस्वीकारस्य शरणवरणफलत्वात्, उत्तरवाक्यप्रतिपादितपरार्थकैङ्कर्यफलत्वाद्वा फलभेदस्सिद्धः ; रूपमपि भिद्यते. भरन्यासः, केवलमध्यवसायात्मा, वरणं तु प्रार्थनारूपम्।

न च भरन्यासस्य गोप्तृत्ववरणगर्भत्वात्तद्रूपता ; उभयोः प्रार्थनारूपत्वेऽपि एकत्र भरस्वीकारः। प्रार्थनाविषयः, अपरत्र फलप्रदत्वैविषयः किं च, त्वमेव मे उपायः भव इति शरणवरणं मादृथ्र्यगर्भम् ; * मम

भरः श्रीपतेरेव * इति न्यासः तादर्थ्यगर्भः . किं च, न्यासे आत्मनोऽपि समर्पणीयत्वमस्ति ; अत्र मम सुना इति वन्निरूपकत्वमात्रम् . * त्वयि मम भरो न्यस्तः, इति न्यासः स्वातन्त्र्यगर्भः, मम भरं स्वीकुरु इति प्रार्थनारूपत्वात् पारतन्त्र्यगर्भं वरणम् . न्यासे भरसमर्पणम् शरणागतौ शरणवरणम् . न्यासस्योद्देश्यं मिथुनम् . शरणवरणे लक्ष्म्याः उपलक्षणत्वमात्रम् . न्यासस्य प्रणवाङ्गत्वात् जगत्कारणत्वादिपरत्वसंकल्पगुणो विषयः . शरणागतेः द्वयमन्त्रकत्वात् सौशील्यसौलभ्यादिगुणो विषयः . शरणागतौ, प्रत्यगात्मनः पुण्यत्यागः, पापविशिष्टत्वं चानुसंधेयम . न्यासे प्रातिकूल्यवर्जनम्, आनुकूल्यं चाङ्गम् . इति पापत्यागः पुण्यसंबन्धश्चानुसंधेयः ॥

एवम्, आत्मपरमात्मनोः विद्याविषयभूतयोः आकारभेदात् पूर्वोक्तयाच्नात्मकत्वतदभावादिभेदाच्च रूपभेदस्सिद्धः . चोदनापि * व्रज * न्यसेत् * इति भावार्थयोर्भिन्नत्वाद्भिन्ना ; एवं वरणन्यासयोश्चोदनारूपभेदस्सिद्धः. लक्षणमपि भिद्यते ; * कृतानुकूल्यसंकल्पः प्रातिकूल्यंविवर्जयन् । विश्वासशालीकृपणः प्रार्थयन् रक्षणं प्रति । आत्मानं निक्षिपति यद्धिया देवस्य पादयोः । सा प्रपत्तिरियं मद्यः सर्वपापप्रणाशिनी ॥ * इति निक्षेपलक्षणम् * अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः । त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः ॥ शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम् * इति वरणलक्षणम् ॥

न च अनयोर्वचनार्थयोरैक्यं संभवति ; अधिकाराङ्गस्वरूपलक्षणैरन्योन्यं विरुद्धत्वात् . विरोधश्च पूर्वमुपपादितः, ननु, भगवति रक्षकत्वव्यतिरिक्तस्य उपायत्वस्य दुर्निरूपत्वात् अत्रोपायशब्देनापि गोप्तृत्वमेवोच्यते ; ततश्च * अहमस्मि * इत्येतत् गोप्तृत्ववरणलक्षणम् ; तस्यचान्तरङ्गत्वात् शरणागतित्वोक्तिः यद्वा अयं शरणागतिशब्दः प्रपत्तिपर एव अतः इदं पृथिव्याः गन्धवत्त्ववदुपलक्षणम् . पू[र्व]र्णलक्षणं * कृतानुकूल्यसंकल्पः, इत्येतदेव इति चेन्न ; उपायान्तरस्थाननिवेशितत्वमेव भगवतः उपायत्वम् . तच्च फलप्रदत्वौपयिकप्रसादहेतुत्वम्. गोप्तृत्ववरणस्य अत्र लक्ष्यत्वे, तस्य अङ्गिसमानयोगक्षेमस्य अपराधालयाधिकारिकत्वविरोधः. * न मत्तोन्मत्तपतिताः * इत्यादिना न्यासे तन्निषेधात्, उपायस्य गोप्तुरर्थान्तरत्वाच्च . शरणागतिशब्दस्यौपचारिकत्वमपि दोषः लक्षणत्वे संभवति उपलक्षणत्वाश्रयणमप्ययुक्तम् . प्रमाणान्तरेण पृथिव्याः एकत्वनिश्चयात् तत्रगन्धस्योपलक्षणत्वमुपपद्यते ; आकिचन्यनैरपेक्ष्ययोर्विशिष्टाधिकाराङ्गयोर्विशेषणमात्रे उपचारश्च न युज्यते . एवं लक्षणादपि भेदः आख्यापि, शरणागतिविद्या न्यासविद्या इति प्रसिद्धा , अनुष्ठानमपि भिद्यते पूर्वोत्तरवाक्ययोः वरणसमर्पणयोरनुष्ठेयत्वात् * गृह्णीयात् मन्त्रराजानं मां गच्छेच्छरणं नरः । अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् ॥ इति द्वयस्य उभयत्र विनियुक्तत्वात् . जितन्तायां जितं ते इत्यत्र समर्पणम् देवानां इत्यत्र वरणं च पृथगुक्तम् . स्तोत्रेऽपि नमोनमः इति समर्पणम्, न धर्मः इति वरणं च पृथक्कृत्योक्तम् . गद्येऽपि * त्वत्पादारविन्द इतिवरणम् नमोस्तु ते इति समर्पणं च भिन्नमुक्तम् . स्तोत्रान्तरेष्वप्येवं द्रष्टव्यम् ॥

न चात्र सर्वत्र वरणं गोप्तृत्ववरणम् इति वाच्यम् ; द्वयार्थेषु तदयोगात् द्वये शरणशब्दस्य गोप्तृत्वार्थकत्वनिषेधात् निरपेक्षगोप्तृत्वार्थकत्वापेक्षया शरण शब्दश्चेत् ; वरणवाक्येष्वेव समर्पणस्याप्यनुष्ठितत्वेन

पृथगनुष्ठानवैफल्यात् ; अङ्गिमात्रस्य पृथगनुष्ठाने मानाभावाच्च . श्रुतिष्वपि तयोर्भेदेन विधि : दृश्यते; तैत्तिरीयके * ओमित्यात्मानं युञ्जीत * इति न्यासोविहितः, श्वेताश्वतरे * मुमुक्षुर्वै शरणमहं प्रपद्ये * इति वरणं विहितम्. तथा श्रीपुरुषसूक्ते न्यासो विहितः अवध्नन पुरुषं पशुम् इत्युक्तेः * अद्भ्यः संभूतः इत्यत्र शरणवरणं विहितम्. * तस्य धीराः * इति बुद्धिदौर्बल्याभावमधिकारमुक्त्वा * योनिं परिजानन्ति * इति शरणागतेरवतार-विषयत्वात्, सौलभ्यादिगुणविषयत्वाच्च शरणागतिरुक्ता . तदुपयुक्तपुरुषकारश्च * ह्रीश्चते इत्यादिनोक्तः ।

श्रीमद्भगवद्गीतायाम् * मन्मना भव * इत्यत्र भरसमर्पणमुक्त्वा समनन्तरमेव * सर्वधर्मान् * इति वरणमुक्तम् . लक्ष्मीतन्त्रे * उपायापायसंत्यागी मध्यमां स्थितिमास्थितः । मामेव शरणं प्राप्य मामेवान्ते समश्नुते * इति शरणागतिमुक्त्वा * षडङ्गं तमुपायं च * इत्यादि भरसमर्पणं भेदेनोक्तम् . अहिर्बुन्ध्यसंहितायामपि तयोर्भेदेन कीर्तनमस्ति . तत्र * वाचा नम इति प्रोच्य * इत्यारभ्य * पूर्णमङ्गैरुपाङ्गैश्च नमनं ते प्रकीर्तितम् * इति षडङ्गयोगमुक्त्वा स्थूलोयं नमसश्चार्थः सूक्ष्ममन्यं निशामय इत्यारभ्य, अनादिवासनाज्ञानैर्बोधैस्तैस्तैर्विकल्पितैः । रूषितं यत् दृढं चित्तं स्वातन्त्र्यं स्वत्वतामयम् । तत्तत् वैष्णवसाम्राज्यप्रतिबोधसमुत्थया ।। नम इत्यनया वाचा नत्वा स्वस्मादपोह्यते ।। इति ते सूक्ष्म उद्दिष्टः इत्यहंकारममकारकात्स्न्यत्यागस्योक्तत्वात् फलैस्सह सर्वधर्मत्यागस्य शरणागताविङ्गत्वात् त्यागस्य च प्रधानत्वात् तत्प्रधानैकशरणागतिमुक्त्वा * परमन्यं निशामय । पन्था नकारउद्दिष्टो मःप्रधान उदीर्यते । विसर्गः परमेशस्तु तत्रार्थोऽयं निरूप्यते । अनादिःपरमेशोऽयं शक्तिमान् पुरुषोत्तमः ।। तत्प्राप्तये प्रधानोऽयं पन्था नमननामवान् * इति शरणागत्यङ्गिभूतस्सिद्धोपाय उक्तः . अत्र, स्थूलपारतन्त्र्यरूपत्वात् षडङ्गस्य स्थूलत्वम् . सूक्ष्मपारतन्त्र्यरूपत्वात् शरणागतेस्सूक्ष्मत्वम् . सर्वधर्मत्यागस्याप्यङ्गत्वेनाप्रधानत्वात्तदङ्गित्वेनप्रधानं सिद्धोपायस्वरूपं चोक्तम् ।।

नन्वत्र पूर्वं व्याकरणव्युत्पत्त्यवसेयो न्यासः स्थूलार्थत्वेनोक्तः . स एव व्याकरणापेक्षया सूक्ष्मया निरुक्त्यात्रावगम्यते ; इति सूक्ष्मत्वेनोक्तः पश्चात् ततोपि परे अक्षरनिघण्टौ अवगम्यमानत्वात् पर इत्युच्यते ; अतो नात्र विद्याभेदप्रतीतिः ; इति चेत्तन्न; स्थूलत्वादेः बोधकारणस्थूलत्वादिनिबन्धनत्वात, बोध्यस्थूलत्वादिनिबन्धनत्वप्रतीतेस्संकोचे प्रमाणाभावात्, षडङ्गस्य अहंकारममकारमात्रत्यागस्य भगवतश्चैकत्वासिद्धेश्च, * सूक्ष्ममन्यं परमन्यम्, * इति भेदस्य शब्दत एव प्रतीतेश्च; स्थूलत्वादिनोक्तस्य भेदे उपायप्रकरणत्वात्, उपायमात्रमेवोक्तं भवति . किंच * एवमङ्गैरुपाङ्गैश्च नमनं ते प्रकीर्तितम् * इति प्रकरणस्य विच्छिन्नत्वात् एकविद्यात्वासिद्धिः ।।

किंच, अत्र सवासनाहंकारममकारत्यागः उच्यते; न हि समर्पणे सोस्ति; मत्फलसाधनत्वान्मदर्थमिदं कर्म इत्यधिकारबोधसत्त्वेन अहंकारममकारयोः सत्त्वात् न च अत्र त्रिविधपरित्यागः समर्पणाङ्गमुच्यते; मोक्षसाधनमात्रापेक्षितस्य देवगुह्यन्यासापेक्षया सूक्ष्मत्वायोगात्. * इत्यङ्गमुदितं श्रेष्ठम् * इति प्रथमा

इति या गर्वहानिस्सा दैन्यं कार्पण्यमुच्यते शक्तेःससूपसदत्वाच्च कृपायोगाच्च शाश्वतात् ॥ ईशेशितव्यसंबन्धादनिदंप्रथमादपि रक्षिष्यत्यनुकूलान्न इति या सुदृढा मतिः स विश्वासो भवेच्छक्र सर्वदुष्कृतनाशनः ॥ करुणावानपि व्यक्तं शक्तः स्वाम्यपि देहिनाम् अप्रार्थितो न गोपायेत् इति तत्प्रार्थनामतिः ॥ गोपायिता भवेत्येवं गोप्तृत्ववरणं स्मृतम् ॥ तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता ॥ केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते । निक्षेपापरपर्यायो न्यासःपञ्चाङ्गसंयुतः । सन्न्यासत्याग इत्युक्तःशरणागतिरित्यपि ॥ उपायोयं चतुर्थस्ते प्रोक्तश्शीघ्रफलप्रदः ॥ अस्मिन् हि वर्तमानानां विधौ विप्रनिषेविते ॥ पूर्वे त्रय उपायास्ते भवेयुरमनोहराः ॥ आनुकूल्येतराभ्यां तु विनिवृत्तिरपायतः । कार्पण्येनाप्युपायानां विनिवृत्तिरिहोदिता ॥ रक्षिष्यतीति विश्वासात् अभीष्टोपायकल्पना गोप्तृत्ववरणं नाम स्वाभिप्रायनिवेदनम् ॥ सर्वज्ञोऽपि हि विश्वेशस्सदा कारुणिकोऽपि सन् । संसारतन्त्रवाहित्वाद्रक्ष्यापेक्षां प्रतीक्षते ॥ आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते ॥ हिंसास्तेयादयःशास्त्रैरपायत्वेन दर्शिताः ॥ कर्मसाङ्ख्यादयः शास्त्रैरुपायत्वेन दर्शिताः ॥ अपायोपायसन्त्यागी मध्यमां स्थितिमास्थितः । रक्षिष्यतीति निश्चित्य निक्षिप्तस्वस्वगोचरः ॥ बुध्येत देवदेवं तं गोप्तारं पुरुषोत्तमम् ॥ * इति अत्र मामेकं शरणं प्राप्येति शरणागतिं विधाय, अनन्तरं * षडङ्गं तदुपायं च शृणु मे पद्मसंभवे ॥ * इति षडङ्गोपायत्वेन संहितान्तरेषु प्रसिद्धं योगमप्यत्र शृणु; अङ्गविद्यात्वात् सोऽपि श्रोतव्य इति, तस्य शरणागतिशेषत्वं विधाय, तस्य साध्यप्रपत्तित्वेन शरणागतानुष्ठेयतां, सर्वेषां समप्राधान्येन फलाकारतां च * षड्विधा शरणागतिः * इत्युक्त्वा * एवं मां शरणं प्राप्य * इति पूर्ववाक्यार्थशरणागतिं उत्तरवाक्यार्थभूतफलरूपषडङ्गयोगं च फलत्वेनानुष्ठेयामुक्त्वा एवं पूर्णशरणागत्यनुष्ठानफलम् * मामेव शरणं प्राप्य तरेत्संसारसागरम् * इति निगमय्य शरणागतिनिष्ठस्योत्कर्षम् * सत्कर्मनिरताश्शुद्धास्साङ्ख्ययोगविदस्तथा । नार्हन्ति शरणस्थस्य कलां कोटितमीमपि * इति योगशब्देन अङ्गाङ्गिभावापन्नसाधनषडङ्गनिष्ठानामप्यभिप्रेत्य शरणागतेःन्यासादिसर्वोपायवैलक्षण्यं प्रतिपादितम् ॥

एवम्, न्यासशास्त्रे, स्वातन्त्र्येण साधनतया विहितस्य षडङ्गस्य, फलसमर्पणरूपत्वेन शरणागतिशेषतां श्रुत्वा, केनाकारेण षडङ्गस्य शरणागतिशेषभूतफलसमर्पणरूपत्वम्? केन वाकारान्तरेण स्वतन्त्रतया साधनत्वम्? इत्याकारद्वयबुभुत्सया शक्रेणानुयुक्तादेवी तदुभयाकारद्वयं विशिनष्टि. तत्र, फलसमर्पणाकारतां प्रथममाह; * आनुकूल्यमिति प्रोक्तम् * इत्यारभ्य, * केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते इत्यन्तेन. अत्र, आनुकूल्यादीनां अङ्गाङ्गिभावेन अनुष्ठानदर्शनाभावात्, फलत्वेनानुष्ठाने सर्वेषां प्राधान्यम्, आत्मनिक्षेपस्य फलसमर्पणरूपत्वम्, अत्यन्तपरतन्त्रस्वरूपानुगुणं, आनुकूल्यादीनां स्वरूपं चोक्तम्. एकविद्यात्वेन प्रसिद्धस्य षडङ्गयोगस्य कथं विद्याद्वयात्मकत्वम्? इति शङ्कामभिप्रेत्य, न केवलं विद्याद्वयरूपत्वम्, अपि तु तत्तन्नियताधिकारिभेदेन, स्वरूपभेदेन च विद्यात्रयात्मकत्वं प्रमाणसिद्धम्. इत्याह * निक्षेपापरपर्यायः * इति श्लोकेन ॥

इति या गर्वहानिस्सा दैन्यं कार्पण्यमुच्यते शक्तेःस्सूपसदत्वाच्च कृपायोगाच्च शाश्वतात् ॥ ईशेशितव्यसंबन्धादनिदंप्रथमादपि रक्षिष्यत्यनुकूलान्न इति या सुदृढा मतिः स विश्वासो भवेच्छक्र सर्वदुष्कृतनाशनः ॥ करुणावानपि व्यक्तं शक्तः स्वाम्यपि देहिनाम् अप्रार्थितो न गोपायेत् इति तत्प्रार्थनामतिः ॥ गोपायिता भवेत्येवं गोप्तृत्ववरणं स्मृतम् ॥ तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता ॥ केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते । निक्षेपापरपर्यायो न्यासःपञ्चाङ्गसंयुतः । सन्न्यासस्त्याग इत्युक्तःशरणागतिरित्यपि ॥ उपायोयं चतुर्थस्ते प्रोक्तश्शीघ्रफलप्रदः ॥ अस्मिन् हि वर्तमानानां विधौ विप्रनिषेधिते ॥ पूर्वे त्रय उपायास्ते भवेयुरमनोहराः ॥ आनुकूल्येतराभ्यां तु विनिवृत्तिरपायतः । कार्पण्येनाप्युपायानां विनिवृत्तिरिहोदिता ॥ रक्षिष्यतीति विश्वासात् अभीष्टोपायकल्पना गोप्तृत्ववरणं नाम स्वाभिप्रायनिवेदनम् ॥ सर्वज्ञोऽपि हि विश्वेशस्सदा कारुणिकोऽपि सन् । संसारतन्त्रवाहित्वाद्रक्ष्यापेक्षां प्रतीक्षते ॥ आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते ॥ हिंसास्तेयादयःशास्त्रैरपायत्वेन दर्शिताः ॥ कर्मसाङ्ख्यादयः शास्त्रैरुपायत्वेन दर्शिताः ॥ अपायोपायसन्त्यागी मध्यमां स्थितिमास्थितः । रक्षिष्यतीति निश्चित्य निक्षिप्तस्वस्वगोचरः ॥ बुध्येत देवदेवं तं गोप्तारं पुरुषोत्तमम् ॥ * इति अत्र मामेकं शरणं प्राप्येति शरणागतिं विधाय, अनन्तरं * षडङ्गं तदुपायं च शृणु मे पद्मसंभवे ॥ * इति षडङ्गोपायत्वेन संहितान्तरेषु प्रसिद्धं योगमप्यत्र शृणु; अङ्गविद्यात्वात् सोऽपि श्रोतव्य इति, तस्य शरणागतिशेषत्वं विधाय, तस्य साध्यप्रपत्तित्वेन शरणागतानुष्ठेयतां, सर्वेषां समप्राधान्येन फलाकारतां च * षड्विधा शरणागतिः * इत्युक्त्वा * एवं मां शरणं प्राप्य * इति पूर्ववाक्यार्थशरणागतिं उत्तरवाक्यार्थभूतफलरूपषडङ्गयोगं च फलत्वेनानुष्ठेयामुक्त्वा एवं पूर्णशरणागत्यनुष्ठानफलम् * मामेव शरणं प्राप्य तरेत्संसारसागरम् * इति निगमय्य शरणागतिनिष्ठस्योत्कर्षम् * सत्कर्मनिरताश्शुद्धास्साङ्ख्ययोगविदस्तथा । नार्हन्ति शरणस्थस्य कलां कोटितमीमपि * इति योगशब्देन अङ्गाङ्गिभावापन्नसाधनषडङ्गनिष्ठानामप्यभिप्रेत्य शरणागतेःन्यासादिसर्वोपायवैलक्षण्यं प्रतिपादितम् ॥

एवम्, न्यासशास्त्रे, स्वातन्त्र्येण साधनतया विहितस्य षडङ्गस्य, फलसमर्पणरूपत्वेन शरणागतिशेषतां श्रुत्वा, केनाकारेण षडङ्गस्य शरणागतिशेषभूतफलसमर्पणरूपत्वम् ? केन वाकारान्तरेण स्वतन्त्रतया साधनत्वम् ? इत्याकारद्वयबुभुत्सया शक्रेणानुयुक्तादेवी तदुभयाकारद्वयं विशिनष्टि. तत्र, फलसमर्पणाकारतां प्रथममाह; * आनुकूल्यमिति प्रोक्तम् * इत्यारभ्य, * केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते इत्यन्तेन. अत्र, आनुकूल्यादीनां अङ्गाङ्गिभावेन अनुष्ठानदर्शनाभावात्, फलत्वेनानुष्ठाने सर्वेषां प्राधान्यम्, आत्मनिक्षेपस्य फलसमर्पणरूपत्वम्, अत्यन्तपरतन्त्रस्वरूपानुगुणं, आनुकूल्यादीनां स्वरूपं चोक्तम्. एकविद्यात्वेन प्रसिद्धस्य षडङ्गयोगस्य कथं विद्याद्वयात्मकत्वम् ? इति शङ्कामभिप्रेत्य, न केवलं विद्याद्वयरूपत्वम्, अपि तु तत्तन्नियताधिकारिभेदेन, स्वरूपभेदेन च विद्यात्रयात्मकत्वं प्रमाणसिद्धम्. इत्याह * निक्षेपापरपर्यायः * इति श्लोकेन ॥

अयं न्यासस्य न पञ्चाङ्गत्वविधिः, किं तु * इयं करणपूर्तिस्स्यात् अङ्गपूर्तिमिमां शृणु * इति अहिर्बुध्न्यसंहितायाम्, कृतानुकूल्यसंकल्पः प्रातिकूल्यं विवर्जयन्। विश्वासशाली कृपणः प्रार्थयन् रक्षणं प्रति। आत्मानं निक्षिपति यद्धिया देवस्य पादयोः * इति श्री भरद्वाजसंहितायां चोक्तमिति; अत्र, * पञ्चाङ्गसंयुतः * इति साधनप्रपत्तिशास्त्रसिद्धं पञ्चाङ्गत्वं अनूद्यते; तत्र, न्यास इत्येतावन्मात्रोक्तौ * तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः * इति श्रुतिविहितन्यासस्संग्रहस्स्यादिति तन्निवारणाय * निक्षेपापरपर्यायः * इत्युक्तम्. * आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः। विश्वासो वरणं न्यासः कार्पण्यमिति षड्विधा * इत्यादौ आनुकूल्याङ्गकन्यासे निक्षेप न्यास शब्दौ पर्यायेण प्रयुक्तौ; इति स्मार्तषडङ्गोऽत्र विवक्षित इति भावः. तावत्युक्ते, * सर्वोपाधिविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत्। शाश्वती मम संसिद्धिः * इत्यादिपूक्तस्य आत्मापहारप्रायश्चित्तरूपस्य आत्मन्यासस्य संग्रहः स्यात्; इति तद्वारणाय * पञ्चाङ्गसंयुतः * इत्युक्तम्. तेन * षडङ्गन्यास * इति पूर्वार्धेन उद्देश्यसमर्पणं कृतं भवति. पञ्चाङ्गसंयुतः निक्षेपापरपर्यायो न्यासः. भरसमर्पणरूपत्वेन अहिर्बुध्न्यसंहितादिषु प्रतिपादितो भरसमर्पणाङ्गिकः नवीनस्वगतस्वीकारनिष्ठैःन्यास इत्युच्यते. स एव. सर्वत्र प्राधान्येन फलसमर्पणरूपतया शरणागतिनिष्ठानुष्ठेयः इति लक्ष्मीतन्त्रादिपूक्तस्त्यागः इत्युच्यते. * सर्वकर्मफलत्यागमाहुस्त्यागं विचक्षणाः * इत्युक्तेः. सन्यासःगोप्तृवरणाङ्गित्वेन अङ्गाङ्गिभावस्य न्यासेन साधनतया प्रतिपाद्यते; इति चिरन्तनस्वगतस्वीकारनिष्ठैरुक्तः शरणागतिः इत्युच्यते; * उपाये गृहरक्षित्रोः * इति गोप्तुरपि शरणशब्दवाच्यत्वात् ॐ आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपतेः पदे उपायं वृणु लक्ष्मीशमुपेयं च विचिन्तय॥ * तथा, रक्षिष्यतीति निश्चित्य निक्षिप्तस्वस्वगोचरः। वृण्वीत देवदेवं तं गोप्तारं पुरुषोत्तमम्॥ * इत्यादिषु गोप्तृत्ववरणस्याङ्गित्वश्रवणाच्च. ततश्च अयं श्लोकः षडङ्गयोगोद्देशेन तस्य विद्यात्रयात्मकत्वं विदधातीति. एवम्, विद्यात्रयात्मकत्वस्य शास्त्रेपूक्तत्वात् साध्यसाधनरूपभेदः उपपन्नः इति भावः॥

एवम्, पूर्ववाक्यार्थभूतशरणागतिं विधाय, तन्निष्ठकर्तव्यतया उत्तरवाक्यार्थभूतषडङ्गयोगं फलसमर्पणात्मकं विधाय, फलत्वोपयुक्ततत्स्वरूपविशेषं च वर्णयित्वा, न्यासस्यानेकविद्यात्मकत्वे प्रमाणं च प्रदर्श्य शरणागत्युपदेशमुपसंहरति; * उपायोयम * इत्यादिना; एवं शरणागत्युपदेशं परिसमाप्य, षडङ्गयोगसाधनत्वाकारस्यापि शक्रेण पृष्टत्वात् तत्प्रकारमाह * आनुकूल्येतराभ्यां तु * इत्यादिना. अत्र * आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते * इति आत्मनिक्षेपस्य भरसमर्पणत्वोक्तेः, * उपायापायसन्त्यागी * इत्यादिना षण्णामङ्गाङ्गिभावोक्तेः, स्थूलपारतन्त्र्यानुगुणतत्स्वरूपोक्तेश्च साधनत्वाकारवर्णनमिति स्फुटम्।

एवम् लक्ष्मीतन्त्रे षडङ्गस्य फलसमर्पणत्वेन शरणागतिशेषत्वप्रतिपादनात्, * षड्विधा शरणागतिः * इति शरणागतसंभावितस्वभावाभिप्रायः, न तु तयोरैक्याभिप्रायः. * सन्न्यासस्त्याग इत्युक्तश्शरणागतिरित्यपि * इति षडङ्गे शरणागतिशब्दः गोप्तृत्ववरणाङ्गित्वाभिप्रायः ततश्च, साधनप्रपत्तिशास्त्रे षडङ्गे शरणागतिशब्दप्रयोगः गोप्तृत्ववरणाभिप्रायः। फलप्रपत्तिशास्त्रे तत्प्रयोगः उपायत्ववरणाभिप्रायः। एवम्, उदाहृतवचनानां अन्यथा

सिद्धत्वेन ऐक्यतात्पर्याभावात्, लक्षणानुष्ठानविधिशब्दैः शरणवरणषडङ्गयोरत्यन्तभेदेन फलप्रपत्तिसिद्धौ निर्हेतुकत्वसिद्धिरिति ॥

संग्रहस्तु, * षडङ्गशरणागत्योः भेदो नाक्षादिगोचरः । अत्रोक्तयुक्त्यनुग्राह्यः शब्द एवातिसंभवेत् ॥ शब्दोऽपि दृश्यतेत्वैक्ये न्यासस्य शरणागतेः । आनुकूल्यस्य संकल्पो निक्षेपापर इत्यपि ॥ मन्त्ररत्नं द्वयं न्यास इत्यादेरिति चेन्न, तत्र स्वरूपलक्ष्मानुष्ठानफलविध्यादिभेदतः भेद एव तयोस्स्पष्टं दृढमध्यवसीयते । एवं चैक्यप्रमाणानां पूर्वोक्तानां निषेधतः नैक्यतात्पर्यमेतेषां सम्यगर्थौ हि वर्ण्यते ॥ निक्षेपापर इत्यत्र पूर्वार्धेन श्रिया स्फुटम् । षडङ्गयोगमुद्दिश्य विद्यात्रित्वं विधीयते ॥ भरसमर्पणमङ्गि चेत्तत्र न्यास इतीर्यते । गोप्तृत्ववरणाङ्गित्वे शरणगतिरित्यपि ॥ फलस्यार्पणरूपत्वे त्याग इत्युच्यते पृथक् फलप्रपत्तिनिष्टानामानुकूल्यादयस्समाः ॥ संभावितस्वभावा हि बोधिताप्यङ्गिधेत्यनः ॥ तस्मादैक्ये न तात्पर्यं एषामिति विनिश्चयः ॥

॥ इति न्यासशरणागतिभेदसमर्थनाधिकारः ॥ २४ ॥

---

## अथ शरणागतिस्वरूपशोधनाधिकारः ॥ २५ ॥

एवम्, शरणागतेः भिन्नत्वेऽपि तस्य हेतुत्वमेव स्वरूपम्, इति भगवदुपायत्वस्य न निर्हेतुकत्वसिद्धिः इति शङ्कया सङ्गतिः ।

संशयस्तु, भगवदुपायत्वस्य निर्हेतुकत्वं न संभवति, उत, संभवतीति; तदर्थम्, शरणागतेःहेतुत्वमेव स्वरूपम्, उत, फलत्वमिति; तदर्थम्, विधानं संभवति – उत नसंभवतीति; तदर्थम्, प्रमाणान्तरेण प्राप्तिर्नास्ति, उतास्तीति; यदा, नास्ति, तदा, विधानसंभवात् हेतुत्वमेव स्वरूपमिति न निर्हेतुकत्वं संभवति इति पूर्वपक्षः; यदा, प्रमाणान्तरेण प्राप्तिरस्ति, तदा विधानासंभवात् फलत्वमेवस्वरूपमिति निर्हेतुकत्वसिद्धिः; इति सिद्धान्तः ।

पूर्वपक्षस्तु, शरणागतेः हेतुत्वमेव स्वरूपम्; आकारान्तराभावात्. न च फलत्वमेवाकारः; फलरूपत्वे प्रमाणाभावात्; प्रत्युतविधिप्रत्ययश्रवणेन फलत्वस्य बाधितत्वात् नहि फलं विधीयते; किंतु शरणागतेरप्राप्तत्वादपि विधेयत्वमङ्गी करणीयम. न च शरणागतौ प्रत्यक्षं प्रमाणम्; अयोग्यत्वात्. अत एव नानुमानमपि. अतः शब्द एव तत्र प्रमाणम्. शब्दे च नार्थवादः; चेतनसाध्यत्वेन सिद्धत्वाभावात्. तस्मात्, तद्विधिरेव तत्र प्रमाणम् इति हेतुत्वमङ्गीकर्तव्यम् ॥

न च * अमृतस्यैषसेतुः * इत्यादि सिद्धपरवाक्यैर्भगवदुपायत्वेऽवगते तत्स्वीकाररूपशरणागतौ स्वत एव प्रवर्तते; इष्टसाधनत्वज्ञानस्यैव प्रवर्तकत्वात्, विधिवाक्ये तथा स्वीकृतत्वात् इति वाच्यम्; सिद्धोपायस्य प्रवृत्तिविषयत्वाभावात्, स्वीकारस्य साधनत्वाज्ञानेन प्रवृत्त्यसंभवाच्च शरणागतिः विधीयते. अत एव उपाय प्रकरणे विधिनिरूपणाधिकारे अधिकारिविशेषणविधिरिति समर्थितम्. अतः शरणागतेस्साधनत्वात् भगवदुपायत्वस्य न निर्हेतुकत्वसिद्धिरिति ।

अत्रोच्यते (इतुननक्कु स्वरूपं तन्नैप्पोगट्टोळिगै) उपायवरणात्मिका शरणागतिः, उपायवरणत्व-स्वरूपविरोधादेव उपायत्वं न सहते, इत्यर्थः. अयं भावः, उपायत्वप्रतिपादकवाक्ये. उपायत्वेऽवगते स्वरूपयाथात्म्यज्ञानवान् मुमुक्षुः स्वयमेवोपायं स्वीकरोति. यथा प्राप्यत्वेऽवगते नहि प्राप्यस्वीकारो विधीयते; एवं चोपायस्वीकारस्य रागप्राप्तत्वा न्न विधिसंभवः. न च स्वीकारस्येष्टसाधनत्वाज्ञानात न तत्र प्रवृत्तिरिति वाच्यम्; नहि स्वीकार इष्टसाधनम्; येन विधीयेत; किं तु इष्टसाधने इच्छामात्रम्. अत एव * रक्ष्यापेक्षां प्रतीक्षते * इत्युच्यते. इच्छा च न विधेया; पुरुषतन्त्रत्वाभावात; अत एव उपायप्रार्थनात्मिकायाः शरणागतेरविधेयत्वान्न हेतुत्वम्. किं च उपायस्वीकारस्य उपायत्वे तत्स्वीकारस्यापि तथात्वेन अनवस्था प्रसंगाच्च नोपायत्वम्; न च साध्योपायस्थले तदनुष्ठानं कारणम् सिद्धोपायस्थले तु उपायस्य सिद्धत्वेनानुष्ठाना-संभवात्, स्वीकार एवानुष्ठानमिति स्वीकारस्य कारणत्वम्, अन्यथा अतिप्रसंगादिति वाच्यम्; अनुष्ठाना-भावे उपायस्वरूपस्यैवासिद्ध्या साध्योपायस्थलेऽनुष्ठानं कारणं वाच्यम्; सिद्धोपाय स्थले तु स्वरूपं सिद्ध-मिति न स्वीकारस्य कारणत्वम्; न चातिप्रसंगः; प्रतिबन्धेन कार्यानुदयात्, प्रतिबन्धश्च स्वरक्षणे स्वान्वयः, तन्निवृत्तिश्च स्वीकारः. भावान्तरस्यैवाभावत्वात्. अतो नातिप्रसंगः. न च पूर्वप्रकरण-विरोधः; अधिकारिविशेषणविधित्वसमर्थनात इति वाच्यम्; प्राप्तत्वेपि विधानसंभवात्, न ह्यत्र अज्ञात-ज्ञापनमात्रम्, अत्यन्ताप्रवृत्तस्य प्रवर्तनं वा विध्यर्थः, किं तु विचारविधेरिव प्रवृत्तप्रवर्तनम्; रागप्राप्तस्य स्वीकारस्य शरण्यानभिमतत्वशङ्कयाऽप्रवृत्तौ शरण्याभिमतत्वसूचनेन प्रवृत्तिसंभवात. अत एवोच्यते "राग-प्राप्तमान उपायंताने वैधमानाल् कडुगपत्रिग्रहिक्कैक्कुडलायिरुक्कुमिरे" इति. अतो न शरणागतिः विधीयते इति न हेतुत्वं स्वरूपम् ॥

न च हेतुत्वं न स्वरूपं चेत्, स्वरूपान्तरं नास्तीति, स्वस्या असिद्धिरेव स्यादिति वाच्यम्; *ददामि बुद्धियोगं तम् * इत्यादि प्रमाणेन फलत्वस्यैव स्वरूपत्वात् * उपायोपेयत्वे तदिह तव तत्त्वम् * इत्यादिभिः, भगवत इव उपायस्वीकारस्यापि उपेयत्वोपपत्तेः. तस्मात् स्वीकारस्याविहितत्वादनुपायत्वेन भगवदुपायत्वस्य निर्हेतुकत्वसिद्धिरिति ॥

संग्रहः—

विधेयत्वात्स्वरूपं स्यात् हेतुत्वं शरणागतेः । स्वरूपान्तरहानेश्च न निर्हेतुत्वसंभवः ॥
इति चेन्न तन्न शब्देन प्रापकत्वेन निश्चिते । इच्छा भवेत्स्वतः पुंसः प्राप्यत्वेऽवगते यथा ॥
उपाय[व]करणस्यैव प्राप्तत्वात् श्रवणादिवत् । रागतो न विधेयत्वं न हेतुत्वमतो भवेत् ॥
अत एव रहस्येषु रागप्राप्तं विधीयते । झडित्युपायस्वीकारसिद्ध्यर्थमिति वर्णितम् ॥
पूर्वप्रकरणे चोक्तं उपायप्राप्तिकामवान् । उपायवरणं कुर्यात् इति तच्च विरुध्यते ॥
इति चेत् तन्न तत्रोक्तं विधानं प्राप्तिमत्यपि । शरण्याभिमतत्वोक्त्याऽविलम्बेन प्रवर्तनम् ॥
विधानशब्दतात्पर्यात्तस्मान्निर्हेतुकं स्थितम् ॥

इति शरणागतिस्वरूपशोधनाधिकारः ॥ २५॥

अथ त्यागाङ्गत्वशोधनाधिकारः ॥ २६ ॥

एवं स्वीकारानुपायत्वेऽपि, सर्वधर्मत्यागाङ्गत्वेन उपायत्वं स्यात्; इति शङ्कया संगतिः ॥

संशयस्तु—उपायस्य निर्हेतुकत्वं संभवति उत, न संभवतीति; तदर्थम्, स्वीकारविशेषणस्य धर्मत्यागस्य विधेयत्वं संभवति, उत न संभवतीति; तदर्थम्, त्यागः प्रमाणान्तराप्राप्तः, उत प्राप्त इति यदा अप्राप्त. तदा त्यागस्य विधेयत्वात् तद्धेतुकत्वेन उपायस्य न निर्हेतुकत्वम्; यदा प्राप्तः, तदा अविधेयत्वात् न हेतुकत्वम्; इति निर्हेतुकत्वसिद्धिरिति पूर्वोत्तरपक्षयोः फलफलिभावः ॥

तत्र पूर्वपक्षः; * परित्यज्य, व्रज * इति त्यागस्य स्वीकाराङ्गत्वं विधीयते; ततश्च, यद्यत्साङ्गं तत्साधनम्; इति न्यायेन स्वीकारोपायत्वं स्वीकर्तव्यम्; न च त्यागस्यानुवादत्वेन नाङ्गत्वं विधिरिति न स्वीकारोपायत्वम्; इति वाच्यम् त्यागस्याप्राप्तत्वेन अनुवादासंभवात्. न हि सर्वधर्माणां त्यागः केन चित् प्राप्तः. ननु, * भक्त्यादौ शक्त्यभावः प्रमितिरहितता शास्त्रतः पर्युदासः कालक्षेपाक्षमत्वम् * इत्युक्तहेतुचतुष्टयेन सर्वधर्माणां त्यागः प्राप्तः; इति तदनुवादेन शरणागतिः विधीयते, ततश्च त्यागः नाङ्गत्वेन विधीयते इति चेन्न; तदानीं सर्वधर्मत्यागासिद्धेः. न हि सर्वधर्मेषु अज्ञानादिचतुष्टयान्यतरदस्ति; ततश्च ज्ञानाद्यभावेन केषां चिद्धर्माणां त्यागप्राप्तावपि, ज्ञानादिसद्भावस्थले त्यागासंभवेन कृत्स्नधर्मत्यागासिद्धेः. अतः सर्वधर्मत्यागः अङ्गत्वेन विधीयते; ततश्च स्वरूपविरुद्धत्वमेव कृत्स्नत्यागे अनुगतं प्रयोजक[त्वं] इति फलितम् ॥

अत एवोपायसंयोगे प्रायश्चित्तं विधीयते. एवं त्यागस्याङ्गत्वेन साधनत्वादेव * त्यागेनैके इति श्रुतिरपि सार्थतया स्फुटमभिदधाति. न च कृत्स्नत्यागस्य सुषुप्त्यादिसुलभत्वेन, अतिप्रसंगः; ज्ञानकार्यस्यैव त्यागस्य स्वीकाराङ्गत्वेन सुषुप्त्यादिसुलभस्य ज्ञानकार्यत्वाभावात्. एतद्दूषणस्य अनुवादपक्षेपि तुल्यत्वात् ॥

ननु, न सर्वधर्मत्यागः अङ्गत्वेन विधातुं शक्यते; तस्य कदा चिदप्यनुष्ठानसंभवात्; अन्ततः शिखादिधारणस्यापि धर्मत्वेन तत्त्यागासंभवात्. न हि प्रपत्त्यनुष्ठानसमये केनापि शिखायज्ञोपवीतादि त्यज्यते; प्रत्युत, गुरुवन्दनादिधर्मानुष्ठानपूर्वकं प्रपदनं क्रियते. अतः. सर्वधर्मत्यागस्य कदा चिदप्यनुष्ठानासंभवादेव नाङ्गत्वं विधीयते इति चेन्न; सर्वधर्मत्यागः न सर्वेषां प्रवृत्तिरूपाणां मोक्षसाधनानां अननुष्ठानमङ्गतया विधीयते; तच्च शक्यमेव, न हि प्रपत्त्यनुष्ठानसमये मोक्षसाधनतया स्वीकारातिरेकेण किं चिदनुष्ठीयते ॥

न च मोक्षसाधनानां धर्माणां त्यागस्याङ्गत्वेऽपि आश्रमधर्माणां * विहितत्वाच्चाश्रमकर्मापि * इति न्यायेन विहितत्वात् तदनुष्ठानं न स्वीकाराङ्गम् इति वाच्यम्; आश्रमकर्मणां विद्याङ्गत्वं आश्रमाङ्गत्वं इत्याकारद्वयमस्ति; साधनान्तरनिष्ठानां विद्याङ्गत्वेन, योग्यतापादकत्वेन च अकारद्वयमपि उपादेयम्; सिद्धसाधननिष्ठस्य तु योग्यतापादकस्याङ्गस्य च अनपेक्षणात्, आकारद्वयमपि अनुपादेयम्; इति विद्याङ्गत्वेन आश्रमांगत्वेन च अननुष्ठेयत्वात् तन्निवृत्तिस्स्वीकाराङ्गं भवति ॥

न च स्वीकारानन्तरमनुष्ठानविरोधः; आनृशंस्यादेवानुष्ठानसंभवात्; तथा च कैङ्कर्ये पर्यवसितम्. तथा हि, सर्वधर्माणां अनुष्ठानं फलाभिसन्धिरहितत्वेन तत्सहितत्वेन च द्वेधा प्रमाणसिद्धम्: तत्र फलाभिसन्धिरहितस्य अभिसंहितफलजनकत्वं तद्रहितस्य मोक्षसाधनत्वं च * संगं त्यक्त्वा फलं चैव * इत्यादि प्रमाणैर्विभज्य निर्दिश्यते; न च स्वयंप्रयोजनतयाऽनुष्ठानम्; तदाऽनुष्ठाने प्रमाणाभावात्. कैङ्कर्यस्य स्वाधिकारत्वेन सर्वैः सर्वकर्मानुष्ठानप्रसंगाच्च ॥

ननु * अक्रियावदनर्थाय कर्म तत्तु समाचरेत् । प्रियाय मम विष्णोश्च देवदेवस्य शार्ङ्गिणः ॥ मनीषी वैदिकाचारं मनसापि न लङ्घयेत् । श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते ॥ आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः । उपायानामुपायत्वस्वीकारेप्येतदेव हि ॥ उपायत्वग्रहं तत्र वर्जयेन्मनसा सुधीः ॥ * इत्यादिप्रमाणैः साधनत्वबुद्धिं विहाय स्वयंप्रयोजनतयाऽनुष्ठानं विधीयते इति चेन्न; अत्र सर्वत्राप्यानृशंस्यादेवानुष्ठानप्रतिपादनात्. तथाहि * अक्रियावदनर्थाय * इत्यत्र परानर्थपरिहारार्थमनुष्ठानं विधीयते; इत्यानृशंस्ये पर्यवसितम् ॥

न च स्वानर्थपरिहारार्थमनुष्ठानं विधीयते इति वाच्यम्; * परित्यज्य * इति त्यागस्यैव विहितत्वेन स्वानर्थाभावात्. नित्यनैमित्तिककर्माननुष्ठाने तद्दर्शनेन इतरैरप्यननुष्ठाने तेषामनर्थजननात् परानर्थपरिहारार्थं अनुष्ठानमिति सिद्धम्. * प्रियाय मम विष्णोश्च * इत्यत्र पर्यवसितार्थकथनम्. अस्मिन् वचने हि धर्मविप्लवादीनामनुष्ठानहेतुत्वमवगम्यते; धर्माणां विप्लवः विनाशः, मनीषिणामननुष्ठाने तद्दर्शनेन सर्वैरप्यननुष्ठानं स्यात्; तदा च धर्मस्वरूपमेवोच्छिद्येत तथा तद्विनाशार्थं मनीषिणामप्यवश्यमनुष्ठेयमेव तथा च कुलस्य पालनाय चानुष्ठेयम्. सिद्धसाधननिष्ठस्य गुरोरननुष्ठानेन सिद्धसाधननिष्ठारहितानां शिष्यपुत्रादीनामप्यननुष्ठाने पतनं स्यात्, तत्परिहारेण तत्पालनार्थमप्यवश्यं विदुषो अनुष्ठेयम्. विशेषाननुष्ठाने शिष्यपुत्रव्यतिरिक्तैस्सर्वैरपि निन्दा क्रियते; तथाच भगवदपचारस्स्यात्; तत्परिहारेण तत्संग्रहार्थमप्यवश्यमनुष्ठेयम्. तथा मर्यादा स्थापनाय चानुष्ठेयम्. मनीषिणाऽननुष्ठाने शिष्टाचाराभावेन सर्वैः परित्यागे तेषां वर्णाश्रमाचारव्यवस्थाभङ्गस्स्यात्; तेन भगवदपचारस्स्यात् तत्परिहाराय धर्मसंस्थापनार्थमप्यवश्यमनुष्ठेयम्. एवं च आनृशंस्येन परार्थमनुष्ठानमित्युक्तं भवति ॥

ननु, * परित्यज्य * इति निषिद्धानामनुष्ठाने भगवन्निग्रहस्स्यादित्यत्राह—*प्रियाय मम विष्णोश्च * इति. भगवन्निग्रहरूपस्वानर्थमप्यनादृत्य परानर्थ परिहारार्थं धर्मानुष्ठानं कृतमिति * मम विष्णोश्च * प्रीतिः स्यादिति भावः. एतेन परार्थकर्मानुष्ठानमित्युक्तं भवति. अत्र दृष्टान्तः * यथा हि वल्लभो राजा * इति, तत्र नद्याः परार्थत्वमुच्यते, * बहुसस्यविवर्धनम् * इति. अनपेक्षोपि तां प्रति * इति स्वार्थाभाव उच्यते. एवम्, दृष्टान्तेनापि कर्मानुष्ठनं परार्थमिति लब्धम्. तस्मात् लोके, यथा राजा लोकोपकारकः

स्वाज्ञारूपनद्यतिलङ्घनेन स्वास्यानर्थाभावेपि परानर्थजननेन वल्लभमपि शूलमारोपयति, तथा मनीषिणो मर्यादातिलङ्घने आनृशंस्येन परार्थानुष्ठानजनितप्रीतिहानिर्जायते; इति एतद्वचनतात्पर्यमवसीयते; अत एव * न प्रियः * इत्युक्तम्. * श्रुतिः स्मृतिर्ममैवाज्ञा * इत्यत्रापि इदमेव तात्पर्यम्. तस्मात् आनृशंस्यादेव कर्मानुष्ठानमिति संप्रदायः ॥

अत एवोच्यते * विष्णोराज्ञां तथा यस्तु सत्कृत्यं कुरुते बुधः स एकान्तीति मुनिभिः प्रोच्यते वैष्णवोत्तमः * न च प्रत्यवायपरिहारार्थमनुष्ठानम्; विहितानुष्ठाने हि प्रत्यवायः, न च सिद्धोपायनिष्ठं प्रति कर्म विहितम्. प्रत्युत * परित्यज्य इति निषिद्धमेव. न च निषिद्धानुष्ठाने भगवन्निग्रहप्रसंगः; तस्य, दयाकार्यत्वेन भगवत्प्रीतिहेतुत्वात्. दया हि नामस्वार्थनिरपेक्षा परदुःखासहिष्णुता. स्वार्थश्च - अनिष्टनिवृत्तिः, इष्टप्राप्तिश्च; स्वार्थरूपानिष्टनिवृत्तिमनपेक्ष्यपरानर्थासहिष्णुत्वलक्षणानृशंस्येन निषिद्धानुष्ठानमुपपद्यते अत एव भाष्यकारैराचार्यवचनमुल्लङ्घ्यापिपरानर्थपरिहारार्थं मन्त्र उपदिष्ट इति संप्रदायः ॥

भगवता च तस्मिन् स्वानर्थमचिन्तयित्वा परानर्थपरिहारः कृतः, इति महान् प्रसादः क्रियते. तदनुष्ठानं कैंकर्यतया पर्यवसितम्. अत एव, “ कर्म कैङ्कर्यत्तिले पुगुं इत्युच्यते अत एव विहितानां नित्यनैमित्तिकानां यत्किंचित्सुसाधनत्वमवर्जनीयम्; इति अनिष्टफलसाधनतया पापशब्दवाच्यत्वम्. * सर्वपापेभ्यः * इत्यत्र लोकाचार्यैः प्रतिपादितम्. न चैवं आज्ञासिद्धानां देशवासादीनामननुष्ठाने परानर्थाभावेन आनृशंस्येनानुष्ठानं न संभवतीति वाच्यम्; परमात्मविषयरागादेव देशवासाद्यनुष्ठानसंभवात्. देशवासादीनां विहितत्वेन फलसाधनत्वं रागप्राप्तत्वेन कैंकर्यत्वं चेति साधनत्वत्यागेन कैंकर्यत्वेनानुष्ठानमुपपद्यते. नित्यनैमित्तिकानां तु रागतः प्रवृत्त्यसंभवात् विहितत्वेन फलसाधनत्वमवर्जनीयमिति तत्त्यागोऽङ्गत्वेन विधीयते; इत्यानृशंस्येनानुष्ठानमिति वैषम्यम्. तस्मात्सर्वधर्मत्यागस्याङ्गत्वेन विधानसंभवात्, यद्यत्साङ्गमिति न्यायेन स्वीकारस्य मोक्षसाधनत्वात् उपायस्य न निर्हेतुकत्वसिद्धिरिति ॥

अत्रोच्यते--(अङ्गं तन्नैयोलिन्दवत्तैप्पोरादोलिगै) स्वीकारस्य, सकलचेतनप्रवृत्त्यसहत्वेन निवृत्त्यङ्गत्वात, यद्यत्साङ्गमिति न्यायस्य प्रवृत्त्यङ्गविषयत्वेन न स्वीकारोपायत्वसिद्धिरित्यर्थः ॥

अयं भावः, * परित्यज्य इति स्वप्रवृत्तिः निषिध्यते, निवृत्तिश्च न साधनम्; निषेधस्य इष्टसाधनत्वार्थकत्वाभावात्, अत एव लोकविहितानुष्ठानेन धार्मिकत्वप्रसिद्धिवत्, निषिद्धाननुष्ठानेन धार्मिकत्वप्रसिद्धिः, अतो निषिद्धाननुष्ठाने साधनत्वाभावेन तदङ्गस्य स्वीकारस्य प्रवृत्त्यङ्गविषयेण यद्यत्साधनमिति न्यायेन न हेतुत्वसिद्धिः ॥

किं च त्यागस्य अदृष्टसाधनत्वाभावात् अदृष्टद्वारा नाङ्गत्वम्, इति दृष्टद्वारा वक्तव्यम्. दृष्टं च अन्यत्रास्तीति प्रतिबन्धकाभावत्वेनाभ्युपगन्तव्यम्, प्रतिबन्धकाभावस्य च न हेतुत्वम्; संसारनिवृत्तेः

कैङ्कर्यं प्रति हेतुत्वाभावात्। न च साध्यस्य नित्यत्वे, प्रतिबन्धकनिवृत्तेर्हेतुत्वम्, साध्यस्यानित्यत्वे प्रतिबन्धकनिवृत्तेः हेतुत्वं च न संभवति इति वाच्यम्; भगवतः उपायत्ववत् उपायस्यापि नित्यत्वेन तद्योगात्; अत एव * उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ * इत्युच्यते; अतः प्रतिबन्धके निवृत्ते उपायः कार्यं जनयति इति न धर्मत्यागस्य हेतुत्वम् ॥

न च प्रतिबन्धकनिवृत्तिमात्रेण कार्यसंभवे स्वीकारवैयर्थ्यमिति वाच्यम्; प्रतिबन्धकाभावमात्रस्याचेतनसाधारणतयातिप्रसंगपरिहाराय स्वीकारस्यापेक्षितत्वात्; न च * त्यागेनैके इति त्यागस्य हेतुत्वं श्रूयत इति वाच्यम्; उक्तन्यायेन त्यागस्य हेतुत्वासंभवेन भगवदुपायत्व एव श्रुतेस्तात्पर्यात्। तस्मात्, त्यागाङ्गत्वेन स्वीकारस्य हेतुत्वम्। वस्तुतस्तु; प्रवृत्तेः न स्वीकारे प्रतिबन्धकत्वं किं तु भगवदुपायत्व एव। ततश्च, तत्त्यागस्य न स्वीकाराङ्गत्वम्, इति न स्वीकारहेतुत्वम्। न च चरमश्लोकविरोधः; तस्यापि सिद्धोपायाङ्गत्व एव तात्पर्यात्। तस्मात्, यत इति न्यायाविषयत्वादेव न स्वीकाराङ्गत्वनिष्कर्षः ॥

यदुक्तं विधानमन्तरेण कृत्स्नत्यागासिद्ध्या विहितत्वेन साधनम्; इति तन्न; पारतन्त्र्यस्वरूपविरुद्धत्वज्ञानादेव त्यागसंभवात्। नच अपायानां स्वरूपविरुद्धत्वावगमेन शास्त्रापेक्षावत् उपायान्तराणामपि तद्विरुद्धत्वावगमः त्यागविधिमन्तरेण न संपत्स्यते; इति वाच्यम्। स्वरूपयाथात्म्यशास्त्रात् स्वरूपे अवगते, तदनुरूपत्वाननुरूपत्वयोः उपपत्तितः स्वत एव निश्चयसंभवेन विधानानपेक्षणात्। तत्र प्रमाणसंवादमात्रं हि तदपेक्षितम्। नच उपायापायत्यागयोः यत्नसाध्यत्वात् स्वतः प्राप्त्यसंभवः; * इन्द्रियेभ्यः पराह्यर्थाः * इति इन्द्रियजयस्य शरणागतिसाध्यत्वकथनेन सिद्धोपायकार्यत्वमवगम्यते, * तमेवं विद्वान् * इत्यत्र स्वरूपज्ञानमात्रेण इन्द्रियजयादिफलपरम्परयासिद्धोपायकृत्यत्वावगमाच्च। अत एवोच्यते * परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि * अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते * इति। अन्येषां अतिकृच्छ्रसाध्यस्येन्द्रियजयस्य सिद्धोपायावष्टम्भमहिम्ना अयत्नसिद्धत्वोपपत्तेः; धर्मान्तरत्यागेऽपि इन्द्रियाणां कैङ्कर्यविषयत्वेन निर्विषयत्वाभावात्; उपायान्तराणां दुश्शकत्वेन, स्वरूपविरुद्धत्वज्ञानेन च स्वत एव त्यागसंभवाच्च अयत्नेन सिद्ध्यति ॥

एवम्, उपायापायत्यागस्य स्वरूपज्ञानकार्यत्वात् अयत्नसिद्धत्वेन न विधेयत्वम्। * सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। स्थितं त्वां मोक्षयिष्यामि इति वाक्यार्थः। एवं सति, एकवाक्यत्वमपि संभवति, अन्यथाऽत्र विधित्वे * अहं इत्यादेः भिन्नवाक्यत्वापत्तिः। न च उत्तरार्धेन नियोज्यमात्रोपस्थितिः। * तस्मिन् दृष्टे * क्षीयन्ते चास्य कर्माणि * इति भक्तेः सर्वपापमोक्षणहेतुत्ववत् ईश्वरस्य तथात्वस्य अप्राप्तस्य बोधनात्। तस्मात् अस्य सिद्धपरवाक्यत्वेन कामनाधिकारत्वाभावात् कर्तव्यविधेरभावात्, ईश्वर एव प्राप्ता; फली च इति चेतनस्य प्राप्तृत्वफलित्वयोरभावात्, फलस्य च नान्तरीयकतया सिद्धत्वाच्च भगवदुपायत्वस्य निर्हेतुकत्वसिद्धिरिति ॥

संग्रहश्च :—

त्यागो विधीयते श्लोके स्वीकाराङ्गतया यत. । हेतुत्वं तेन साङ्गस्य स्वीकारस्य तथापि च ॥
उपायस्याधिकारोपि त्यागो यत्नेन साध्यते । अतोस्य यत्नसापेक्ष उपायत्वं सहेतुकम् ॥
नैतत्त्यागस्य हेतुत्वं नसंभवति साधने । प्रतिबन्धनिवृत्तित्वात् तेनत्यागशरीरिणः ॥
स्वीकारस्य न हेतुत्वं सांगन्यायेन संभवेत् । त्यागस्य सिद्धोपायाङ्गभावादपि न हेतुता ॥
तथा त्यागस्य सिद्धत्वात् मोचिनात्र विधीयते ॥ त्यागस्वीकारयुक्तं त्वां मोक्षयिष्यामि माशुचः ।
इति स्वीकारवत्त्यागः अनूद्योवाक्यैकलाघवात् । स्वरूपस्य विरुद्धत्व ज्ञानात्त्यागो हि न सिद्ध्यति ॥
त्यागाभावे तु नैवास्य ज्ञानं जातमितीष्यते । सिद्धोपायस्य माहात्म्याद्भवतीन्द्रियसंयमः ।
दुश्शकत्वादुपायानां त्यागोपि भवति स्वयम् । अतोऽस्य कामनाभावात्प्राप्ता प्रापक एव च ॥
फली च भगवानस्य फलं नान्तर्यकं भवेत् । अस्य संरक्षणं तस्मादहेतुकमितीर्यते ॥

इति त्यागाङ्गत्वशोधनाधिकारः ॥ २६ ॥

---

### अथ प्राप्तृत्वादिशोधनाधिकारः ॥ २७ ॥

त्यागस्वीकारयोः अहेतुकत्वे जीवस्य प्राप्तृत्वं फलित्वं च न संभवतीति शङ्कया संगतिः ।

प्राप्तावुम् प्रापकनुम् प्राप्तिक्कुकप्पानुमवने । संशयस्तु उपायस्य निर्हेतुकत्वं न संभवति - उत संभवतीति । तदर्थं जीवस्य प्राप्तृत्वं उत परमात्मन इति । तदर्थं फली जीवः उत परमात्मेति । यदा जीवः फली तदा तस्य प्राप्तृत्वेन कर्तृत्वात् उपायस्य निर्हेतुकत्वं न संभवतीति पूर्वः पक्षः । यदा परमात्मा फली तदा तस्यैव प्राप्तृत्वात् निर्हेतुकत्वं संभवतीति सिद्धान्तः । तत्र पूर्वः पक्षः । प्राप्ता जीव एव [1](ननु भगवतः प्राप्तृत्वं प्रमाणविरुद्धं) ब्रह्मविदाप्नोति परं * ब्रह्मणो महिमानमाप्नोति * प्राप्यस्य ब्रह्मणोरूपं प्राप्तुश्च प्रत्यगात्मनः । प्राप्त्युपायं फलं प्राप्तेः तथा प्राप्तिविरोधि च । वदन्ति सकला वेदाः सेतिहासपुराणकाः । मुनयश्च महात्मानः वेदवेदान्तवेदिनः * इति सर्वस्मिन् शास्त्रे चेतनस्य प्राप्तृत्वं ईश्वरस्य प्राप्यत्वं च नियतमिति प्रतिपाद्यते । [2]अतः ईश्वरस्य प्राप्तृत्वे जीवस्य प्राप्यत्वं वक्तव्यम् । तच्च सर्वशास्त्रविरुद्धम् । [ईश्वरस्य प्राप्तृत्वं]

किं च ईश्वरस्य प्राप्तृत्वे तस्य परिपूर्णत्वम् सत्यसंकल्पत्वं सत्यकामत्वं इत्यादि विहन्येत । * न तस्य कार्यं करणं च विद्यते * इति चेतनप्राप्त्यर्थसाधनानुष्ठानमपि न युज्यते । ततः चेतनस्य दुष्टस्य

---

(1) ननु भगवतः इत्यारभ्यैव एतदधिकारारम्भः मुद्रितकोशे दृश्यते ।
(2) प्रतिपाद्यते इत्यनन्तरं अतः इत्यपि दृश्यते । एतदधिकारे मुद्रितकोशे बह्वः पङ्क्तयः परित्यक्ताः । तच्च मुद्रितकोशात्पूर्णा सुगमम् ॥

क्षुद्रस्य प्राप्तृत्वं तत्प्राप्तिसाधकत्वं ईश्वरस्य च व्याहतम् इति निर्हेतुकत्वपक्षे प्राप्त्यसिद्धिर्वा तत्सिद्धौ अकारणकार्यानुत्पत्तेः चेतनगतस्य तद्धेतुत्वात् कस्यचित् हेतुत्वं वा वाच्यमिति ।

सिद्धान्तस्तु अत्रोच्यते—प्राप्तावुम् + अवतेइति । प्राप्ता, प्रापकः कर्ता च स एवेति तस्य उपायत्वं निर्हेतुकमित्यर्थः । अयं भावः यद्यपि सर्वस्मिन् शास्त्रे चेतनस्य प्राप्तृत्वं ब्रह्मणः प्राप्यत्वं च नियतं प्रतिपाद्यते ; तथापि निर्हेतुकत्वस्यापि शास्त्रसिद्धत्वात्, तत्र चेतनस्य प्राप्यत्वं ईश्वरस्य प्राप्तृत्वमपि स्वीकार्यम् ; यद्यपि ब्रह्मणः परिपूर्णत्वादिकं श्रूयते ; तथापि तस्य भक्तिचपलत्वमपि प्रमाणसिद्धम् ; * पत्रं पुष्पम् अन्यत्पूर्णात् * याः क्रियास्संप्रयुक्ताःस्युः * अणवप्युपहृतम् * इत्यादिदर्शनात् । यद्यपि अनन्तैर्नित्यमुक्तैः भक्तिः क्रियते ; तथापि नवोढापरिरम्भणवत् * योदीक्षितोन्तरेव नव नीतम् * इत्युक्तप्रकारेणाभिनवभक्तिचपलत्वम्, निरतिशयसौन्दर्यसौशील्यादिगुणाविष्काररूपसाधनानुष्ठानेनाश्रमालाकारादिषु अभिनवभक्तिमुत्पादयतादृशचेतनं स्वयमेवावतीर्य प्राप्नोति ।

यद्यपि उपासकानामपि अभिनवभक्तिरस्ति ; तथापि तस्याः स्वातिशयसाधनत्वेनान्यार्थत्वात् न तत्र भगवतः अत्यन्तप्रीतिरस्ति ; चेतनगतातिशयहेतुत्वेन शास्त्रतोऽवगता विधिप्राप्ता सा स्वयत्नसाध्या भवितुमर्हति ; स्वयं प्रयोजनरूपा रागप्राप्ता भगवतः अत्यन्तं प्रियतमा विधानानर्हा केवलं सौन्दर्यादिगुणाविष्कारजन्या न स्वयत्नसिद्धा ; इति तत्र भगवद्गुणचेष्टितादेरेवोपायत्वं वाच्यम् ; अतः परिपूर्णोपि परेशः अभिनवानन्यभक्तिचापल्यादवतीर्य, सौन्दर्यादिगुणाविष्काररूपसाधनमनुतिष्ठन् तज्जन्यत्वेनायत्नसिद्धानन्यप्रयोजनभक्तियुक्तं चेतनं स्वयमेव प्राप्नोति ; अवतार एव प्राप्तृत्वं अनन्यप्रयोजनचेतनप्राप्तिरेवावतारफलम् ; अनन्यप्रयोजनभक्त्युत्पादस्य अवतरणं विना संकल्पेनाशक्यत्वात् । * बहुस्याम् * न स्याम् इति संल्कपवत् दुष्कृद्विनाशनार्थं अवतारो न कार्यः ; उपासकानुग्रहार्थमपि न कार्यः, अन्तर्यामित्वेनैव तदुपपत्तेः ॥ धर्मसंस्थापनमपि देशिकमुखेन आवेशादेव भवति, इत्यन्यथा सिद्धः । अतः साधुसमाश्रयणमेवावतारप्रयोजनम् । अन्यत्सर्वमानुषङ्गिकम् । साधवश्च स्वप्रयोजनरहिताः । अतः अर्चावतारपर्यन्तावतरणमेव भगवतः प्राप्तृत्वम् । इदं भगवच्छास्त्रेऽप्युक्तम्, * यथा हि मोषकाः पान्थं परिवर्हमुपेयुषि । निवृत्तमोषणोद्योगास्सदा सन्त उपासते * इत्यादि । अतः ईश्वरस्य प्रापकत्वे सति प्राप्तृत्वाच्च तस्य प्राप्यत्वात् प्राप्यत्वान्यथासिद्धेः चेतनफलस्य नान्तरीयकत्वाच्च रक्षणस्य निर्हेतुकत्वसिद्धिरिति ॥

संग्रहः —

प्राप्तृत्वं ब्रह्मणस्सर्वप्रमाणेन विरुध्यते । पूर्णत्वादिगुणैश्चेति नात्र कार्या विचारणा ॥
नैतन्निर्हेतुकश्रुत्या प्राप्तृत्वं ब्रह्मणः स्फुटम् । पूर्णोप्यभिनवानन्यभक्तिचापल्यसंयुतः ।
तादृशी च परे व्योम्नि साधकेषु च दुर्लभा ॥ अनन्या न विधिप्राप्ता रागप्राप्ता भवेद्यतः ।

रागो हि विषये दृष्टे दर्शनं चावतारणात् । प्राप्तृत्वमवतारस्स्यात्सौन्दर्यादिप्रकाशनम्
प्रापकत्वमनः प्राप्तिफलं भक्तिरनन्यगा ॥

इति प्राप्तृत्वादिशोधनाधिकारः ॥ २७॥

---

## अथ कर्तृत्वादिनिरूपणाधिकारः ॥ २८ ॥

जीवस्य प्राप्तृत्वाद्यभावे कर्तृत्वाद्यभावेन विधि निषेध शास्त्र वैयर्थ्यं स्यादिति शङ्कया संगतिः संशयस्तु उपायस्य निर्हेतुकत्वं न संभवति उत संभवति । तदर्थं जीवस्य कर्तृत्वं संभवति उत नसंभवति तदर्थं - विधि निषेध शास्त्र वैयर्थ्यं जीवस्य चैतन्याभावश्च प्रसज्येतनवेति । यदा प्रसज्यते तदा जीवस्य कर्तृत्वेन उपायस्य निर्हेतुकत्वं नसंभवति यदा नप्रसज्यते तदा जीवस्य कर्तृत्वाभावेन उपायस्य निर्हेतुकत्वं संभवतीति पूर्वोत्तरपक्षयोः फलफलिभावः ॥

ईश्वरस्य प्राप्तृत्वाभ्युपगमेन चेतनस्य तदनभ्युपगमे * विज्ञानं यज्ञं तनुते, कर्माणि तनुते पि च * कर्ता विज्ञानात्मा पुरुषः * कर्ता शास्त्रार्थवत्त्वात् * कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः * इत्यादि शास्त्रविरोधः, विधिनिषेधशास्त्रानर्थक्यापत्तिः; ईश्वरस्यैव फलित्वे च चेतनस्य भोक्तृत्वाभावे * एतदेवामृतं दृष्ट्वा तृप्यन्ति * सोश्नुते सर्वान् कामान् * इत्यादि श्रुतिविरोधः, भोक्तृत्वविरहेण कामनासिद्धेः विधिशास्त्रानर्थक्यम्, भोक्तुरेव नियोज्यत्वात्, धर्मादीनां अपुरुषार्थता च भगवत्प्रीतिदर्शनार्थकैंकर्यानुष्ठन-मपि न सिद्ध्येत्; तयोः कर्तृत्वभोक्तृत्वरूपत्वात् । आत्मनः चैतन्यमेव नसिद्ध्येत् । कर्तृत्वभोक्तृत्वयोः तदवस्थारूपत्वेन तयोरभावे चैतन्यस्यैवाभावात् आत्मनस्तुच्छत्वापत्तिः । कर्तृत्वभोक्तृत्वयोः प्रामाणिकत्वेन प्रतीयमानयोः गुणनिष्ठतापत्तिः प्रामाणिकत्वेन तयोः आत्मज्ञानेनत्यक्तुमशक्यत्वाच्च । चैतन्याङ्गीकारेपि कर्तृत्वभोक्तृत्वयोः अभावे तस्य सफलत्वं नसिद्ध्येत् । तदिदं अनेकप्रमाणविरुद्धमिति जीवस्यैव कर्तृत्वादिकं सर्वं अभ्युपगन्तव्यं स्यादिति ननिर्हेतुकत्वसिद्धिरिति पूर्वःपक्षः ।

उच्यते :—स्वयत्ननिवृत्ति पारतन्त्र्यफलम् ।

स्वप्रयोजननिवृत्तिशेषत्वफलम् परप्रयोजनप्रवृत्तिप्रयत्नफलम् । तद्विषयप्रीतिचैतन्यफलम् पारतन्त्र्य-शेषत्वयोरेव स्वरूपत्वेन तदनुरोधेन कर्तृत्वभोक्तृत्वयोः नेयत्वात् नविरोध इत्यर्थः । अयं भावः, मूलमन्त्रे मकारोदितकर्तृत्वभोक्तृत्वयोः स्वार्थता नमःपदेन वारिता । तथा सर्वधर्मान् इत्यादिष्वपि निषिध्यते । न च विरुद्धविधिद्वयविरोधः । निषेधवचनानां पारतन्त्र्यशेषत्वज्ञानवत्पुरुषविषयत्वात् । कर्तृत्वभोक्तृत्वविधीनां तद्रहित विषयत्वाच्च उत्सर्गापवादन्यायेन विरोधाभावात् । न च स्वार्थतादिरोधः येन चैतन्यप्रयत्नयोर्वैकल्प्यं । न हि वयं कर्तृत्वभोक्तृत्वयोः अत्यन्ताभावं ब्रूमः, येनोक्तदोषापत्तिः; किं तु * परात्तु तच्छ्रुतेः * इति साधारण्येन

ईश्वरदत्तस्य ज्ञातृत्वादिरूपस्य [कर्तृत्वादेः] * कर्ता शास्त्रार्थवत्त्वात् * इत्यादिना स्वार्थप्रवृत्तौ विनियोगःकृतः । * सोऽश्नुते * इत्यादिना भोक्तृत्वमपि स्वरसे विनियुक्तम्; तदेव कर्तृस्वरूपं व्यक्तचतुर्थ्या * सृष्टस्त्वं वनवासाय * विचित्रा देहसंपत्तिः * इत्यादिभिः परार्थत्वेन विनियोजितम्; चैतन्यफलं भोक्तृत्वमपि * अहमन्नमहमन्नम् * इति अन्नत्वोपसर्जनतया पश्चादुक्तमन्नत्वोपयोगीति दर्शितम्। ततश्च * अन्नादोहमन्नम् * इत्यर्थः। ततश्च अधिकारानुगुणं विधिनिषेधयोरपि परार्थतयानुष्ठानात् एतद्विषयेऽपि न तदानर्थक्यमिति ॥

संग्रहः —

परमात्मा यदि प्राप्ता फलीचाभ्युपगम्यते । जीवेकर्तृत्वभोक्तृत्वे न प्रमाणेन सिद्ध्यतः ॥
तथा च शास्त्रानर्थक्यं चैतन्यस्य च संभवेत् । इति चेत्तन्नकर्तृत्वस्वार्थतानमसायतः !
निवर्तिता, तथा व्यक्तचतुर्थ्या च परार्थता ॥ भोक्तृत्वे च तथाव्यक्तमुच्यते कण्ठतः श्रुतौ ।
अन्नादोहं भगवतो अन्नमित्यादिना ततः । स्वातन्त्र्य पारतन्त्र्याभ्यां अधिकारस्यभेदतः ।
कर्तृत्वादेः परार्थत्व स्वार्थत्वेन विरुध्यतः । चतुर्थ्यादिनवैयर्थ्य इति तत्वविनिर्णयः ।

❀ इति कर्तृत्वादिनिरूपणाधिकारः ॥ २८ ॥

---

## अथ शेषत्वशोधनाधिकारः ॥ २९ ॥

### अहमर्थत्तुक्कु निरूपकम् ॥

शेषत्वापेक्षया ज्ञातृत्वप्राधान्यात् तदनुगुणं शेषत्वं नेयमिति कर्तृत्वादिकं जीवस्य स्यादिति शंकया संगतिः । संशयस्तु उपायस्य निर्हेतुकत्वं न संभवति उत संभवतीति । तदर्थं जीवस्य कर्तृत्वं अस्ति उत नास्तीति । तदर्थं शेषत्वं प्रधानं उत ज्ञातृत्वमिति । तदर्थं शेषत्वमात्रं स्वाभाविकं उत ज्ञातृत्वमपि स्वाभाविकमिति । तदर्थं शेषत्वज्ञातृत्वे मोक्षदशायांस्थः उत नेति । तदर्थं प्रमाणैः आत्मा शेषत्वेन निरूप्यते उत ज्ञातृत्वेनेति । यदा प्रमाणैः ज्ञातृत्वेन निरूप्यते तदा मोक्षदशायां ज्ञातृत्वस्यापि सत्त्वेन उभयोरपि निरूपाधिकत्वात् शेषत्वादेक्षया ज्ञातृत्वं प्रधानमिति शेषत्वं तदनुगुणं नेयमिति जीवस्य कर्तृत्वात् उपायस्य निर्हेतुकत्वं नसंभवतीति पूर्वःपक्षः यदा प्रमाणैः आत्मा शेषत्वेन निरूप्यते तदा मोक्षदशायां ज्ञातृत्वाभावे शेषत्वस्यैवनिरूपाधिकत्वात् तदेव प्रधानमिति जीवस्य कर्तृत्वाभावात् उपायस्य निर्हेतुकत्व सिद्धिरिति सिद्धान्तः । तत्र पूर्वःपक्षः ननु इदं सर्वं तदा शोभते; यदि मूलमन्त्रे शेषत्वस्य प्राधान्यं

---

(1) ननु भगवतः इत्यारभ्यैव एतदधिकारारम्भः मुद्रितकोशे दृश्यते।

(2) प्रतिपाद्यते इत्यनन्तरं अतः इत्यपि दृश्यते। एतदधिकारे मुद्रितकोशे बह्वः पङ्क्तयः परित्यक्ताः। तच्च मुद्रितकोशद्रष्टॄणां सुगमम्॥

* अस्मिन्नप्यधिकारे तैलङ्गमुद्रित पुस्तके अनुकूलाः बह्वः पङ्क्तयः नोपलभ्यन्ते । विरुद्धाश्चोपलभ्यन्ते। एवमेव उपर्यपि बहुषु दृश्यन्ते । अधश्चापि द्रष्टव्याः ॥

सिद्ध्येत्; तदेव नास्ति; लुप्तचतुर्थ्यर्थशेषत्वोपमर्दनेन मकारे कर्तृत्वलक्षणस्वातन्त्र्योदयात् । 'पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यति' इति न्यायात् । नच मकारोदितस्वातन्त्र्यस्य नमश्शब्देन निषिद्धत्वात् शेषत्वप्राबल्यमिति वाच्यम्; व्यक्तचतुर्थ्या भोक्तृत्वस्य पुनरप्युदितत्वेन नमश्शब्दस्य पूर्वोत्तरयोः प्रतिपन्न-स्वातन्त्र्यानुगुण्येन नेयत्वात् । एतेन मकारे भोक्तृत्वप्रकाशज्ञातृत्वोदयेऽपि अनन्तरं मकारवाच्यस्योत्तर-चतुर्थ्या भोग्यत्वोपस्थापनात् शेषत्वं प्रधानमिति निरस्तम् । मूलमन्त्रपदत्रयगतप्रार्थनायाः भोक्तृत्वाविना-भूतायाः ततोप्यनन्तरमुदितत्वात् ॥

किं च 'अभ्यर्हितं पूर्वम्' इति न्यायेन शास्त्रेषु सर्वत्र ज्ञातृत्वमेव पूर्वमुपदिश्यते; यथा पूर्वभागे ज्ञातृत्वम्, उत्तरभागे शेषत्वम्, उत्तरभागे तत्तद्विद्यास्वपि ज्ञातृत्वं प्रथममुपदिश्यते; तदुक्तं वेदार्थसंग्रहे "अशेषं सर्वशास्त्रहृदयम्" इत्यारभ्य, "प्रथमं एतेषां देवादिभेदरहितज्ञानैकाकारतया सर्वेषां साम्यं प्रति-पाद्य, तस्यापि स्वस्वरूपस्य भगवच्छेषतैकरसतया भगवदात्मकतामपि प्रतिपाद्य" इति । यदि च आत्मस्वरूपस्य भगवत्स्वरूपाधीनत्वात् * तच्छेषत्वम्, प्रधानम्; तर्हि स्वस्वरूपस्य स्वाधीनत्वात् स्वशेषत्वं च समानम् । यदि ज्ञातृत्वायत्तस्वशेषत्वस्य, सुषुप्तिप्रलययोरभावात् कादाचित्कत्वेन अप्राधान्यम्; तर्हि संसारि-दशायां भगवच्छेषत्वस्याप्यभावेन कादाचित्कत्वं तुल्यम् । यदि 'फलोपधानस्य कादाचित्कत्वे, शेषत्व-योग्यता नित्या' इति मन्यसे; तर्हि कर्तृत्वभोक्तृत्वरूपफलोपधानस्य कादाचित्कत्वेऽपि ज्ञातृत्वसत्तायाः यावदात्मभावित्वमपि तुल्यम् । नच भगवत्प्रकारतयैव लब्धसत्ताकत्वादात्मनः निरूपितस्वरूपविशेषणत्वं ज्ञातृत्वादेरिति वाच्यम्; प्रकारतयैव लब्धसत्ताकत्वं, किं प्रकारत्वं सत्ताव्याप्यत्वमिति वा ? सत्ताकारणमिति वा ? आद्ये ज्ञातृत्वमपि स्वरूपसत्ताव्याप्तमेव; अन्त्ये असिद्धिः; भगवत्स्वरूपाधीनत्वेन आत्मसत्तायाः स्वधर्मप्रकारत्वा-यत्तत्वाभावात् । नच * नान्यथा लक्षणं तेषाम् * इति वचनं प्रमाणम्; शेषत्वमात्रस्याचेतनेऽपि सत्त्वेनातिव्याप्तेः । अत एव * दासभूताः * इत्युक्तम् । दासत्वं—चेतनत्वे सति * शेषत्वम् । ततः ज्ञातृत्वमेव [प्रधानं] अत एवोच्यते, * ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मनः * इति शेषत्वमप्रधानमुच्यते; एवं ज्ञातृत्वस्य प्रधानतया शेषत्वस्य ज्ञातृत्वलक्षणस्वस्वातन्त्र्यशेषत्वात्, शेष्यनुरोधेन अन्यातिशयाधायकत्वे सति परातिशयाधायकत्वलक्षणविशेषत्वे, अन्यशब्दस्य स्वव्यतिरिक्तान्यपरत्वेन संकोचं कृत्वा स्वातिशयाधायकत्वसहं शेषत्वमिति सिद्ध्यति * एवम्, भगवच्छेषत्वस्य स्वस्वातन्त्र्यशेषतया साधनदशायां ईश्वरस्य कर्तृत्वनिर्वाहकत्वात् भगवच्छेषत्वस्य अन्यार्थता-सिद्धिः, फलदशायां * एष ह्येवानन्दयाति * इति फलस्य तदधीनत्वात्, भोक्तृत्वनिर्वाहकत्वेन भगवच्छेष-त्वस्य स्वार्थतासिद्धिः ॥

अत एव भगवदनुभवकैङ्कर्ययोरपि शेषत्वलक्षणयोः स्वार्थत्वम् । एवं भगवत्स्वरूपगुणविभूतीनां स्वानन्दार्थत्वादेव हि * स स्वराड्भवति * इत्युच्यते; अत एव * सह ब्रह्मणा * इति भगवतः अप्राधान्यं

प्रतिपाद्यते; तस्मात् साधनसाध्योभयदशायामपि ज्ञातृत्वस्य प्रधानत्वात्, शेषत्वस्य तदर्थतया अप्रधानत्वाच्च चेतनस्य स्वार्थकर्तृत्वभोक्तृत्वविरहयोः असिद्धत्वात्, तस्यैव प्राप्तृत्वम्, फलित्वं चेति सहेतुकत्वसिद्धिरिति चेत्, अत्रोच्यते (अहमर्थत्तुक्कु ज्ञानानन्दङ्गळ् तटस्थमेन्नुम्पडि दास्यमिरे अन्तरङ्गनिरूपकम्) इति ज्ञानानन्दगुणयोर्निरूपित स्वरूप गुणत्वे एव तटस्थत्वं तदपेक्षया शेषत्वं स्वरूपनिरूपकत्वात् अन्तरङ्गमित्यर्थः। अयं भावः (**यदुक्तं, ज्ञातृत्वं प्रधानम्, भगवच्छेषत्वं तच्छेषत्वभूतम्; इति तन्नोपगद्यते;**) शेषत्वं स्वरूपनिरूपकत्वात् अन्तरङ्गम्। ज्ञातृत्वस्य निरूपितस्वरूपविशेषणत्वात् तदपेक्षयाबहिरङ्गम्। स्वरूपनिरूपकत्वं च अहंप्रत्ययगोचरत्वम्; प्रत्यक्त्ववत्। तच्च, शेषत्वेप्यस्तीति वेदान्तव्युत्पत्तिमतां अहंप्रत्यये भगवच्छेषत्वस्फुरणात्, योगेपि * त्वं चाहमस्मि भगवतो देवते * इत्यहंप्रत्यये आत्मनः भगवच्छरीरत्वप्रतीतेश्च ॥

यद्यपि संसारिणां अहंप्रत्यये शेषत्वं न प्रतीयते, तथापि तत्प्रत्ययस्य स्वनिष्ठत्वगोचरतया * अज्ञानमतोन्यदुक्तम् * इति भ्रान्तित्वं अत एव * सर्वगतत्वादनन्तस्य * सतत्सर्वम् * इत्यादिव्यवहारश्च; अतः अहंप्रत्यये शेषत्वस्फुरणात्, पश्चात्, अहं ज्ञाता इति ज्ञातृत्वस्य निरूपितस्वरूपविशेषणत्वेन स्फुरणाच्च शेषत्वं प्रधानम; किं च आत्मनिष्ठयोः स्वशेषत्व परशेषत्वयोर्मध्ये परशेषत्वमेव प्रबलम्; शेषिप्रतियोगित्वात्, स्वशेषत्वस्य शेषप्रतियोगिकत्वाच्च। शेषिक्रमानुरोधित्वं हि तच्छेषभूतयोरपि न्याय्यम्; अत एव भाष्यकारैः शेषत्वे सति ज्ञातृत्वं चेतनलक्षणं संप्रदायपरम्पराप्राप्तं कृतम्; अत एव * दासभूताः * इत्यत्र शेषत्वस्य प्राधान्यविवक्षया * नान्यथा * इत्यन्ययन्निषिद्ध्यते। * ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मनः * इत्यादि लक्षणं शास्त्रेषु ज्ञातृत्वस्य प्रथमं निरूपणम्, शाखाचन्द्रन्यायेन अन्नमयाद्यनुक्रमवत् बुद्ध्यारोहणसौकर्याय क्रियते ॥ ननु प्रार्थनापदेन भोक्तृत्वप्रतिपादनात् भोक्तृत्वमेव प्रधानमित्युक्तं इति चेत् न।

नमश्शब्देन ज्ञातृत्वस्य स्वार्थतानिषेधात्, उत्तरचतुर्थ्यां भोग्यत्वेनोपस्थिते आत्मनि पश्चात्प्रतिपन्नं भोक्तृत्वं भोग्यत्वार्थमेव भवेत्; * अहमन्नमहमन्नमहमन्नादः * इति वत्। किं च शेषत्वमुपक्रमेऽवगतमिति तत्प्राबल्यं चास्ति; उपक्रमानुगुण्येन उपसंहारस्य नेयत्वात् उपसंहारे प्रतीतं भोक्तृत्वं शेषत्वानुगुणमेव नेयम्; तदेवं मकारोदितकर्तृत्वस्य प्रार्थनापदोदितभोक्तृत्वस्य च नमःपदेन स्वार्थतानिषेधात् तदुभयानर्हत्वलक्षणं पारतन्त्र्यं शेषत्वं च प्रतीतम्, इति कर्तृत्वभोक्तृत्वयोः स्वार्थत्वतदभावप्रतिपादकशास्त्रयोः विषयव्यवस्थासंभवात् निर्हेतुकत्वसिद्धिः ॥

अतः अस्मिन्मते मकारोदितं ज्ञातृत्वं भगवच्छेषत्वसिद्ध्यर्थमिति तदवस्थारूप कर्तृत्वभोक्तृत्वमपि इहामुत्र परगतप्रीतिलक्षणातिशयसिद्ध्यर्थम्। अन्येषां तु भगवच्छेषत्वं मकारोदितस्वस्वातन्त्र्यशेषमिति तस्य स्वातन्त्र्यसिद्ध्यर्थतया तदवस्थारूपकर्तृत्वभोक्तृत्वयोः भगवच्छेषत्वम्, इहामुत्र च निर्वाहकत्वेन उपकुरुते;

इति भगवच्छेषत्वस्य तदतिशयाधायकत्वात् * दास्यमैश्वर्य[वादेन]भावेन * ज्ञातीनां च करोम्यहम् * इति न्यायेन शेषशेषिभावव्यत्यास एव सूक्ष्मेक्षिकया सिद्ध्येत् ॥ 74 ननु, स्वार्थकर्तृत्वं भोक्तृत्वं च निरुपाधिकम्; * यं [यं] कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति[ते] * जक्षन् क्रीडन् रममाणः * सोऽश्नुते सर्वान् कामान् * इत्यादिभिः; मोक्षदशायामपि तयोरुपलब्धेः; तत्क्रतुन्यायाच्च, अनुभवकैङ्कर्यादीनां स्वानन्दकत्वं सिद्धम्; परार्थकर्तृत्वादिकं तु औपाधिकम्; मोक्षदशायां तत्सत्त्वे प्रमाणाभावात्; संसारदशायां क्वचित् केवलपरार्थ[प्र]वृत्तिः आनृशंस्याद्युपाधिका दृष्टा; अतः, केवलपरार्थत्वमौपाधिकम्? इत्यत्राह— (इदुतान वन्देरियन्त्र) परार्थकर्तृत्वादेः मोक्षदशायां प्रमाणाभावोऽसिद्धः; * अहमन्नमहमन्नमहमन्नम् * इति, आविर्भूतानुभवकैङ्कर्ययुक्तस्य अन्नत्वाभिधानात्। अन्नत्वदशायां आत्मीययोस्तयोः केवलपरार्थताप्रतीतेः। * निवासशय्यासनपादुक * इत्यादौ अचेतनत्वेनावस्थानमप्युच्यते। अचेतनत्वं च स्वस्य भोक्तृत्वविरहः। [अद्मि] इति पश्चात् श्रुतं भोक्तृत्वमपि, [* अदन्तम् *] इति विशेषणात्, तत्प्रीतिविषयकमित्यवगम्यते, प्रीतिभोक्तृत्वं च स्वस्य भोग्यत्वातिशयार्थम्; * नम इत्येव वादिनः * इति वचनात् ॥

75. ननु, कर्तृत्व कैङ्कर्यानुभवयोः परार्थत्ववत् स्वार्थत्वमपि स्वरूपम्, * यं कामं कामयते * सोऽश्नुते * इति तस्य मोक्षदशायां दर्शनात् इत्यत्राह—— (स्वातन्त्र्यमुम् अन्यशेषत्वमुम् वन्दवै) यथा अन्यशेषत्वमागन्तुकम्, तथा स्वशेषत्वमप्यागन्तुकमित्यागन्तुमित्यर्थः; अचेतनपुष्पादिगतगन्धादिधर्मस्य, परार्थतैव यथा स्वरूपम्, तथा चेतनगतकर्तृत्वभोक्तृत्वयोरपि परार्थत्वमेव स्वरूपम्, स्वार्थत्वमौपाधिकम्; तत्र संसारित्वदशायां अप्राप्तविषययोः कर्तृत्वभोक्तृत्वयोः, अप्राप्तविषयत्वं, स्वार्थत्वं च प्रकृतिसंबन्धोपाधिकम्, तथा प्राप्तविषययोः मोक्षदशाभाविनोरपि स्वार्थत्वं प्रकृतिसंबन्धोपाधिकम्; मोक्षसाधनानुष्ठानदशायां मत्फलसाधनत्वान्मदर्थमिदं कर्म, इति कर्तृत्वभोक्तृत्वयोः स्वार्थता लक्षणाधिकारबोधस्य विद्यमानत्वात्; तस्य च * प्रक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु * इति देहात्माभिमानकार्यत्वाच्च; एवम्, प्रकृतिसंबन्धवशात् साधनानुष्ठानदशायां स्वार्थतायास्संकल्पितत्वात्, सत्यसंकल्पेनेश्वरेणापि तथैव संकल्पितत्वात्, तत्क्रतुन्यायेन मोक्षदशायामपि कर्तृत्वभोक्तृत्वयोः स्वार्थतानुवर्तते; प्रकृतिसंबन्धमूलचेतनस्वार्थतासंकल्पानुगुणभगवन्नित्यसंकल्पस्य यावदात्मभावित्वरूपोपाधिकत्वेन स्थितत्वात्, तदुपाधिकं स्वार्थत्वमपि यावदात्मभाव्यानुवर्तते; अतः संसारदशायमन्यशेषत्ववत्, मोक्षदशायां स्वार्थतालक्षणं स्वातन्त्र्यमप्यौपाधिकमिति भावः ॥

76. ननु, स्वशेषत्वपरशेषत्वयोरुभयोरपि मोक्षदशायां प्रमाणसंभवे उभयोरपि निरुपाधिकत्वं किमर्थं नाङ्गीक्रियते, सर्वोपाधिविनिर्मोक्षस्य मोक्षत्वात्; अन्यथा यत्किंचिदुपाधिसत्त्वे मुक्तिभेदत्वापत्तेः इति चेत्, तत्राह–(शेषत्वविरोधि स्वातन्त्र्यम् तच्छेषत्वविरोधि तदितरशेषत्वम्) भगवच्छेषभूतस्य, यथा

तदितरशेषत्वे भगवच्छेषत्वं न सिद्ध्यति, तथा, स्वशेषत्वेऽनुवर्तमाने, भगवच्छेषत्वेऽपि तच्छेषत्वं न सिद्ध्यति; * परगतातिशयाधानेच्छया उपादेयत्वमेव यस्य स्वरूपं स शेषः * इति लक्षणात् । अतः कर्तृत्वभोक्तृत्वयोः, स्वार्थत्वं केवलपरार्थत्वं च विरुद्धमिति, मोक्षदशायां तदुभयनियताधिकारत्वमेव वक्तव्यम्; न चोपाधिसत्त्वे मुक्तित्वापत्तिः; [अमोक्षत्वप्रसंगः] अचिदनुभवविरहेणतदप्रसंगात् ॥

77. एवं स्वार्थकर्तृत्वभोक्तृत्वयोः औपाधिकत्वे सिद्धे, चेतनस्य बद्धदशायां मोक्षदशायामपि तदुभयप्रयुक्तनामधेयभाक्त्वमौपाधिकम्; शेषत्वस्य निरुपाधिकत्वात् तत्कृतनामधेयमविनाशि; इत्याह (अहंकारमागिर आर्पैतुडैत्ताल् आत्मावुक्कळियादपेर् अडियान् एन्रिरे) बद्धदशायाम् * ब्रह्मविदाप्नोति * न पश्यो मृत्युं पश्यति * इत्यादौ औपाधिकस्वयत्नरूपसाधनानुष्ठानोपाधिना * ब्रह्मवित् * पश्यः, इति नाम्ना व्यवह्रियते; मोक्षदशायां * रसं ह्येवायं लब्ध्वानन्दी भवति * स स्वराट् भवति * ब्रह्मैव भवति, आनन्दि - स्वराट् - ब्रह्मादिनामधेयैः स्वभोक्तृत्वोपाधिकैः व्यवह्रियते; इदं सर्वं औपाधिककर्तृत्वभोक्तृत्वकृतनामधेयम्, मत्फल-साधनत्वात् मदर्थम्, इत्यहंकारविलये नोदयमास्वादयति । तादृशाधिकारबोधस्यानन्यप्रयोजनेऽसत्त्वात्, तस्येहामुत्राविनाशिनामधेयभाक्त्वमेव; इति भावः ।

78. यथा स्वार्थकर्तृत्वभोक्तृत्वकृतानां ब्रह्मवित्, आनन्दीत्यादीनां स्वातन्त्र्यरूपाहंकारहेतुत्वात् अनर्थहेतुत्वम्; तथा, ग्रामकुल - प्रवरादिकृतानामपि, देहात्माभिमानरूपाहंकारहेतुत्वात् अनर्थहेतुत्वमित्याह— (ग्रामकुलादिकळाल् वरुम्, पेर् अनर्थहेतु) [अव, ज्ञानमार्ग 14. गाथा, तद्व्याख्योदाहृतं "देहात्मज्ञान-कार्येत्यादि" परमैकान्तिधर्मवचनं च तुर्यधेये देहात्मज्ञानकार्येरत्र, देहात्मज्ञानं कार्यं यस्येति विग्रहः प्रकृतोपयोगी ॥]

69. कथमस्यानर्थहेतुत्वम्, विहितत्वात्, इति चेत्; यद्यपि वैष्णवानामवैष्णवानां च गोत्रप्रवरानुच्चारणं विहितम्, तथापि एकान्तिपरमैकान्तिनोः न गोत्रादिनामभाक्त्वम्; * एकान्ती व्यपदेष्टव्यः * इति निषिद्धत्वात्, अतो वचनयोर्विषयभेदात् अविरोधः, इति तात्पर्यम् ॥

संग्रहस्तु:—

उपायापायसंत्यागे सिद्धोपायपरिग्रहे । विधिर्नैव तयोस्सिद्धिरवताफलं भवेत् ॥ १ ॥
रामकृष्णादिविषये अर्चायां च शुभाश्रये । सौन्दर्यादिगुणादन्यविरागो यत्नतो भवेत् ॥ २ ॥
ज्ञानशक्त्यादिकल्याणगुणादीनां च दर्शनात् । अन्योपायपरित्यागपूर्वकं वरणं भवेत् ॥ ३ ॥
अतोऽधिकारिबोधस्य तत्कृतयाः कृतेरपि । राहित्याच्चेततो नाव, फली, प्राप्ताऽपि वा भवेत् ॥ ४ ॥
प्राप्ता फली प्रापकश्च भक्तिसस्यकृपीवलः । अवनीयं गुणैर्दिव्यचेष्टितालापनैरपि ॥ ५ ॥
अक्रूरमालाकारादीन् भक्तान् कृत्वा ततः परम् । स्वशक्तिज्ञानसामर्थ्यप्रदर्शनमुखेन च ॥ ६ ॥ [गी-भा-अव]
अन्यानुपायत्वोपायभावज्ञापयतस्स्वयम् । नयति स्वं पदं चामून्, तस्मात्सिद्धत्वहेतुतो ॥ ७ ॥

स्वार्थकर्तृत्वभोक्तृत्वत्यागो मन्त्रे समीरितः । परप्रयोजनप्रीतिविषये ते मते यतः ॥ ८ ॥

तस्माच्च निर्विशेषत्वं आत्मनां न प्रयुज्यते । एवं विभागहेतुश्च शेषत्वस्य प्रधानता ॥ ९ ॥

अहंप्रत्ययवेद्यत्वान्मन्त्रे प्रथममीरणात् । भाष्यकारस्य वचनात् शेषिक्रमनयादपि ॥ १० ॥

शेषत्वमुख्यतासिद्धेः कर्तृताभोक्तृता भवेत् । परातिशयसिद्ध्यर्था ; नो चेत् , ज्ञातृत्वशेषता ॥ ११ ॥

शेषत्वस्य यदीष्येत, स्वशेषो ईश्वरो भवेत् ? । शेषवृत्त्या प्रसन्नेशस्साधने कर्तृतामिह ॥ १२ ॥

अमुत्र फलभोक्तृत्वं, वहतीति हि सिद्ध्यति ? । मोक्षत्वोपाधिका स्वार्था, कर्तृता भोक्तृता भवेत् ॥ १३ ॥

उपाधिः परमेशस्य नित्यसंकल्प एव च । तत्संकल्पनिदानं च, साधनारंभकालिकः ॥ १४ ॥

चेतनस्यैवसंकल्पस्सोऽधिकारप्रबोधजः । अधिकारप्रबोधश्च, देहात्मभ्रममूलकः ॥ १५ ॥

तस्मात्सहेतुकी मुक्तिरविद्यालेशसंयुता । निर्हेतुकीतु, निश्शेषनिवृत्त्यात्मिका भवेत् ॥ १६ ॥

॥ इति प्रथमस्य परिच्छेदस्य चतुर्थं प्रकरणम् ॥

(कुत्रत्तूर् ऐयन निरुवडिकळे शरणम्)

**अष्टप्रकरणात्मके प्रथमपरिच्छेदे पुरुषकारोपायाधिकारि**
**विद्यास्वरूपनिरूपणरूपमाद्यं प्रकरणचतुष्कं**
**समाप्तम् ॥**

---

## ॥ प्रथमपरिच्छेदे पञ्चमप्रकरणप्रारम्भः ॥

## अथ अष्टप्रकरणात्मके प्रथमपरिच्छेदे शरणागतिविद्यायाः सहेतुकत्वपरिहारपरं उत्तरं प्रकरणचतुष्कं आरभ्यते

80. अयं परिच्छेदः शरभाध्यायवत् प्रकरणाष्टकात्मकः; तत्र प्रथमे प्रकरणे, पुरुषकारस्वरूपं निरूपितम्; द्वितीये, उपायस्वरूपम्; तृतीये शरणागतिविद्यापेक्षितदेशकालनियमानपेक्षतालक्षणाङ्गकथनम्, अधिकारिस्वरूपनिरूपणं च कृतम्; चतुर्थे, विद्यास्वरूपं निरूपितम्; इतःपरं सदादिविद्यावत्, न्यास-विद्यावच्च, शरणागतिविद्याया अपि यज्ञादिसापेक्षत्वं शमादिसापेक्षत्वं च, मुखभेदेनाशङ्क्य, तद्द्वारासहेतु-कत्वमाक्षिप्य परिह्रियते। अत्र प्रथमाधिकारे विद्याङ्गत्वाभावेऽपि उपायाधिकारत्वेन यज्ञाद्यपेक्षास्तीति कर्तृत्वा-पत्तिः, इति शङ्कायां, पूर्वप्रकरणचरमाधिकारसङ्गतिः ॥

संशयस्तु, भगवतो निरपेक्षोपायत्वं संभवति ? न ? इति; तदर्थं यज्ञाद्युपायाधिकारः अस्ति ? न ? इति; तदर्थं * सखल्वेवं वर्तयन् यावदायुषम् * इति मुमुक्षुमात्रस्य यज्ञादिसापेक्षत्वमवगमयति ? न इति; तदर्थम्, शक्ति - लज्जा - यत्न - त्याग; सिद्धोपायाधिकारः इत्यत्र मानमस्ति ? उत न ? इति; यदा शक्त्यादि-

त्यागे मानं नास्ति, तदा तस्य * स खलु * इत्यादि श्रुतिसंकोचकत्वाभावेन, तस्यास्सर्वविपर्ययत्वात्. उपायाधिकारत्वेन तदनुष्ठानापेक्षया चेतनयत्नसापेक्षत्वेननिरपेक्षोपायत्वहानिः; यदा, शक्त्यादित्यागस्य उपायाधिकारत्वे प्रमाणसंभवः तदा * सखलु * इत्यादि श्रुतेः शरणागतिविद्यानिष्ठव्यतिरिक्तविषयतया न तस्य यज्ञाद्यपेक्षागमकत्वमिति यत्नाभावान्नसिद्धोपायनैरपेक्ष्यहानिः; इति फलति। पूर्वपक्षस्तु शरणागतेः सर्वधर्मत्यागाङ्गतया यज्ञाद्यङ्गत्वाभावेपि, सिद्धोपायस्य यावज्जीवाधिकारसापेक्षत्वेन तदपेक्षा; शरणवरणस्य सकृत्त्वेऽपि उपायाधिकारस्य आप्रयाणादनुवर्तमानत्वस्य सिद्धान्तितत्वात्; ततश्च यज्ञादिवर्णाश्रमधर्मो यावज्जीवमनुष्ठेयः; तत्र सदादिविद्यानिष्ठैः विद्यासिद्ध्यर्थं यज्ञादि अनुष्ठीयते; न्यासविद्यानिष्ठैः स एव [यज्ञादिरूपवर्णाश्रमधर्मः] उपर्युपरि अस्य परां प्रीतिमुपावहन् वृत्त्याख्यः फलतां यातीति, षडङ्गस्यैव वृत्तिरूपेण परिणतस्योत्तराङ्गतया [त्वात्] यज्ञादि उत्तराङ्गतयाऽनुष्ठीयते; शरणागतिविद्यानिष्ठैस्तु सिद्धोपायाधिकारतयाऽनुष्ठीयते। अतः सर्वत्र प्रयत्नस्समानः; अभिसन्धिमात्रमेतेषां भेदः; प्रपन्ने तु, तेषां यावच्छक्त्यनुष्ठानम्; अन्यत्र पूर्णानुष्ठानं इति नाधिकारसंकरः। नच न्यासविद्याया अङ्गभूतानुकूल्यसंकल्पादेः आप्रयाणमनुष्ठेयस्य साध्योपायाधिकारत्ववत् शरणागतावप्यङ्गभूतलज्जापुरस्सरधर्मत्यागस्यापि आप्रयाणमनुवर्तमानस्य सिद्धोपायाधिकारत्वमितिवाच्यम्; तस्य तथात्वे प्रमाणाभावात्। ततश्च यज्ञादेरेव यावज्जीवम् सिद्धोपायधिकारत्वेन स्वयत्नसंभवात् नैरपेक्ष्यहानिः, इत्यत्राह—(उपायत्तुवकु इत्यादि) यावज्जीवोपायाधिकारार्थं न यज्ञाद्यनुष्ठेयम्; 'परि' शब्दार्थसचिवसर्वधर्मत्यागस्यैव पूर्वाङ्गत्वेनानुष्ठितस्य आप्रयणादनुवर्तनात्। अन्यथा, सिद्धोपायनैरपेक्ष्यभङ्गप्रसंगात्; संभवस्थले, शक्तित्यागोपि 'परि' शब्दार्थः; तत्र प्रमाणम्, साधूनामाचारः; [* आचारश्चैव साधूनां *] वस्त्रापकर्षणे द्रौपद्या मानरक्षणवस्त्रालम्बनरूपस्वयत्नत्यागो लज्जात्यागकृतः। तद्वत् लोकापवादभीत्यादिनापि न यज्ञादि अनुष्ठेयमित्यर्थः ॥

अयं भावः—परित्यज्येत्यत्र परि इत्युपसर्गगोचरतया शक्तिलज्जायत्नानां त्यागो विवक्षित इति सीतादीनां शक्त्यादि त्यागादवगम्यते। आचारदर्शनादिति आचारस्यापि संदिग्धार्थे निश्चायकत्वात्। एवं च सर्वधर्माणां शक्त्यादि त्यागस्य सिद्धोपायाधिकारत्वे विशेषप्रमाणेन निश्चिते सति सामान्यविशेषन्यायेन सखल्वेवमित्यादि सामान्यप्रमाणानां तद्व्यतिरिक्तविषयत्वेन संकोचः क्रियत इति।

संग्रहस्तु:—

सिद्धोपायाधिकारार्थं सखल्वेवमितिश्रुतेः। यावज्जीवमनुष्ठेयं यज्ञादिति वचो न तत् ॥
शक्तिलज्जाप्रयत्नानां त्यागोपायाधिकारता। सीताप्रभृतिशिष्टानां आचारादवधारिता ॥

इति सिद्धोपायशोधनाधिकारः ॥ १ ॥

---

॥ अथ उपेयाधिकार निरूपणाधिकारः ॥ २ ॥

मास्तु यज्ञादेः सिद्धोपायाधिकारत्वं । भक्त्यादेरुपायाधिकारत्वान् न निरपेक्षत्वं संभवतीति शङ्कया संगतिः ।

संशयस्तु:—भगवतो निरपेक्षोपायत्वं संभवति नेति तदर्थं भक्त्यादेः उपेयाधिकारत्वं अस्ति नेति ।

तदर्थं योगाद्यभावेऽपि भक्त्युत्पत्तिस्संभवति ? न? इति यदा न संभवति, तदा ध्यानादिविधेः भक्तिमात्रे ध्यानादेः अङ्गत्वबोधकतया उपायाधिकारसिद्ध्यर्थं योगादेरनुष्ठेयतया स्वयत्नसंभवात्, न निरपेक्षत्वसिद्धिः । यदा योगादिकं विनापि परभक्त्याद्युत्पत्तिसंभवः तदा योगविद्यादेः स्वयत्नपरमात्वविषयतथा शरणागतिनिष्ठानां योगाद्यभावे परभक्त्यादिसंभवे स्वयत्नविरहात् निरपेक्षत्वसिद्धिरिति [फलति] ।

पूर्वपक्षस्तु:–उपायाधिकारस्यान्यथासिद्धत्वेऽपि उपेयाधिकारो यत्नसापेक्षः, उपेयाधिकाररूपा प्राप्यरुचिस्तावत्, परभक्त्यादिरूपाऽवश्यवाच्या; गद्ये * परभक्तियुक्तं मां कुरुष्व, इत्यादिना भाष्यकारैः प्रार्थितत्वात् सा च सहकार्यन्तरयोगाभ्यासं विना न संभवति । न च शक्तानां परभक्त्याद्यपेक्षा, नतु सर्वेषां प्रपन्नानां तदपेक्षा इति वाच्यम् । भक्तिपारवश्यज्ञानाधिक्यप्रपन्नयोः [विषये] भगवतः चेतनयत्नसापेक्षत्वे निरपेक्षत्वस्य व्यभिचारात् । अज्ञानप्रपन्नेषु परभक्त्यादिशून्येष्वपि न भगवतः सिद्धोपायत्वम्; आचार्याभिमानस्यैव तेषूत्तारकत्वात् । अतो भगवतो योगाभ्यासादियत्नसापेक्षत्वात् न निरपेक्षोपायत्वसिद्धिः ॥ इत्यत्राह--(उपेयत्तुक्कु) इत्यादि । परभक्ति परज्ञान परमभक्तयः उपेयाधिकाराः । तेच सिद्धोपायसाध्याः । न स्वयत्नसाध्या इत्यर्थः । अयमाशयः * दर्शनं परभक्तिस्स्यात् परज्ञानं तु संगमः पुनर्विश्लेषभीरुत्वं परमाभक्तिरुच्यते * इत्यनेन परभक्ति परज्ञान परमभक्तीनां ज्ञानदर्शनप्राप्तिरूपत्वं उच्यते । प्रीतिरूपया स्मृत्या यथा विना क्षणमपि स्थातुं न शक्यते सा पराभक्तिः । इयं परभक्तिः यदा परानन्वयिभिरित्यादिनोच्यते । प्रत्यक्षसमानाकारासैवस्मृतिः परज्ञानम् । इदं यस्त्वयासहेत्यादिनोच्यते । साक्षात्काररूपयायथास्मृत्याविनास्वरूपं नश्यति सा परमभक्तिः । इयं नच सीतेत्यादिनोच्यते ।

अमी परभक्त्यादयः अव प्रेममुम् नन्नैप्पेणामैयुम् तरियामैयुमित्यनेनोच्यते । उपेयाधिकाररूपा परभक्तिपर्यन्ता साध्यभक्तिः न योगाभ्यसजन्या तथात्वे साध्यभक्तित्वस्यैवासिद्धिप्रसंगात् ।

उपायभक्तिः प्रारब्धथतिरिक्ताघनाशिनी । साध्यभक्तिस्तु साहन्त्री प्रारब्धस्यापि भूयसी । इति योगाभ्यासादिजन्यासाधनभक्तिः । केवलसिद्धोपायजन्या साध्यभक्तिः; इति श्रूयते । नच प्रमाणस्य योग्यानुपलब्ध्याबाधशङ्कनीयः लक्ष्मणे, पुनर्विश्लेषभीरुत्वलक्षणपरमभक्ते रामसंश्लेषमात्रजन्यत्वदर्शनात् । नच तस्य सूरित्वान् स्वतस्सिद्धा भक्तिः इति वाच्यम् । * बाल्यात्प्रभृतिसुस्निग्धः * इति तस्यावतारप्रयुक्तत्वदर्शनात् । अस्तु वा तद्भक्तेः सहजत्वम्; तथापि जटायुप्रभृतिषु विश्लेषभीरुत्वलक्षणपरमभक्तिर्हि

दृष्टा ? नच सा तेषु योगसाध्या: तिर्यग्योनित्वेन योगाद्यनर्हत्वात्; तेषु तत्संभवस्य प्रत्यक्षादिप्रमाण-विरुद्धत्वाच्च ॥

86. ननु, जटायु: प्रभृतय: साधनभक्तिनिष्ठा: ; विद्यानिष्ठा: तेषां उपायो देहत्याग: ; तथा च स्मर्यते * देवकार्यपरोभूत्वा स्वां तनुं य: परित्यजेत् । स याति विष्णुसायुज्यं अपिपातककृन्नर: * अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना स यात्यग्निप्रकाशेन विमानेन ममालयम् * इत्यादि ; अन्यथा, उपायत्वेन स्मृते देहत्यागे प्रपन्नानां प्रवृत्ति: विरुद्ध्यते ; * उपायापायसंयोगे * इति स्मृते: ; इत्यत्राह—(इवनुक्कु) इत्यादि । उपायेषु उपायत्वज्ञानजन्या प्रवृत्तिर्निषिध्यते न रागप्राप्ता अपीत्यर्थ: । अयमाशय: नित्यनैमित्तिकव्यतिरिक्तेषु देहत्यागाद्युपायेषु प्रवृत्ति: द्वेधा । विधिवाक्यात् रागाच्च । तत्र विधित: प्रवृत्ति: उपायत्वज्ञानात् । प्रपन्नानां सिद्धोपायनिष्ठत्वेन न उपायत्वज्ञानात्तत्र प्रवृत्तिरिति रागादेव प्रवृत्तिर्वक्तव्या । ततश्च उपाय-प्रवृत्तिश्चेत् उपायत्वज्ञानजन्या, इति न ह्यस्ति नियम:, रागादपि प्रवृत्त्युपपत्तेरिति ।

८८. ननु विश्लेषभीरुत्वपर्यन्तराग एतेषां संभवति, कर्ममृदितकषायस्य, योगेन स्वात्मदर्शनपूर्वक निरतिशयानन्दपरमात्मसाक्षात्कारस्य हि तत्संभव: इत्यत्राह ; (अप्राप्त) इति । विषयप्रवणस्याप्राप्तविषये चक्षुराद्यवयववैलक्षण्याद्धि तत्र प्रावण्यं भवति, नतु तत् प्रत्यगात्मनो ज्ञानानन्दादिवैलक्षण्यज्ञानात् ; तद्वत् ; भगवत्स्वरूपानन्दाद्यज्ञानेपि अर्चाविर्भावादिविग्रहवैलक्षण्यबलेन, परमात्मानुग्रहविशेषाच्च अवतारादौ तादृश-प्रावण्योपपत्ति: इत्यर्थ: ।

89. एवमपि वस्तुत उपायत्वात् उपायकोटावनुप्रवेशस्स्यात् इत्यत्राह (अनुष्ठानमुम्) इति । उपायान्तरत्यागवत् तदनुष्ठानमपि नोपायेऽन्तर्भवति, सिद्धोपायस्य निरपेक्षत्वात् इति भाव: ॥

90. एवम् प्रावण्यातिशयात् उपायान्तरेष्वपि प्रपन्नतया प्रसिद्धेषु प्रवृत्ति: किं दृष्टा ? इत्याशङ्कायामाह (अनन्य) इति । पराङ्कुशादीनां उपायान्तरप्रवृत्ते: उपायत्वबुद्धिकृतत्वेऽपि साद्ध्यभक्तिकारित्वाद्धि नोपायकोटावन्वय: ? अत्र पुन: उपायत्वबुद्धिविरहेण केवलप्रावण्यकृतस्योपायकोटिनिवेशाभाव:, किंपुनर्न्यायसिद्ध इति भाव: ॥

91. ननु:—पराङ्कुशादीनां उपायान्तरप्रवृत्ति: तर्हि अज्ञानकार्या स्यात् ; वस्तुत: अनुपायेषु उपा-यत्वबुद्धेरज्ञानत्वात् इत्यत्राह (ज्ञान) इति । कर्ममूलज्ञानात् भक्तिपारवश्यकृताज्ञानमुत्तमम् इति भाव: ॥

92. एवमपि * निष्ठया हीयते * इति वचनात् उपायप्रतिबन्धकं स्यात् इत्यत्राह (उपाय) इति ।

93. भक्तिपारवश्यकृतत्वविस्मयविलम्बासहत्वाभ्यां सिद्धोपायप्रवृत्तितुल्यत्वादपि नोपाय[प्र][वृत्ति] प्रतिबन्धकत्वमित्याह (साध्य) इति । एवं पराङ्कुशादि प्रवृत्तिवत्, जटायु: प्रभृतीनाम् देहत्यागप्रवृत्ते-

त्त्नुपायतया केवल विश्लेषभीरुत्वकृतत्वात्, विश्लेषभीरुत्वस्य योगसंशीलनाद्यभावेपि विषयप्रवणन्यायेन भगवद्विग्रहे संभवेन नोपा [पे] याधिकाररूपप्रावण्यसिध्यर्थं योगभ्यासादियत्नः कार्यः चिन्तयन्त्याश्च स्वत एव [ निर्हेतुक ] परभक्तेर्जातत्वात्; तद्वदेव प्रपन्नेष्वपि अयत्नसिद्धपरमक्त्यादिसंभवात् न स्वयत्नापेक्षा इति न भगदुपायत्वस्य सापेक्षत्वसिद्धिरिति भावः ॥

संग्रहस्तु :–

उपेयस्याधिकारो हि परभक्तयादिलक्षणः । योगमौनादिभिस्साध्यः किं त्वर्चाविग्रहादिकः ॥
[ योगाभ्यासादिसंपाद्यःतस्मासिद्धिः सहेतुका । तन्नयोगादिभिस्साध्यःकिंत्वर्चाविग्रहादिकः ॥ ]
सोमित्र्यादिषु तद्दृष्टेः तेषु योगाद्यदर्शनात् । नरैयूर गातृवत्पूज्यस्तादृग्गम्यरतोऽखिलः ।
गम्याधिकृत, प्रपन्नोऽपि स्वयत्नत्यजनाक्षमः ॥ ९ ॥
गतिधीविरहाद्यत्ने गतिकोटयप्रविष्टता । प्रवेशेऽप्यत्र नो दोषो यत्नः प्रेमार्द्रचेतसम् ॥ २ ॥
अधीजेऽपि च यत्ने स प्रेमकार्य इतीड्यते । तस्मान्नसिद्धोपायस्य प्रवृत्तेः प्रतिबन्धकः ॥ ३ ॥
किं तु तत्सम इत्युक्तियोग्यतारूपभूमवान ॥

इति उपेयाधिकारनिरूपणाधिकारः ॥ २ ॥

---

अथ समाधिनिरूपणाधिकारः ॥ ३ ॥

94. नन्वेवमपि स्वयत्नो दुस्तरः ? * शान्तो दान्तः * इत्यादिभिः विद्यामात्रस्य शमादिसापेक्षत्वदर्शनात्; इति शङ्कया सङ्गतिः संशयस्तु; ईश्वरोपायत्वं, सापेक्षं, नवा ? तदर्थं, शरणागतिविद्यापेक्षितशमादिः * यच्छेतवाङ्मनसी * इत्याद्युक्तनियमप्रकारसापेक्षः, उत तन्निरपेक्षः ? इति; यदा सापेक्षः तदा स्वप्रयत्नावश्यम्भावः यदा निरपेक्षः तदा स्वप्रयत्नाभावः । इति पूर्वोत्तरपक्षयोः फलफलिभावः ।

पूर्वपक्षस्तु; उक्तप्रकारेण शरणागतिविद्यायाः [ यज्ञ मौनाद्यनपेक्षत्वेपि ] शमाद्यपेक्षा तावत आवश्यकी * नाविरतो दुश्चरितात् * इत्यादिश्रुतेः; शमाधिः, * यच्छेद्वाङ्मनसी प्राज्ञः * अभ्यासेन तु कौन्तेय! वैराग्येण च गृह्यते * इत्यादि श्रुतिस्मृतिभ्यां यत्नसाध्यत्वागतः; अतः कथं भगवतो निरपेक्षत्वमित्यवाह (इवनुक्कु) इत्यादि ।

95. शरणागतिसहकारभूतश्शमादिः नेन्द्रियनियमनादिरूपप्रयत्नजन्यः, किंतु [परमात्मनि योरक्तो विरक्तोऽपरमात्मनीति परमात्मविषयभक्तिजन्यः] पूर्वोक्तभगवत्साक्षात्कारजन्यः; [शमाधिना भक्तिः भक्त्या समाधिरिति] न चान्योन्याश्रयः भगवत्साक्षात्कारजन्यत्वस्य तत्त्वदर्शिवचनतत्त्वोपदेशाभ्यामवगतेः । ततश्च उक्तवचनबलात् इन्द्रियनियमनप्रकारविधायकशास्त्रं न शरणागतिनिष्ठाविषयम् । न च भगवत्साक्षात्काराभावात्

शास्त्रोक्तेन्द्रियनियमनप्रकारस्य स्वयत्नरूपत्वाच्च, इन्द्रियजयाभावात् विद्यासिद्ध्यप्रसङ्गः इति वाच्यम्; तत्त्र प्रासङ्गिकाधिकारे परिहारस्य वक्ष्यमाणत्वात् । [तस्माद्भगवतो निरपेक्षत्वम्] ।

संग्रहस्तु :—

यच्चोदितिशमादीनां अङ्गत्वं श्रुतिचोदितम् । शमादियत्नसाध्यत्वादिति चेत्तन्नसिद्ध्यति ॥
विद्याभावे शमादीनां अङ्गत्वं श्रुतिचोदितम् । तथापि यत्नापेक्षात्र विद्यते नहि लोकवत् ॥
परमात्मनि या भक्तिः तस्याहेतुत्वकीर्तनात् ।

इति शमाधिनिरूपणाधिकारः ॥३॥

---

अथ पाण्डित्यनिरूपणाधिकारः ॥४॥

96. नन्वेवमपि स्वप्रयत्नोदुस्त्यजः । विद्यामात्रस्य पाण्डित्यसापेक्षत्वादिति शङ्कया संगतिः संशयस्तु, भगवदुपायत्वं चेतन[यत्न]सापेक्षं वा नवा ? इति ; तदर्थं पाण्डित्यं, आचार्यानुवर्तनसहं वा नवा ? इति; यदा सापेक्षं तदा प्रयत्नावश्यकता; यदा निरपेक्षं तदा प्रयत्नाभावः; इति ।

पूर्वपक्षस्तु, * तस्मात् पाण्डित्यं निर्विद्य बाल्ये न तिष्ठासेत् * इति पाण्डित्यबाल्ये विहिते; तत्र बाल्यस्य, [स्वमाहात्म्य] अनाविष्काररूपतया प्रवृत्तिरूपत्वरूपं नास्ति ; पाण्डित्यं तु प्रतिष्ठितब्रह्मविद्याकत्वम्: श्रुतब्रह्मविद्यायाः प्रतिष्ठितत्वं च, सर्वस्वदानेन वा चिरकालगुरुसेवया वा भवति ; * आजहारेमाः शूद्र ! अनेनैव मुखेनालापयिष्यथाः * इत्यपशूद्राधिकारे तथा निर्णीतत्वात् ।

* यस्य देवे परा भक्तिः * इत्यादिष्वप्ययमेवार्थ उच्यते ; भक्तेरस्तुनियतत्व, नमस्काररूपत्वात् । अत एव * समित्पाणिः * इति गुरुशुश्रूषा [उपलक्ष्यते] तस्मात्, शरणागतिविद्याया अपि पाण्डित्यापेक्षत्वात्, पाण्डित्यस्य गुरुशुश्रूषापेक्षत्वात्, स्वयत्न आवश्यकइत्यवाह (आत्मगुणङ्कलिल्) इति [अत्राचार्योपसदनमात्रं] शमदमादिशब्देन, तत्पूर्वकाचार्यसमाश्रयणमुच्यते, न ह्यत्र विद्यार्थं आचार्यवरणमात्रं क्रियते; किंतु उज्जीवनार्थं आत्मीयभरसमर्पणरूपा शरणागतिरेव क्रियते; शरणागतिश्च न स्वयत्नरूपा; इति पूर्वमेवोक्तम्, अतःकृपामात्रप्रसन्नाचार्यकटाक्षादेव, पाण्डित्यलाभः; श्रीमधुरकविदिव्यसूक्तेः ॥ [कण्णिनुण्—७]

सर्वस्वदान, [गुरु] चिरशुश्रूषावचः, विद्यान्तरनिष्ठविषयम् * देहि मे ददामि ते * इति श्रवणलब्ध्यनन्तरम् तस्याचार्यानुवर्तनविरहात् । अत एव प्रपन्नस्य साध्यभक्तावाचार्यभक्तिरप्यनुप्रविष्टा; गुरुभक्तेरामोक्षभावितया, यावज्जीवमाचार्यानुवृत्तिरप्यविकला ; अतएव बृहत्सूरिवचनमपि [पेरि, आ. ४. ४. २, ८,= स्तोत्ररत्ने, श्लो. २] उपपन्नम् ।

परिचरणस्य [ब्रह्म] विद्याप्रतिष्ठार्थत्वा [भावात्] मोक्षार्थत्वाभावाच्च न स्वयत्नरूपता ।

संग्रहस्तु :—

उपासकानामाचार्यवरणंत्वृत्विजामिव । नच पाण्डित्यसिद्धयर्थ; तत्सिद्धौ नानुवर्तनम् ॥
तद्विज्ञानार्थमित्युक्तं श्रुतौ मोक्षार्थता च न । इति चेन्नात्मविद्यायाः प्रपत्तिर्नापि मोक्षदा ॥
अतस्तदनुवृत्तिश्च आप्रयाणानुवर्तिनी । कृपामात्रप्रसन्नेन पाण्डित्यं लभ्यते यतः ॥
अतस्तदर्थयत्नोऽत्र न कर्तव्य इति स्थितः ।

इति पाण्डित्यनिरूपणाधिकारः ॥४॥

---

अथ अधिकारिनिरूपणाधिकारः ॥५॥

99. शमादिप्रसङ्गादर्थान्तरमपि शिक्षयति–(इदुतान् इत्यादि) शरणागतिविद्यायां, सद्विद्यादाविव ऊर्ध्वरेतसामिव अनूर्ध्वरेतसां च अधिकारोऽस्ति? उत, ऊर्ध्वरेतसामेव? इति प्रथमविचारः; तदर्थम् * सर्वकामांश्च साक्षरान् * इत्यत्र सर्वशब्दः प्रारब्धभोगस्यापि सङ्ग्राहकः? उत, देहान्तरलोकान्तरभाविभोगपरः? तदर्थम्, * आर्तो वा यदि वा दृप्तः * इत्यादौ दृप्तशब्दः देहान्तरलोकान्तरभाविभोगविरक्तपरः, उत, भोगमात्रविरक्तपरः?; अजगरवृत्तिश्च सर्वविषया, उत, शरणागतेतरविषया?; यदा, दृप्तशब्दः देहान्तरलोकान्तरभाविभोगमात्रविरक्तपरः, अजगरवृत्तिश्च सर्वविषयाः; तदा, सर्वशब्दस्य [देहान्तरीय] लोकान्तरीयसमस्तभोगमात्रपरतया, अविरक्तस्याप्यधिकारस्संभवति; यदा दृप्तशब्दः, ऐहिकभोगेऽपि विरक्तपरः, अजगरवृत्तिश्च शरणागतेतरविषया, तदा * सर्वकाम शब्दस्य, ऐहिकामुष्मिक भोगमात्र [कृत्स्नभोग] परतया, ऊर्ध्वरेतसां विरक्तानामेव शरणागतावधिकार इति सिद्ध्यति ।

पूर्वपक्षस्तु विहितविषयमात्र [कृत्स्नविषय] निवृत्तस्यैव प्रपत्तौ अधिकार इत्यनुपपन्नम्, तदा * यदहरेव विरजेत् तदहरेव प्रव्रजेत् * इति विधिबलात् विरक्तानां चतुर्थाश्रमप्राप्त्यवश्यम्भावात् प्रव्राजामेव शरणागताधिकारः इति कुदृष्टिमौहार्देनाः लोके शास्त्रे च गृहस्थेष्वपि शरणागतिविद्यादर्शनेन बाधश्च; इति ।

किंच * आर्तो वा यदि वा दृप्तः * इति दृप्तस्यापि शरणागतावधिकारः श्रूयते; दृप्तत्वं च प्रारब्धशरीरतदनुबन्धिभोगेषु वैराग्याभावः; यथा, सदादिब्रह्मविद्यायां प्रारब्धेतरभोगविरागोऽधिकारः, न तथा प्रपत्तौ; परं तु शरीरान्तरानुभाव्यप्रारब्धखण्डेऽपि विरागः इत्येव वैषम्यम्; अन्यथा, देहयात्राया अप्यसिद्धिप्रसंगः; मुक्तशिष्टपुण्योपनतभोगपरित्यागे, यज्ञानुष्ठानलोपप्रसङ्गश्च; ततश्च, * तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः * इति प्रत्यवायापत्तिः; प्रारब्धोपनतभोगपरित्यागे अभुक्तत्वेन प्रारब्धकर्मणां प्राप्तिप्रतिबन्धकता च स्यात्; * नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि * इति स्मृतेः; अत एव * अयत्नादागतस्सेव्या गृहस्थैर्विषयास्सदा न सन्निपतितं धर्म्यं उपभोगं यदृच्छया प्रत्याचक्षीत नचाप्येनमनुरुन्धेत्सुदुर्लभम् * इत्यादि च

स्मर्यते; ततश्च प्रारब्धकर्मफलत्वेनावगतान विषयाननिवार्य प्रारब्धभोगक्षयो भवति इति मत्वा तदनुभवनमेव युक्तम्; तदुक्तं वेदान्ताचार्यैः रहस्यत्रयसारे 'शास्त्राविरुद्धविषयान् स्वस्मिनव्यापृतेऽपि भगवत्संकल्पादेव आगतान् दृष्ट्वा प्रारब्धकर्मफलभूतं ऋणमोचनं भवति इति मत्वा, तदनिवार्य अनुभवितुं प्राप्तिः' इति। तस्मात् यदृच्छयाऽऽगतं सर्वमनुभोक्तव्यमेव, परं तु तद्विषये यत्नो न कार्यः; तल्लाभे अनिर्मतोषश्च न कार्यः। तदुक्तम् * उत्पत्तिस्थितिनाशानां स्थितिचिन्ता कुतस्तव यथोत्पत्तिर्यथा नाशस्थितिस्तद्वद्भविष्यति॥ कर्मी कर्मानुसृत्यान्यो नाप्राप्यमधिगच्छति। नाऽऽहारं चिन्तयेत्प्राज्ञो धर्ममेवानुचिन्तयेत॥ आहारोऽपि मनुष्याणां जन्मना सह जायते * इत्यादिना; तस्मात्, यदृच्छयागताः स्रगादिविषया अनुभाव्याः; अत एव * त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः उच्छिष्टभोजिनो दासास्तव मायां जयेमहि * इत्युच्यते। अतः, विहितयोषित्पिण्डस्य विहिताप्रतिषिद्धस्रक्चन्दनादेश्च त्यागः सर्वथाऽनुपपन्न। यदि प्राकृत भोगः, सर्वात्मना त्याज्यः, तर्हि अनुयागे प्रसादस्वीकारः यज्ञादिषु पुरोडाशस्वीकारश्च अशक्यः इति आज्ञाकैङ्कर्यमेव लुप्यते।

यत्तु * पितरं मातरं दारान् * इत्यादिवचनम्, तत् आर्तप्रपन्नविषयम्; दृप्तप्रपन्नविषयं चेत् * सर्वकामान् * इत्येतत् आमुष्मिकसर्वकामपरम्; * क्षेत्राणि मित्राणि * इत्यादिकमपि, [आर्तविषयत्वात्] प्राप्तिदशाभाविवैराग्यपरम्; आर्तप्रपत्तावेतेषां सन्निधिस्तु विधीयते। दृप्तप्रपत्तावेतानि भविष्यन्त्युत्तरोत्तरम् * इत्युक्तेः; विहितविषयेविरक्तिः, आर्ताधिकारः; काष्ठापन्नविरक्तेः सर्वत्राधिकारत्वे ज्ञानभक्तिकर्मणामपि काष्ठापन्नानामेव अधिकारत्वमिति किमिति नोच्यते? यथा ज्ञानभक्त्यादिमान्द्येऽपि दृप्तानामधिकार इष्यते, तथा वैराग्यमान्द्येऽपि अधिकारो भवत्येव; तस्मात्, अनेकोपपत्तिवचनविरोधात्, स्वव्याघाताच्च, विरक्तानामेव शरणागतावधिकारः इत्यसमञ्जसमिति। [सिद्धान्तः]

अत्रोच्यते; निषिद्ध इव विहितविषयेऽपि विरक्तिमतामेव शरणागतावधिकारः; * पितरं मातरम् * इत्यादिस्मृतेः। नच तस्याः आर्तविषयत्वम्, उभयविषयत्वस्य शब्दस्वारस्यात् प्रथमप्रतीतस्य त्यागे कारणाभावात्; * सर्वकामान् * इत्यत्र सर्वशब्दस्य ऐहिकामुष्मिककामपरत्वस्वारस्याच्च। * पितरम् * इत्यादिकानां ऐहिकत्वं हि प्रथमं प्रतीयते? किंच सर्वधर्मपदसमभिव्याहृतसर्वकामशब्दाच्च दृप्तादृप्तोभयविषयत्वमवगम्यते; सर्वधर्मत्यागस्योभयसाधारणत्वात्। नच विरक्तानामेवाधिकारित्वे, गृहस्थाधिकारत्वाभावप्रसङ्गः; ऐहिकभोगविरक्तिसंभवेपि गार्हस्थ्यधर्मानुष्ठानलोभसंभवेन चतुर्थाश्रमपरिग्रहानुपपत्तेः।। * यदहरेव विरजेत् * इत्यत्र गार्हस्थ्यधर्मानुष्ठानश्रद्धैव विरक्त्यभावः इति पक्षान्तरत्वेन श्रुतप्रकाशिकायामुक्तत्वात्; ततश्च, केषांचिद्विषयविरक्तिसंभवेऽपि तदीयाराधनयज्ञानुष्ठानश्रद्धया गार्हस्थ्य एव अवस्थानोपपत्तेः। नच ऐहिकभोगार्तिरहितानां दृप्तानामपि अधिकारश्रवणं बाधकम्; * यस्तु प्रारब्धदेहेऽपि शोचत्यार्तस्स उच्यते। यस्य देहान्तरकृते शोके, दृप्तस्स उच्यते * इति वर्तमानदेहमात्रस्य शोकविषयत्वाभावावगमात्, भोगविरक्तस्यापि धर्मार्थं शरीरस्थितीच्छा ह्युपपद्यते? उपासकानां अप्रारब्धे विरक्तिर्मुमुक्षा; न्यासिनां दृप्तानां अनभ्यु-

पगतप्रारब्धखण्डे [पि] विरक्तिर्मुमुक्षा; शरणागतानां [आर्तानां] अभ्युपगतप्रारब्धेऽपि विरक्तिर्मुमुक्षा। यच्चोक्तम्; प्रारब्धोपनतभोगत्यागे देहयात्राया अप्यसिद्धिप्रसङ्गः इति; तन्न; प्रव्राजित इव तस्याऽपि सर्वैषणाविनिर्मुक्तत्वेन भैक्षार्हत्वात्। अथवा, यदृच्छोपनतद्रव्याणि स्वीकृत्य, यज्ञादिकं निर्वर्त्यानुयागत्वेन देहधारणापेक्षितांशमात्रस्वीकारे न विरक्तिः भज्यते; प्रव्राजित इव देहधारणमात्रार्थान्नपानव्यतिरिक्तप्राकृतभोगविषयत्वाद्विरक्तेः।

प्रारब्धोपनतशिष्टद्रव्याणां तदीयाराधनार्थतया विनियोगोपपत्तेश्च भैक्षानिष्ठानां यतेरिव स्वनिष्ठामाहात्म्यादिनाऽनुपभुक्तस्यापि प्रारब्धस्य नाशोपपत्तिः; अजगरवृत्तिनिष्ठानां धर्मार्थितया विनियोगमुखेनोपभुक्ततया तन्नाश उपपद्यते; तस्मात् * त्वयोपभुक्त * इत्यादिकं शरणागतिविद्यानिष्ठव्यतिरिक्तविषयम्; देहधारणोपयुक्तमात्रान्नपानस्वीकारे अत्याधिकारात्; तत्रापि भट्टाचार्यप्रभृतीनां तद्गतप्राकृतरसाद्यप्रतीतिर्हि लोकप्रसिद्धा? [नेय्यिन स्थानत्तिल् वेप्पेण्णै परिमारप्पड, रसभेदज्ञानमादल् वेरुप्पादल् इल्लामले अमुदुशेयदारिरे?]

अन्येषां, यज्ञशिष्टाशने; नान्तरीयकतया प्राकृतरसादिप्रतीतावपि, विधेरनुयागबुद्ध्या प्रवृत्तत्वात् कामस्य तत्राप्रवर्तकत्वेन च प्रत्यवायाभावाच्च। नन्वेवं सर्वैषणाविनिर्मुक्तस्य, सर्वात्मना प्रपन्नस्य, [*ऋणानि त्रीण्यपाकृत्य * इत्यादिस्मृत्युपबृंहित * त्रिभिरृणवा जायते * इत्यादि] ऋणश्रुत्यगोचरत्वेपि कैङ्कर्यबुद्ध्या यज्ञाद्यनुष्ठानवत् प्रजोत्पत्तिरनुष्ठेया; अन्यैः धर्मबुद्ध्याऽनुष्ठितस्य प्रपन्नैः कैङ्कर्यबुद्ध्या कर्तव्यत्वात्; सप्रयोजनं तत्तद्देवताप्रीणनं धर्मः; अनन्यप्रयोजनं तत्तद्देवतान्तर्यामिप्रीणनं आज्ञाकैङ्कर्यम्; अतः पितृन्तर्यामिप्रीणनस्योद्देश्यतया, प्रजोत्पत्तिरपि कार्या; अन्यथा विध्युल्लङ्घनापत्तेः। तथाऽभ्युपगमे च ऐश्वर्यार्थि उपासकाभ्यामस्य व्यावृत्तिर्न सिद्ध्येत्; विहितविषयप्रवृत्तेस्समानत्वादिति चेत्, उच्यते; यथा सर्वसंगपरित्यागे स्वाश्रमाविरुद्धानां ब्राह्मणादिवर्णधर्माणां प्राप्तावपि गृहस्थाद्याश्रमधर्माणां यज्ञादीनां विशिष्य निषिद्धतयाऽप्राप्तिः; एवम्, * मनीषी वैदिकाचारं मनसापि न लङ्घयेत् * इति विशेषविधिप्राप्तेषु यज्ञादिष्वेवास्याधिकारः नतु प्रजोत्पादने; * दारान् ....संत्यज्य * इति विशिष्य निषेधात्; अतः स्वाधिकारभूतविरक्तिविरोधात् तदप्राप्तिः; धर्मार्थं स्वीकृतायां भार्यायां दारान् संत्यज्य इत्यस्य प्रजार्थत्वनिषेधतात्पर्यात्; अन्यथा, विधेः निरवकाशतापत्तेः।

तर्हि पूर्वाचार्येषु क्वचित्प्रजोत्पत्तिदर्शनस्य कागतिरिति चेत् गतिशून्यतैव गतिः।

यथा * आहारशुद्धौ सत्वशुद्धिः * इति नियतान्नत्वस्याधिकारत्वेऽपि अनियतान्नत्वस्य आपद्विषयत्वं निश्चीयते; एवं विषयमभुक्त्वा स्थातुं न शक्यते येन विकारेण, तद्दशा आपत्।

यद्यप्यन्येषां विषयसन्निधिपरिहारादिना कामो जेतुं शक्यः, तथापि अत्र धर्मार्थं भार्या सदा सन्निहिता इति कदाचिद्विकारो भवत्येव; तर्हि सा निश्शेषेण त्यज्या, इति न वाच्यम्; तत्सन्निधिकृत-

कादाचित्कप्रत्यवायस्य पुनः प्रपदनादिनाऽपनेतुं शक्यत्वेन * अल्पस्य हेतोः * इत्यादिन्यायेन महाकुल-धर्मलोपस्यायुक्तत्वात्; तस्यापि पुत्रपौत्रादिना अनेकात्मोज्जीवनहेतुत्वेन धर्मत्वाच्च।

पुत्राणां [पत्न्याश्च] भगवद्भागवताराधनोपयोगित्वात्; * तन्नामकरणं चैव * इति गुरुनामकरण-विषयत्वात्; पत्न्याश्च धर्मसाधनता। [अतः विहित विषयविरक्तिरसिद्धा]

102. [ननु] तादृशकाष्ठापन्ना विरक्तिः परमात्मदर्शनहीनानां न भवेत् * परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि * इत्युक्तेः, इत्यत्राह (इदु तान) इत्यादि; नेयं विरक्तिः मृगीणामिव अत्यन्त-काष्ठापन्ना; किंतु यतिवैराग्यतुल्या; सा च दृष्टसामग्रीमात्रसाध्या भवितुमर्हति इति भावः। यथा अनन्यार्हशेषत्वं न्यासयुपासकयोरपूर्णम् * देवतान्तरसंपर्कितः नित्यकर्मविधिं विना * इति नित्यकर्माणि देवतान्तरसंसर्गात्; शरणागतस्य तु तत् पूर्णम् [तस्य नित्यकर्मणां] वर्णाश्रमप्रयुक्तत्वाभावेन साध्योपशमाव-परत्वात्; अनन्यशरणत्वमपि तयोरपूर्णम्; [स्वीकारोपासनयोः] साधनत्वाभ्युपगमात्; तच्चास्मिन् पूर्णम्; सिद्धोपायनिष्ठत्वात्;

तथाच अनन्यभोग्यत्वमपि, तयोरपूर्णम् विहितविषयस्वीकारात्; शरणागतस्य तु पूर्णम्; विहि-तस्यापि परित्यागात्; यदि अनन्यभोग्यत्वं विहितविषयविरक्तिरूपं दृष्टप्रपन्नानपेक्षितं स्यात्, तदा, अन-न्यार्हशेषत्वानन्यशरणत्वयोरपि पूर्णयोः हृप्रोपादेयता न स्यात्। तस्मात् उभयवत् इदमपि सर्वेषामपेक्षितम्; अन्यथा निष्ठाभावेन फलासिद्धिप्रसंगात्।

105–107. ननु भगवत्कृपा, विषयेषु दोषदर्शनं कारयित्वा वैराग्यहेतुः तच्च दोषदर्शनं अभ्यास-रूपं यत्नसाध्यम्, ततश्च स्वयत्नान्वयोजातः इत्यत्राह—(अरुचि) इत्यादि। यद्यपि * तस्य च वशीकरणं तच्छरणागतिरेव * इति उपासकस्य अङ्गप्रपत्तिप्रीतेश्वरप्रसादात् विषयेषु पुनःपुनः दोषानुचिन्तनं भवति। [प्रपत्त्यधिकारिणः] अस्यापि स्वतन्त्रप्रपत्तिजन्यभगवत्प्रसादात्, विषयेषु दोषचिन्ता भवति; तथापि, अस्य [अधिकारिणः वैराग्यस्य] नातिकृच्छ्रसाध्यत्वम्; निर्हेतुककृपाजन्यदोषदर्शनसहकृतात् अनन्यभोग्यत्व-लक्षणस्वरूपाप्राप्तत्वज्ञानात् प्रधानभूतात् [वैराग्यपर्यन्तस्य] इन्द्रियजयस्यायत्नसिद्धत्वोपपत्तेः। यदि दोष-संशीलनं प्रधानं स्यात् * परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् * इति निर्विण्णानां पुनः विहितविषये प्रावण्यं न स्यात्, तस्मात् अप्राप्तज्ञानमेव वैराग्ये प्रधानहेतुः इति भगवत्कृपाजन्यदोषदर्शन-सचिवात् अप्राप्तत्वज्ञानात् इन्द्रियनियमनादिप्रयत्ननिरपेक्षात् ज्ञाज्ञयोर्विरक्तिर्जायते इत्यर्थः।

106. यद्वा ननु साधनपरिग्रहस्य भगवत्तृष्णातदितरवितृष्णा च पूर्वभाविनी; अचिद्भोगे वैतृष्ण्यार्थं पूर्वभागो विचारणीयश्चेतनेन; तदर्थं [चानेन वेदान्तसूत्रे] तृतीये प्रथमोऽवगन्तव्यः, भगवत्तृष्णाजननार्थं तृतीये द्वितीयः, प्रथमद्विकं चावगन्तव्यम्; अतः शास्त्रस्य बहुक्लेशसाध्यत्वात् स्वयत्नःस्यादित्यत्राह—(अदु)

इत्यादि । वेदान्तसूत्रे, पूर्वद्विकेन तत्त्वं प्रतिपाद्य, तृतीयस्य प्रथमद्वितीयपादाभ्यामुपासनारम्भसिद्ध्यर्थं इतरवैतृष्ण्यभगवत्तृष्णाजननार्थं जीवपरयोः सदोषत्वमदोषत्वं चोक्तम्; इदमुभयं तयोरप्रयोजको हेतुः; दोषानुसंधानेऽपि चतुर्मुखादीनां विहितविषयप्रावण्यानिवृत्तेः; पराङ्कुशादीनां दोषानुसंधानदशायां भगवत्प्रावण्यानिवृत्तेश्च; मन्त्रे द्वयप्रतिपाद्यविद्यापरिग्रहाय चरमपदेन, भगवद्व्यतिरिक्तवैतृष्ण्यार्थं अनन्यभोग्यत्वम्, प्रथमपदेन भगवत्तृष्णार्थमनन्यार्हशेषत्वं च उक्तम् । तदुभयमव्यभिचारिहेतुः; विषयप्रवणचतुर्मुखादीनां अनन्यभोग्यत्वज्ञानाभावात्; पराङ्कुशादीना अनन्यार्हशेषत्व [त्वादि] ज्ञानस्य सर्वदा सत्त्वाच्चेति भावः ।

108. [वा–88] (अप्राप्तविषय) इत्यादिना पूर्वमुक्तम् विषयप्रवणस्यैव, अर्चावतारादिविग्रहसौन्दर्यात् तत्स्वरूपसाक्षात्कारयोगाद्यभावेऽपि विश्लेषासहत्वलक्षणा भक्तिर्भवति, इतीममर्थं हेत्वन्तरेणापि प्रसंगात् द्रढयति (भगवद्विषय) इत्यादि । सूरीणां भक्त्युत्पत्तावपि, कल्याणैकतानस्वरूपसाक्षात्कारः न प्रधानहेतुः; अन्यथा, गुणहीनत्वानुसन्धानदशायां भक्त्यभावापत्तेः; अतः तत्रापि भगवतः स्वरूपाप्राप्तत्वज्ञानमेव भक्तिहेतुः; तच्च, अज्ञसर्वज्ञयोरप्यस्तीति तत एव तयोरपि भक्त्युत्पत्त्युपपत्तिः इत्यर्थः ।

111. एवं न्यास्युपासकाभ्यां शरणागतस्य भक्तिवैराग्ययोर्वैलक्षण्यं दर्शितम्; प्रसंगात्, वृत्तावपि वैलक्षण्यमाह–(गुणकृत) इत्यादि । गुणकृतादपि स्वरूपप्रयुक्तदास्यं प्रधानम्; तथात्वं सीताभरद्वाजयोर्दृष्टम्; * अवस्था पूज्यते राम ! शरीरं न कदाचन इदानीमपि संराट् त्वं तदानीमपि तापसः * इति भरद्वाजोक्तेः । [तस्मात्स्वरूप प्रयुक्तम]

113. ननु, मन्त्रे शिक्षितस्वरूपाणां, भक्तिवैराग्ये अविकले इत्युक्तम्; कथं तर्हि सूरीणामुपायान्तरानुष्ठाने प्रवृत्तिः, तत्रैव मध्यमपदे अनन्यशरणत्वस्यापि शिक्षितत्वात् ? इति सिंहावलोकनेन शङ्कते (भगद्विषय) इति [उपायान्तरप्रवृत्ते ज्ञानकार्यत्वेहि दोषः भक्तिकार्यत्वेनावर्जनीयत्वात् न दोषः इति भावः

## [एतत्प्रकरणार्थसंग्रहश्लोकाः]

शरणागतिविद्यायां विरक्तेरधिकारता; । "सर्वधर्मांश्च संत्यज्य सर्वकामान इति स्मृतौ ॥ १ ॥
धर्मत्यागसमत्वं हि विरक्ते रवगम्यते ? । विरक्तानां गृहस्थानां धर्मानुष्ठानवाञ्छया ॥ २ ॥
न सन्न्यासाश्रमः प्राप्तो न रवा दृप्तत्वभञ्जनम् । प्रारब्धभोगमात्रेऽपि शोको नैषां कलेबरे ॥ ३ ॥
यदृच्छोपनतात्यागे, देहयात्रा च कर्मणः । क्षयश्च यतिवत् स्यातां यद्वा, प्रारब्धकारितान् ॥ ४ ॥
भोगानादाय पच्यान्नं यज्ञशिष्टं च यद्भवेत् । देहधारणमात्रस्य समर्थं तद्धि भुज्यते ? ॥ ५ ॥
अन्यच्चातिथिसत्कारप्रभृतौ विनियुज्यते । देहार्थभुक्तेर्वैराग्यं यतेरिव न हन्यते ॥ ६ ॥
तत्रापि प्राकृतरसान् न पश्यन्ति विपश्चितः । विधेस्तत्राप्रवृत्तत्वान्नान्तरीया तु भोग्यता ॥ ७ ॥
अन्येषामपि वैराग्यं न नाशयितुमर्हति । तद्देहधारकादन्ये भोगास्त्याज्याः हितैषिणा ॥ ८ ॥

"त्वयोपभुक्त" त्यादिस्तु न्यासोपासाधिकारिणः । धर्मार्थिना तु भार्यायाः अधिकारविरोधिनी ॥ ९ ॥
प्रजार्थेनाधिकारस्य विरुद्धा त्यज्यते न यैः कश्चित्प्रजार्थगमनमापद्विषयमिष्यते ॥ १० ॥
सर्वान्नत्वं यथा तद्वत प्रायश्चित्तैरपोह्य [ ह्य ] ते । भर्यासाध्यस्य धर्मस्य वैपुल्यात् तदपेक्षता ॥ ११ ॥
अल्पत्वादपुमर्थस्य न माऽत्यन्तं विसृज्यते । प्रमादाद्धि मकृत्वास्य प्रवृत्तिर्बुद्धिपूर्विका ॥ १२ ॥
नित्या परेषां, यत्तस्मात् साम्यं नाशङ्कितुं समम् । विरक्तिरेषां सुलभाऽप्रारब्धधियायुना ॥ १३ ॥
आचारादीश्वरस्यापि प्रमादाद्दोषदर्शनात् । प्राप्तत्वकृतदभावाभ्यां तृष्णान्येषु वितृष्णता ॥ १४ ॥
मन्वादेव भवेत्, तस्मात्, न्यासशास्त्रे परश्रमः ।

[ अष्टप्रकरणात्मके प्रथमपरिच्छेदे ] पञ्चमप्रकरणं

समाप्तम् ॥

कुत्रन्तूर् ऐयन तिरुवडिगले शरणम् ॥

— —

## ॥ अथ षष्ठप्रकरणप्रारम्भः ॥

### ॥ उपायान्तरविरोधस्थापनाधिकारः ॥

115. एवं वैराग्यभक्तिकर्मभिः इतराभ्यां [न्यासयुपासकाभ्यां] व्यावृत्तिः [शरणागतस्य] उक्ता; प्रसंगात्, ज्ञानादपि [तस्य] तदुभयव्यावृत्तिमाह (प्रापकान्तर) इति । प्रापकान्तराणां प्रवृत्तिरूपत्वेनात्यन्त पारतन्त्र्यस्वरूपविरुद्धत्वेन शरणागतेः स्वरूपानुगुणत्वज्ञानेन प्रधानेन तद्व्यावृत्तिः सिद्धेति तात्पर्यम् । एवं पञ्चमे प्रकरणे उपायाधिकारार्थं अनुकूल्यादिरिवास्य यज्ञादिकं नानुष्ठेयम्; उपेयाधिकारभूतपरभक्त्यादि सिद्ध्यर्थमपि मौनयोगादिकं नानुष्ठेयम् । भक्तेरर्चावतारसौन्दर्यलभ्यत्वात्; शमाद्यर्थमपि न यत्नः कार्यः; अर्चावतारविषयसहजप्रावण्यादेव तत्सिद्धेः; पाण्डित्यार्थमपि न यत्नापेक्षा कृपामात्रप्रीतगुरुप्रसादात् तत्सिद्धेः । उपायपरिग्रहोपयोगिभगवत्तृष्णा तदितरवैतृष्ण्यसिद्ध्यर्थं शास्त्रपरिश्रमोऽपि न कार्यः; उपदेशादेव तत्सिद्धेः ।

अतः प्रपत्तेः पूर्वोत्तरदशयोः [ अपि ] न चेतनप्रयत्नापेक्षा; इति स्थापितम् ।

एवं पञ्चप्रकरण्या शरणागतिस्थले भगवदुपायापेक्षितत्वमुक्तम् । इतःपरं त्रिप्रकरण्या उपासनन्यासस्थलयोरपि भगवतो रक्षकत्वं निर्हेतुक[मिति] स्थाप्यते ।

तत्र षष्ठे, भक्तेरसाधारणदोषैरनुपायत्वमुच्यते; सप्तमे, न्यासस्यासाधारणदोषैरनुपायत्वमुच्यते; अष्टमे, उभयसाधारणदोषैरुभयोरनुपायत्वमुच्यते ।

तत्र षष्ठे भक्तेरुपायत्वं आत्मयाथात्म्यज्ञानवन्तं प्रत्युच्यते? उत तद्रहितं प्रति; इति विकल्पमभिप्रेत्य प्रथमे अपायत्वं साधयति; ।

पूर्वाधिकारे ज्ञानिनः प्रति प्रापकान्तराणां स्वरूपविरुद्धत्वमुक्तम् । तत्र तान् प्रति [ तत्फलभूतम् ] तेषा-

मपायत्वं उच्यते इत्यवान्तरसंगतिः । संशयस्तु; भक्तिस्थले भगवतो रक्षकत्वं निर्हेतुकम्? उत, सहेतुकमिति; तदर्थं भक्तिः, आत्मयाथात्म्यज्ञानयुक्तान् प्रति उपायः? उतापायः? इति । तदर्थं तत्त्वदर्शिवचनं भयहेतुत्वादिलिङ्गं, प्रायश्चित्तविधानान्यथानुपपत्तिः अभियुक्तवचनं चान्यथा सिद्धम्; उत, अनुपायत्वे प्रमाणानि इति तदर्थं भक्त्युपायस्यौपाधिकत्वादिदशविधविरोधो न संभवति उत संभवति? इति । यदा न संभवति; तदा तत्त्वदर्शिवचनादीनां भक्तेरुपायत्वे प्रमाणत्वाभावात् भक्तेरुपायतया, तदीश्वररक्षकत्वं सहेतुकम्; यदा दशविधविरोधसंभवः, तदा तत्त्वदर्शिवचनादीनां अपायत्वे प्रमाणत्वात् भक्तेरपायतया तदीश्वरस्य रक्षकत्वं निर्हेतुकमिति सिद्ध्यति ।

पूर्वपक्षस्तु; यथाधिकारं शास्त्रविहितेषु उपासनादिकं स्वरूपविरुद्धमिति केचिद्वदन्ति; एतदपि प्रपत्तिस्तुत्यर्थमनिवाद एव; तथाहि; नित्यात्मस्वरूपस्य नाशकत्वात्, इतरत् स्वरूपविरुद्धम्; इति वक्तुं न शक्यते; प्रपत्त्यनुष्ठानकैङ्कर्यभक्त्यादौ * कर्ता शास्त्रार्थवत्वात् * परात्तु तच्छ्रुतेः * इति भगवदधीनकर्तृत्वसत्त्वात्, आत्मस्वरूपं अत्यन्तनिर्व्यापारमित्युक्ते सत्त्वलक्षणभूतार्थक्रियाकारित्वाभावेन तुच्छत्वप्रसक्तेः; ज्ञानचिकीर्षाप्रयत्नाश्रयत्वरूपकर्तृत्वाभावेनात्मनस्सन्निधिमात्रमेव व्यापारः इत्युक्ते भोक्तृत्वादीनामपि अभाव प्रसंगे अस्य संसारमिथ्यात्वापत्त्या मोक्षोपायनैरपेक्ष्यप्रसंगाच्च । साङ्ख्यादिवत् स्वरूपस्य कर्तृत्वाभावात् उपासनादिकं स्वरूपविरुद्धमिति न शक्यते वक्तुम्; * अचेष्टमानमासीनं श्रीः कं चिदुपसर्पति कर्मी कर्मानुसृत्यान्यो न प्राप्यमधिगच्छति * इत्युक्तिरपि शास्त्रचोदितोपायानां न नैरर्थक्यं वदति; [ पूर्वानुष्ठितकर्मविशेषाणां फलोपधायकत्वमात्रपरत्वात्; किंच; मोक्षप्रतिकूलरागाद्युपाधिप्रयुक्तकाम्यनिषिद्धकर्मणामिव बन्धकत्वाभावात्, मोक्षार्थिनमुद्दिश्यैव विहितत्वाच्चोपासनादीनामनर्थावहत्वरूपविरोधोक्तिः न शास्त्रमूला । ]

तस्मादुपासनादीनां आत्मस्वरूपं प्रति नाशकत्व - असंभावितत्व - अनर्थावहत्वानामभावात् केनापि प्रकारेण स्वरूपविरोधो नास्ति ।

नन्वेवमपि आत्मनो देहेन्द्रियादिविलक्षणत्वात् स्वरूपे वर्णाश्रमादिकं नास्ति इति ज्ञानवतः ब्राह्मणोऽहम्, क्षत्रियोऽहम् इत्याद्यभिमानपूर्वकं कर्तव्यवर्णाश्रमधर्माः, तन्मूलकव्यापारान्तराणि च न कर्तव्यानि इति, वर्णाश्रमादिनिबन्धनकर्मणां स्वरूपविरुद्धत्वे, न कोपि दोषः इति चेत्, इदमप्यनुपपन्नम्; तथाहि । स्वरूपे ब्राह्मण्यादिकं नास्ति इति ज्ञानसंभवेपि कर्मविशेषवशात् ब्राह्मण्यादिविशिष्टशरीरेण संबन्धवत्त्वात्, तच्छरीरसंबन्धप्रयुक्तक्षुत्पिपासादिपरिहारन्यायेन एतच्छरीरपातपर्यन्तं तत्तद्वर्णाश्रमादीनां स्वशक्तेश्चानुरूपं अनिष्टनिवृत्तीष्टप्राप्तिविषयकशास्त्रविहितधर्मा न परित्याज्याः । तस्मात् उक्तधर्माणां देहात्मविवेकवशात् अधर्मत्वमापाद्य एतेषां त्याज्यत्वं वक्तुं न शक्यते देहात्मविवेकवत एव परलोकसाधनभूतधर्मेऽधिकारात् उक्तधर्मानुष्ठानस्य स्वरूपे ब्राह्मण्यादि भ्रमो नाधिकारः; परंतु ब्राह्मण्यादिविशिष्टशरीरसंबन्ध एवाधिकारः । अतः सर्वधर्मानुष्ठानस्यापि उपयुक्तप्रकृत्यात्मविवेकमूलकत्वात् उपासनादेः विरोधं न पश्यामः । उपासनादिकं अरोपमात्रकम्; कर्मोपार्जित-

करणकलेबररूपोपाधिभिरनुष्ठेयतया कर्मयोगादिकं च स्वरूपविरोधि; इति वदतां स्वरूपज्ञानद्वयश्रवणादिकानां मनःप्रभृतिमापेक्षतया तदविशेषत्वात् ॥

ननु एवमपि शेषत्वात् स्वरक्षणे प्राप्तिरहितस्यात्यन्तपरतन्त्रत्वात् स्वरक्षणाशक्तस्य च अस्य, स्वरक्षणार्थत्वेन कर्तव्यतयोपायविधानम्; तस्यानेन साध्यत्वात् "साध्योपायत्वप्रसिद्धिश्च" इत्येतच्च कथमुपपन्नं स्यात्?; तस्मात् भक्तियोगादिकं शेषत्वानुरूपत्वाभावात् स्वरूपस्यानिष्टावहम्; अत्यन्तपारतन्त्र्यविरुद्धत्वात् असंभावितं च इति वक्तुं न शक्यते इति चेत्, इदं सर्वमोक्षप्रसंगादिना[प्रागेव]परिहृतप्रायम्; एतत्कृतव्याजाभावेऽपि मुक्तत्वकारणे मुक्तत्वस्यानादित्वप्रसंगः;

ईश्वरः केवलस्वातन्त्र्येण मुक्तं करोति इत्युक्ते वैषम्यनैर्घृण्यादिकं प्रसज्येत। मोक्षोपायविधायकशास्त्राणां च आनर्थक्यं प्रसज्यते; तस्मात् उक्तं शेषत्वेन प्राप्तविषयसमाश्रयणं स्वामिनः स्वत्वरक्षणे औचित्यं च सिद्ध्यति। अत्यन्तपारतन्त्र्येण तदायत्तस्वातन्त्र्यवहनं, पिहितत्वात् तदभिमतोपायानुष्ठानं फललाभस्य तत्प्रतीक्षणं च सिद्ध्यति। उक्तं शेषत्वं पारतन्त्र्यं च फलदशायां तदभिमतकैङ्कर्यं तदिच्छानुगुण्येन कर्तुं चोपयुक्तं भवति; एतद्विरोधात् स्वरक्षणार्थस्वव्यापारोऽनुचितः इति वदतां यथाशास्त्रं भगवत्प्रीत्यादिफलमुद्दिश्य क्रियमाणकैङ्कर्ये साध्यत्वेन विधीयमानप्रपत्तौ च स्वरूपविरोधबुद्ध्या अधिकाराभावप्रसङ्गः। [वाक्यजन्यसंवलनज्ञानादिमात्रातिरिक्तं किञ्चित्, शरणं व्रज इति विहितत्वात्, विहितस्य साध्यत्वमुपपन्नम्] तस्मात् शेषभूतस्य परतन्त्रस्यास्य यथाधिकारं स्वरक्षणार्थव्यापारो युक्त एव।

नन्वेवमपि, अनन्यार्हशेषभूतत्वेन परमैकान्तिकतया स्वात्मानं जानतः देवतान्तरद्वारकवर्णाश्रमधर्मेतिकर्तव्यताकभक्तियोगादिकं पारमैकान्त्यविरुद्धम्, शुद्धराजिव एव हि परमैकान्तिकत्वसंभवः? इति चेत्; इदं भाष्यादिकृतनिष्कर्षानभिज्ञानकृतं चोद्यम्; प्रतर्दनादिविद्यासु 'परमात्मा, इन्द्रादिशरीरकतया मुमुक्षूपास्यः इति निर्णीतम्; विद्याङ्गभूतवर्णाश्रमादिकर्मसु, देवताशरीरत्वेनावस्थितपरमात्मैव आराध्य इति च निर्णीतम्। तस्मात् स्वातंत्र्येण देवतान्तरभजने वा फलान्तरकामनया[स्वधर्मभूत] नित्यनैमित्तिकानुष्ठाने वा पारमैकान्त्यं विरुद्ध्यते; फलान्तरसंगाभावेन परमात्मविशेषणभूतान् अग्नीन्द्रादीन् विशेष्यपर्यन्ताननुसंधाय वा, * साक्षादप्यविरोधं जैमिनिः * इति न्यायेन अग्नीन्द्रादिशब्दान् साक्षाद्भगवद्वाचकत्वेनानुसंधाय वा स्वस्य धर्मानुष्ठाने विधिबलेन पारमैकान्त्यविरोधो नास्ति; ।

नन्वेवमपि, अभिचारादिविधिप्रकारेण शास्त्रप्ररोचनाद्यभिसंध्या अधिकारिविशेषे उपासनादिकं विहितम्; मुमुक्षोः प्राप्यप्रापकयोरैक्यात् प्राप्यानुरूप उपायः सर्वेश्वर एक एव। अत एव हि * अथ पातकभीतस्त्वं सर्वभावेन भारत! विमुक्तान्यसमारम्भो नारायणपरो भव * इति धर्मदेवता, स्वपुत्रस्योपासनादिकं प्राप्यविरूपमिति प्राह; इति चेत्: इदमप्यत्यन्तानुपपन्नम्, अभिचारादिकं फलविशेषसाधनत्वात्किलानर्थहेतुर्जातम्?; अत्र फलस्यमोक्षत्वात् तद्द्वारा अनर्थहेतुत्वं नास्ति; एकाधिकारविशेषे एकविषयस्य गुरूपायप्रदर्शनं कृत्वा

लघूपायरुचिं जनयति, इत्येतत् विवक्षितविपरीतं भवति। अङ्गेष्वङ्गिफलनिर्देशः इति स्तुतिरूपत्वमेव हि तदा फलितं स्यात्?; तदभावात् प्राप्यस्यैतदनुरूपमित्येतत् शास्त्रवेद्यम् इति युक्तिमात्रेण प्राप्यविरोधो दुर्वचः, आगमविरोधात्; तर्केण शास्त्रस्य बाधो सर्वशास्त्राप्रामाण्यापत्तिः; * अथ पातक इत्यादौ उपासनादिकं पातकशब्दवाच्यम् इत्यत्र प्रमाणं नास्ति; तस्मात् मुमुक्षुं प्रति विहितत्वात् भक्तिप्रपत्ती यथाधिकारं परिग्राह्ये;।

ननु. विहितत्वेपि आचार्यरुचिपरिगृहीतत्वाभावात् अतिथिसत्कारादौ विहितगवालम्भनादिवत् उपासनादिकं शिष्टपरिग्रहविरुद्धत्वात् अनादरणीयमिति चेत्; तदपि निरूपकवाक्यं न भवति; आचार्यमात्रापरिग्रहे हि * अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु * इति त्याज्यता?;।

अत्र, * तस्मै नमो मुनिवराय पराशराय * इति श्लाघनीयपराशरादौपूर्वाचार्यानुष्ठितत्वात्, सर्वशिष्टबहिष्कारो दुर्वचः; कलियुगे यथोक्तपरमात्मोपासनाधिकारिदुर्लभत्वादिदमेतत्कालविरोधि; अत एव * कलेर्दोषनिधेः राजन्! अस्ति ह्येको महान् गुणः कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् * इत्युच्यते' इति चेन्न; * कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः। * इति एतत्कालेऽपि उपासनादेरधिकारिणः स्वयं प्रयोजन (भक्ति) योगनिष्ठाः पूर्वाचार्याः बहवस्संभाविता एव; अन्यथा, संकीर्तनव्यतिरिक्तप्रपत्तेरपि— * किंतु तस्य च मन्त्रस्य कर्मणः कमलासन! नलभ्यतेऽधिकारी वा योग [श्रोतु] कामोऽथवा नरः * इति महाविश्वासयुक्ताधिकारिणो दुर्लभत्वात्, अत्रापि तत्प्रसज्येत; तस्मात् उपासनादेः न कोऽपि विरोधोऽस्ति; अतो यथाशालमातुरादीनां अवगाहनादिवत् इदम्, * अकिञ्चनोऽनन्यगतिः * इत्युक्ताधिकारिणः स्वाधिकारविरुद्धम् इति वक्तुं युक्तम्। उक्ताधिकारविरोधमज्ञात्वा उपासनादिके प्रवर्तमानं प्रति * नरस्य बुद्धिदौर्बल्यात् उपयान्तरमिष्यते * इत्युक्तम्; तस्मात्, उपासनादिकमपि अधिकार्यन्तरं प्रति यथाधिकारमनुगुणमेव;।

एवम्, उपासनादेश्शेषत्वपारतन्त्र्यस्वरूपविरुद्धत्वाभावात्, तत्तदर्शिवचनं प्रपन्नस्वरूपविरुद्धत्वाभिप्रायम्। तदेकशरणव्रज्यायाः उपायान्तरान्वयविरोधित्वात्; भयजनकवचनमपि तद्विषयमेव; तस्य प्रपन्नानुसन्धानरूपत्व-शोकजनकत्ववचनं दुश्शकत्वाभिप्रायम्। प्रायश्चित्तविधिश्च प्रपन्नविषयः, * न हिंस्यात् * इतिवत् न सर्वविषयः। महाविश्वासपूर्वकं, तदेकोपायतयाश्रितां कृतवतो विश्वासभङ्गेन साधनान्वये सति निष्ठाहानेः, तत्संधानसिद्ध्यर्थस्य प्रायश्चित्तस्य; सर्वापेक्षया हिंसादिवत् प्रपकान्तराणां नाशकत्वसूचनानुपपत्तेः, * मदिरेत्याद्याभियुक्तवचनमपि फलसङ्गकर्तृत्वाभिमानत्यागपूर्वकं कर्तव्यस्य उपासनस्य तादृशकर्तृत्वाभिमानसंभवे त्याज्येति यद्यर्थगर्भम्। अतः प्रापकान्तरस्वरूपविरुद्धत्वज्ञानापायत्वकथनमनुपपन्नमिति। अत्रोच्यते— नहि वयमात्मस्वरूपस्यनिर्व्यापारत्वं वदामः, येन तुच्छतायापत्तिः न वा सन्निधिमात्रमेव व्यापारः; येन संसारस्य मिथ्यात्वापत्तिः। किंतु * परात्तु तच्छ्रुतेः * इत्यादिसिद्धकर्तृत्वमात्मनोऽभ्युपगच्छामः।

तर्हि कैङ्कर्य इवोपासनेऽपि कर्तृत्वं स्वरूपप्राप्तमेव स्यादिति न वाच्यम्; कर्तृत्वस्य साधनविषयत्वं फलविषयत्वं चेत्याकारद्वयमस्ति । तत्र साधानविषयत्वमौपाधिकम्, कर्माधीनत्वात् मोक्षदशायां साधनगोचरकर्तृत्वाभावाच्च फलगोचरं तु कर्तृत्वं स्वाभाविकम्, मोक्षदशायामनुवृत्तेः । अतस्साधने कर्तृत्वमात्मन औपाधिकम्; 'स्वतन्त्रः कर्ता * इति स्वातन्त्र्यावहत्वान्नाशकम्; * शास्त्रफलं प्रयोक्तरि * इति स्वस्य फलित्वावहत्वात् अनर्थावहं च भवति । * उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ * इति ईश्वरस्यैव फलित्वात्; चेतनत्वादपि भोक्तृत्व-संभवेऽपि तस्य कुसुमादेस्सौरभ्यादिवत् परार्थत्वमेवेति भोक्तृत्वं ईश्वरस्यैव किं च अन्य गुणाद्गुणप्रवृत्तिः स्वरूपविरुद्धा, निषिद्धा च: * प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताहमिति मन्यते * इति, * कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते * इति च, सांसारिकप्रवृत्तिमादरय गुणनिवर्धनत्व-मुक्त्वा, * गुणानेतानतीत्य त्रीन देही देहसमुद्भवान । जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते * इत्येव सत्त्व-गुणप्रयुक्ता साधनभूतोपासनादिप्रवृत्तिरपि त्याज्यतयोक्ता न च कैङ्कर्यप्रवृत्तिरपि, * सत्त्वमूला त्याज्या; वर्णाश्रमधर्मानुष्ठानजन्यसत्त्वस्यौपाधिकत्वेऽपि, * सत्त्वस्यैव प्रवर्तकः * इति भगवन्निर्हेतुककृपाप्रवर्तितसत्त्वस्य निरुपाधिकतया तन्मूलकैङ्कर्यस्य सांसारिकप्रवृत्तित्वाभावात्: अन्यथा, मुक्तिदशायां गुणानुभवकैङ्कर्यादेस्सत्त्व-मूलत्वेन औपाधिकतापत्तेः । अत एव गुणातीतत्वहेतुतयाऽनन्यप्रयोजना भक्तिः अत्रैवोक्ता । * मां च योऽव्यभि-चारेण भक्तियोगेन सेवते । स गुणान समतीत्यैतान ब्रह्मभूयाय कल्पते * इति साधनभक्तिः स्वपुरुषार्थेऽपि स्वस्था-ऽनैकान्तिका; उपासकस्य, फलित्वेन स्वस्मिनि अनुरागवत्त्वात्; अत एव * त्वं न्यञ्चिद्भिरुदञ्चद्भिः कर्मसूत्रोप-पादितैः हरे विहरसि क्रीडाकन्दुकैरिव जन्तुभिः * इति, 'मोक्षोदञ्चनहेतुरपि लीला' इत्युच्यते । तस्मात्, कर्मकृतगुणानुगुणलीलारूपसाधनसांसारिकप्रवृत्तिः स्वरूपविरुद्धा ।

यच्चोक्तम्; कर्मानुष्टाने, ब्राह्मणोऽहमिति भ्रमो नाधिकारः, देहात्मविवेकवत एव........अधिकार-त्वात्; परंतु, ब्राह्मण्यादिविशिष्टशरीरसंबन्ध एव अधिकारः इति; तन्न साधनानुष्ठानमात्रस्य देहात्मभ्रमकार्यत्वात्; तत्र श्रीविष्णुपुराणेऽभिहितम्; * अधिकारबोधयुक्तेषु विद्यते भावभावना । अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु * इति । अत्र श्रीविष्णुचित्ताः, "संसारिष्वेव सनक - हिरण्यगर्भादिषु भावनात्रयान्वयः" इत्यत्राह, "अधि-कारबोधयुक्तेषु" इति श्लोकेन, मत्फलसाधनत्वात्मदर्थमिदं कर्म इत्यधिकारबोधस्यापि अधिकारिणमाह * अक्षी-णेषु * इति । "[विशेषज्ञानम्] देवादिभेदभिन्नापरोक्षात्मभ्रमः; यावद्भ्रमानुवृत्तिः तावदधिकारबोधः; तेषु शास्त्र-वश्यत्वम्" इति कर्मानुष्ठानं उपासनानुष्ठानं च वर्तते; देवमनुष्यात्मानुसंधानविशेषानुरूपमानसवाचिकादिकर्म प्रवर्तते' इत्यर्थ इति । तस्मात्, उपासनाद्यनुष्ठानस्य साधनप्रपत्त्यनुष्ठानस्य च देहात्मभ्रममूलत्वात् स्वरूपविरुद्धत्व-मावश्यकम् । नच वर्णाश्रमधर्माणामप्यननुष्ठानं प्रसज्यते; तस्य कैङ्कर्यत्वेनानुष्ठेयतया भ्रममूलकत्वाभावात्;।

यद्यपि चेदमुक्तम्, "अहङ्कारगर्भमुपासनम्" इत्येतत् अशास्त्रसिद्धत्वादारोपमात्रमिति; तन्न, "मत्फलसाधनान्मदर्थम्" इति, साधने फले च ममताबुद्धिसत्त्वात्; अधिकारबोधाभावे साधने प्रवृत्त्यनुप-

पत्तेः : स्कान्देऽपि * कर्मिणो ज्ञानिनो भक्तास्स्वयत्नकृतबुद्धयः। तस्मात्कर्माद्युपायास्तु सान्तराया अनेकशः * इति ॥

ननु ! फलसंगकर्तृत्वत्यागपूर्वकं हि कर्म, उपासनं च विधीयते ? कथमहङ्कारगर्भत्वमिति चेत्; उच्यते। शास्त्रेषु विहितः फलसंगत्यागः स्वयत्नप्रधानफलित्वत्यागः, कर्तृत्वत्यागोऽपि, प्रधानकर्तृत्वत्यागः, नतु कर्तृत्वमात्रत्यागः; * परात्तु तच्छ्रुतेः * इति स्वस्य अप्रधानकर्तृत्वसत्त्वात्; तदभावस्याप्यनुसंधेयत्वे, तस्य मिथ्याज्ञानत्वेन मोक्षप्रतिबन्धात्; तत्त्वज्ञानाद्धि मोक्षः ?; अत एव प्रधानकर्तृत्वाभिमानस्यैव हि विशिष्य निषेधस्स्मार्यते ? * तत्रैवं सति कर्तारमात्मानं केवलं तु यः। पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः॥ अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् * इति। अत्र भाष्यम्, अधिष्ठानादिदैवपर्यन्तसापेक्षे सति आत्मनःकर्तृत्वे, यः आत्मानमेव केवलं कर्तारं मन्यते, स न पश्यति; इत्यर्थ इति। अन्यथा कर्तृत्वमात्रत्यागे * शास्त्रफलं प्रयोक्तरि * इति फलेष्यनन्वयस्स्यात्। अतः, साधकैः अप्रधानभोक्तृत्वं चानुसंधेयम् इति अहङ्कारगर्भत्वमनपोद्यम्।

यच्चोक्तम्; औपाधिककरणकलेबरसाध्यकर्मयोगादिकस्याप्यौपाधिकत्वात् स्वरूपविरुद्धत्वे स्वरूपज्ञानद्वयश्रवणादीनामपि मनःप्रभृतिसाध्यत्वात् तुल्यदोषतेति; तन्न; करणकलेबराणामौपाधिकत्वं विलक्षणसुकृतविशेषलभ्यत्वम्; त्रैवर्णिकपटुतरदेहादिसाध्यत्वादुपासनस्य; स्वरूपज्ञानद्वयश्रवणादिकं च सर्वयोनिष्वप्युपपद्यते; * चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन! * इतिवत् फलप्रपत्त्यन्वयस्य सुकृतविशेषकृतदेहारब्धत्वाश्रुतेः; किञ्च, अन्येषां करणकलेबरादिकं ईश्वरेण तत्तत्कर्मानुगुणं स्वार्थे विनियुज्यते; अन्येषां स्वदेहादौ प्रयोजनसत्त्वात्; अस्य विहितविषयेऽपि विरक्तस्य स्वदेहे प्रयोजनाभावात् ईश्वरेण नान्यत्र विनियुज्यते, किञ्च; अस्य प्रारब्धस्य देहस्थापकत्वमात्रमङ्गीकृतम्; नतूत्तरोत्तरानुकूल्यप्रवृत्तियोग्यत्वमपि; अतोऽपि इतरदेहादेस्तद्देहस्य व्यावृत्तिः।

यदपि चेदमुक्तम्; "उपायान्तरं शेषत्वविरोधित्वात् अप्राप्तम्; पारतन्त्र्यविरोधित्वात् असंभावितं च" इत्युक्ते सर्वमुक्तिप्रसंगः। स्वातन्त्र्यात्परिहारे, वैषम्याद्यापत्तिः। मोक्षशास्त्रानर्थक्यापत्तिः भगवत्प्रीत्युद्देशेन प्रपत्तिवृत्त्यादौ अनधिकारापत्तिः। इति तदयुक्तम्; स्वप्रवृत्तिनिवृत्तिसापेक्षत्वेन सर्वमुक्तवैषम्याद्यभावात्। अज्ञस्य तत्राधिकारित्वेन मोक्षशास्त्रवैयर्थ्याभावात्। भगवत्प्रीतेः फलान्तरस्य वा स्वानन्दस्य वा साधनत्वानभ्युपगमेन केवलपरातिशयावहत्वस्वीकारात्। परातिशयाधायकत्वस्य शेषत्वानुगुणत्वाच्च, नास्य प्रपत्तेर्विरुद्धत्वम्। अनन्यप्रयोजनत्वेपि न्यासोपासननिष्ठस्य सर्वापि [प्रवृत्तिः] परार्था। साधकयोः सर्वापि प्रवृत्तिः स्वार्था; इति सैव विरुद्धा [ननु] शेषत्वस्य, स्वामिनः [स्वस्वरक्षणार्थं साधनान्तरे प्रवृत्तिः शेषत्वगुणैवेति न विरुध्यते इति तन्न तत्तस्य सदृशंभवेदित्यादिविरोधात्] स्वस्वरक्षणोचितत्वेन * तत्तस्य सदृशं भवेत् * इत्यादि विरुद्धयते। देहस्यापि तत्स्वत्त्वेन तत्पोषणमपि प्रसज्यते। परतन्त्रस्य परायत्तस्वातन्त्र्या-

वहत्वात्, तद्भिमतोपायानुष्ठाने विहितस्य तद्भिमतनया काम्यानुष्ठानं स्यात्। अस्याधिकारिविशेषे निषिद्धत्व-मप्यस्ति इति चेत्; अत्रापि (=भगवत्प्राप्तौ) उपायान्तरस्याधिकारिविशेषे निषिद्धत्वात्, अनभिमतिस्तु ल[त्या]भ्या। अतः साधनप्रवृत्तिः; शेषत्वपारतन्त्र्योभयस्वरूपविरुद्धा।

यदप्युक्तं कर्मोपासनयोः देवतासंबन्धो नास्ति। अग्रनयनादिव्युत्पत्त्या वा अपर्यवसानेन वा परमात्म-परत्वादिति तन्न काम्यत्वाकारेण देवतान्तरपरत्वाभावेपि नित्यत्वाकारस्य ऋणमोचनार्थतयानतपरत्वात् ॥ न्यासोपासकयोः सर्वात्मनाप्रपन्नत्वाभावेन ऋणित्वात्।

यदप्युक्तम्; "प्रापकान्तरं प्राप्यविरुद्धम्" इत्यत्र प्रमाणाभावः इति; मन्त्रद्वयस्थनमश्शब्दाभ्यां * स्वयं तु रुचिरे देशे * इत्युपबृंहिताभ्यां अत्यवानभोक्तृत्वस्यापि निषिद्धत्वेन स्वभोक्तृत्वफला भक्तिः प्राप्यविरुद्धा; भक्तिविधेरभिचारसाम्यमुत्तरत्रोच्यते ॥

यदप्युक्तम्, पराशरायनुष्ठितत्वात् उपासनस्याशिष्टपरिग्रहो नास्ति इति; तन्न; ततोप्यतिशयित-ज्ञानादिभिः नाथयामुनयतिवरादिभिः अनुष्ठितत्वेन शिष्टाचारविरोधोऽस्त्येव; श्रीपराशरादेः शास्त्राचार्यत्वेपि साराचार्यत्वाभावात्; तन्नमस्कारस्तु उपकारकत्वकृतः ॥

यदप्युक्तं * कलौ कृतयुगं तस्य * इति न्यायात्, कलावपि स्वयंप्रयोजनत्वेन तन्निष्ठानां पूर्वा-चार्याणां सत्त्वात् न कालविरोधः इति; तन्न, कलियुगे [भगवदेक] साध्यभक्तेस्सर्वाधिकारभूतायाः पराङ्कुशादि संप्रदायप्राप्तायास्सत्त्वेपि साधनभक्तेः साधनप्रपत्तेश्च संप्रदायविच्छिन्नतया अस्मिन् काले तदनुष्ठानायोगात् ॥ [पू] नहि लक्ष्मीनाथमारभ्य [भगवदेक] साध्यप्रपत्तिसाध्यभक्त्योरिव, चतुर्मुखमारभ्य [जीवप्रयुज्यमान] साधनप्रपत्तिसाधनभक्त्योः गुरुपरम्पराप्राप्तत्वमवगम्यते।

[सिद्धान्तः] भाष्यकारैरपि वृत्तिद्रमिडभाष्यादिकं तद्गुरुपरम्पराक्रमेण कस्मिंदाचार्ये न श्रुतम्, किंतु पुस्तकमुखान्निरीक्षितम्, ततश्च भाष्यमिदानींतनानां ※ उपकारकत्वेनानुसन्धेयम्;। ततूत्तराकम् । ततःपूर्वमेव संप्रदायविच्छित्तेः। अत एवोच्यते—*हरेर्नामैव नामैव नामैव मम भेषजम्। कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा * इति ॥ नामसंकीर्तनं च * त्वदङ्घ्रिमुद्दिश्य * इत्याद्युक्तदेशकालप्रकाराधि-कारादिनियमरहिता फलप्रपत्तिरुच्यते। एवमुपासनसाधनप्रपत्त्योः कलियुगधर्मत्वं नास्तीत्युक्तं भवति ॥

एवमुपासनं सांसारिकप्रवृत्तित्वेन गुणकृततयौपाधिकत्वात्, ब्राह्मण्यादिविशिष्टदेहात्मभ्रमकृतत्ववात्, कर्तृत्वभोक्तृत्वरूपाहङ्कारगर्भत्वात्, कर्मौपाधिककरणकलेवरसाध्यत्वात्, शेषत्व (=पारार्थ्य) विरुद्धत्वात्, पारतन्त्र्यविरुद्धत्वात्, देवतान्तरविषयत्वात्, प्राप्यविरोधित्वात्, शिष्टाचारविरुद्धत्वात्, कलियुगविरुद्ध-त्वाच्च, स्वरूपविरुद्धम्। इति दशविधविरोधा उक्ता भवन्ति ॥ यत्तूक्तम्, "तत्त्वदर्शिवचनप्रायश्चित्त-

---

( ) कुण्डलितः पाठः विरुद्धः।

टिप्पणिः—※ साधनभक्तिपरत्वे श्रीभाष्यमुपकारकमात्रमेव साध्यभक्तिपरत्वे तु उत्तारकमेव अतएवाहि पठित्वा भाष्यमित्युक्तम्: अन्यथा संप्रदायविरोधो दुष्परिहरस्यात् ॥

वचनादिकस्य प्रापकान्तरं तदेकशरणत्रय्यात्मकप्रपत्तिविरुद्धत्वात् प्रपन्नस्वरूपविरुद्धम्, नतु निष्कृष्टात्मस्वरूपविरुद्धम् इत्यभिप्राय इति । तत्र प्रपन्नस्वरूपविरुद्धत्वे विप्रनिपन्नं प्रति निषिद्धत्वात्; तत्संयोगे च प्रायश्चित्तविधानात्, पापत्वं प्रपन्नापेक्षया वक्तव्यम् । तत्रोपायसंयोगस्य पापत्वं अनिष्टफलप्रदत्वाद्वक्तव्यम् । अत्रानिष्टफलं अपायवन्नरकम् ? उत मुमुक्षोः काम्यकर्मफलस्वर्गादिवत् उपासनासाध्यमोक्ष एव? उत प्रपत्तिनिष्ठाभञ्जनमात्रम् ?।। न प्रथमः, गौणकर्माधिकृतस्य शक्तिसंभवे मुख्यकर्मान्वये सति नरकादर्शनात् * 'नरस्य बुद्धिदौर्बल्यात् * इति न्यायेन स्वाधिकार[विरोध]मज्ञात्वा दुश्शके प्रवृत्तिसंभवे, तद्विषयाविमौ त्यागप्रायश्चित्तविधी' । अशक्यार्थप्रत्याशारम्भपरस्य अर्थक्रियादशायां स्वत एव निवृत्तिसंभवेन तं प्रति निषेधस्य वैयर्थ्यात् । मुख्याशारम्भयोः अन्यत्र नरकहेतुत्वादर्शनेन प्रायश्चित्तविधानायोगाच्च । न द्वितीयः, प्रपन्नस्य भक्तिसाध्यमोक्षानिष्टता प्रपत्तिसाध्यमोक्षापेक्षया तत्साध्यमोक्षस्य निकृष्टत्वकृतेति वाच्या; तदा, भक्तिप्रपत्त्योःफलभेदः; भक्तिफलस्य निकृष्टफलत्वात् प्रपन्नापेक्षया पापत्वमिति एतत्सर्वमभ्युपगतम् इति सिद्धान्ती विजयी स्यात् । (नत्तदधिकार्युद्देश्यविरोधि हि तत्तदधिकार्यपेक्षया पापं भवति ?) न तृतीयः, विपरीतफलप्रदत्वाभावे अधिकारभञ्जनायोगात्, पापस्य नरकहेतुत्वसिद्धेः, सर्वत्राधिकारभञ्जकत्वम् । पुण्यस्यापि स्वर्गहेतुत्वसिद्धेः, मुमुक्षाभञ्जकत्वम् । अतः अत्र नरकहेतुत्वायोगात्, अनभिमतमोक्षप्रदत्वाकारेण प्रपत्तिनिष्ठाभञ्जकत्वमिति प्रापकान्तराणामनिष्टफलत्वात्पापत्वं सिद्धम् । भक्तिसाध्यफलस्यानिष्टत्वं च स्वरूपयाथात्म्यवेदिनामेवेति स्वरूपविरुद्धत्वमात्रसिद्धिः । त्यागप्रायश्चित्तविध्योः न्यासनिष्ठविषयत्वे, न्यासस्य भक्तिफलानुभवापेक्षया कैङ्कर्यलक्षणोत्कृष्टफलत्वसिद्धिः । भक्तिन्यासयोःफलवैशिष्ट्ये उक्तविध्योः न्यासविद्यानिष्ठाविषयत्वं वाऽऽपद्येतेति विधी शरणागतमात्रविषयौ स्यातामिति ।

123. ननु! अज्ञं प्रति भक्तिरुपायः इति न तत्र ईश्वरस्य निरपेक्षत्वसिद्धिः ? इत्यत्राह (रत्न) इत्यादि ।

॥ इति उपायान्तरविरोधस्थापनाधिकारः ॥ १ ॥

---

## अथ भक्तेः व्याजत्वनिरूपणाधिकारः ॥ २ ॥

सङ्गतिः स्फुटा । [संशयः] भक्तिः, उपायः ? उत व्याजमात्रमिति । तदर्थम्, व्याजत्वे विधिस्संभवति ? उत नेति । यदा न संभवति, तदा उपायत्वम् । यदा संभवति तदा व्याजत्वम् । पूर्वपक्षस्तु [उपासनास्य] * उपासीत * इति विहितत्वात् ज्योतिष्टोमादेः स्वर्गादिकं प्रतिवत् उपायत्वमेव । नच फलवैरूप्यादनुपायत्वम् । अल्पकालसाध्यकृष्यादेः यागादेश्च विपुलफलदर्शनात् । नचव्याजमात्रस्य विधिसंभवः; बालाद्युपच्छन्दनवाक्यवत् अप्रामाण्यापत्तेः । अतः विहितत्वात् भक्त्यादिः साधनमेवेति ॥

सिद्धान्तस्तु भक्तिः व्याजमात्रं, न साधनम् । फलविसदृशत्वात् । फलवैसादृश्यं नाम नित्यत्वम् । न वैपुल्यमात्रम् । नहि नित्यं फलमनित्येन साधयितुं शक्यते ? दृष्टव्याप्तिविरोधात् । * न नास्त्यकृतः कृतेन *

न ह्यध्रुवैः प्राप्यते ध्रुवं तत् * इति विधिविरोधाच्च । न ह्यनयोः कर्मविषयत्वम् । संकोचकाभावेन, कर्मोपासनोभयविषयत्वात् * यजते * तपस्तप्यते * बहूनि वर्षसहस्राणि * अन्तवदेवास्य तद्भवति * इति यागवत् तपश्शब्दवाच्योपासनस्यापि अन्तवत्फलत्वश्रवणात् ॥ नित्यफलस्य * नायमात्मा प्रवचनेन लभ्यः * इत्यादिना विशिष्योपासनसाध्यत्वनिषेधाच्च ॥ नच प्रवचनशब्दः, [न] भक्तिरूपत्वदशापन्नध्यानपरः । असंकोचेन तद्दशापन्नध्यानपरत्वे बाधकाभावात् । नचोपासनविधिविरोधः । तस्य व्याजविधित्वस्य कल्प्यत्वात् । अन्यथा निषेधकवाक्यानामनेकेषामस्वारस्यापत्तेः । तानि हि लोकसिद्धव्याप्त्यानुगृहीतानि प्रबलानि । अतः उभयाविरोधेन व्याजविधित्वकल्पनमेव युक्तम् । नच लोके * कृषिमित्कृषस्व * इत्यादौ उपाये एव विधिदर्शनात् लोकदृष्टव्याप्त्यनुग्रहः उपायविधिपरत्वेऽपि संभवति इति वाच्यम् । रत्नार्थं वराटिकां दद्यात् । राज्यार्थं उपहारं दद्यात् । इति व्याजेऽपि लोके विधिदर्शनात् । एवं चरमयुक्त्यभिप्रायेण (रत्न) इत्यादिकमुक्तम् । एवं देशतः, कालतः, वस्तुतश्चानन्तफलं प्रति विविधोपाधिपरिच्छिन्नोपासनविधिः व्याजविधिरेक भवितुमर्हति, इति ।

॥ इति भक्तेः व्याजत्वनिरूपणाधिकारः ॥ २॥

---

## अथ भक्तेः व्याजत्वाभावनिरूपणाधिकारः ॥ ३॥

124. प्रथमं सर्वज्ञान् प्रति उपायत्वं नास्ति, किंतु अज्ञान्प्रत्युपायत्वमित्युक्तम् । अनन्तरं तान्प्रत्युपायत्वं नास्ति; किंतु व्याजमात्रमित्युक्तम् । इदानीं व्याजत्वमपि नास्तीत्याह (तान् दरिद्रन्) इत्यादि । संगतिः स्फुटा । संशयस्तु भक्तेः व्याजत्वं संभवति? उत नेति । तदर्थं सर्वमुक्त्यादिप्रसंगः, शास्त्रवैयर्थ्यं च संभवति? उत नेति । यदा सर्वमुक्तिप्रसंगो भवति, शास्त्रवैयर्थ्यं च भवति । तदा भक्तेः व्याजत्वसंभवः । यदा तदुभयप्रसंगो न भवति तदा व्याजत्वाभावः इति । पूर्वपक्षस्तु, भक्तेः व्याजत्वमवश्यं वाच्यम् । आप्रयाणं बह्वायाससाध्यस्य व्याजत्वस्याप्यभावे तद्विधिवैयर्थ्यप्रसंगात् । उपायव्याजयोरन्यतराभावेऽपि मोक्षप्रदत्वे सर्वमुक्तिप्रसंगः । भक्तिं दत्वा पश्चात् मोक्षप्रदत्वे वैषम्या[द्या]पत्तिः । तस्मात् भक्तेरुपायत्वाभावेऽपि व्याजमात्रं वा सर्वथाभ्युपगमनीयमिति । सिद्धान्तस्तु, भक्तेरुपायत्ववत् व्याजत्वम[प्य]नुपपन्नम् । राज्यार्थोपहारस्थले लिकुचफलादेः स्वकीयत्वमस्ति । अत्र भक्तेः परमपुरुषदत्ततया तदपि नास्ति । * एषह्येव साधु कर्म कारयति तम् * इत्युन्निनीषाश्रुतेः * ददामि बुद्धियोगम् * इति स्मृत्यानुगृहीतायाः भक्तेः परमपुरुषदत्तत्वश्रवणात् । करणकलेवरप्रदानसाधारणोपकारैः प्रयोजयितृत्वलक्षणविशेषोपकारैश्च भक्तेः भगवदीयत्वात् । नच वैषम्या[द्या]पत्तिः प्रातिकूल्यव्यवसायनिवृत्तिमात्रापेक्षत्वेन तदभावात् । तदुक्तं भाष्ये “प्रातिकूल्यव्यवसायनिवृत्तिमात्रेण अनादिकालोपचितानन्तापराधानादरेण निरतिशयसुखसंवृद्धये भगवान् स्वयमेव [प्र]यतते । तदुक्तम्, सततयुक्तानाम् * इत्यादि । तस्मात् व्याजत्वाभावेऽपि * आचार्याय वरो देयः * इति आचार्येण दत्तस्य माणवकेन प्रतिदानवत् दत्तप्रतिपादनसत्त्वात् न सर्वमुक्तिप्रसंगः । न वा सहेतुकत्व”मिति ।

126. हेतुव्याजत्वयोरभावे हेत्वन्तरमाह (भर्तृ) इति लोके साधनस्य सर्वस्य दुःखात्मत्वदर्शनात्, अस्य परभक्त्याद्यात्मकस्येन्द्रादिभोगेऽपि निरयत्वबुद्ध्यावहात्यन्तनिरतिशयानन्दरूपस्य स्वयंप्रयोजनभूतस्य साधनत्वायोगात्। अत एवोच्यते * भजनसुखमेकस्य विपुलम् * इति। तस्मात् योगपर्यन्तप्रयत्नप्रयोजनं भक्तेरेव, इति। तस्यापि न फलान्तरं वाच्यम्। अत एवोच्यते * नाथ! योनिसहस्रेषु * इत्यादि। ततश्च * उपासीत * इति विधिः, यावज्जीवं सुखं जीवेत् इतिवत् इति भावः।

127. एवं विधेरुपायत्वबुद्धिः केवलमवद्यावहैव स्यात्। एवं व्याजत्वस्याप्यभावे विधिवैयर्थ्यम्। ईश्वर एवोपायश्चेत् स एव विधेयः। इत्याशङ्क्य परिहरति (वेदान्त) इत्यादिना।

129. ननु, भक्तेरुपायत्वे वा व्याजत्वे वा पितुः गोदानवत् दत्तप्रतिपादनरूपत्वे, यथाकथञ्चित ईश्वरस्य तत्सापेक्षत्वात् न निरपेक्षत्वसिद्धिरित्याशङ्क्य तत्रेश्वरस्य रक्षकत्वमेव नास्ति। तत्र रक्षणमेव न भवति। बलवदनिष्टानुबन्धित्वात्, इत्याह (इत्तै) इत्यादि।

॥ इति भक्तेः व्याजत्वाभावनिरूपणाधिकारः ॥ ३ ॥

---

अथ भक्तिविधेः श्येनविधितुल्यत्वाधिकारः ॥ ४ ॥

129. सङ्गतिः स्फुटा संशयस्तु; * आत्मानं ध्यायथ * इत्याद्युपासनाविधिः अभिचारविधिवत् उत ज्योतिष्टोमादिवत् तदननुबन्धीष्ठसाधनविधिरिति। बलवदनिष्ठानुबन्धीष्टसाधनत्वविधिः? इति। तदर्थं * सर्वधर्मान्परित्यज्य * सर्वधर्मांश्च सन्त्यज्य * इत्यादिनिषेधः, उपासनफलस्य बलवदनिष्टानुबन्धित्वमवगमयति उत, अशक्तस्योपासने अधिकारमात्रमवगमयति? इति। उपासनफलस्य प्ररोचनार्थत्वं संभवति? उत नेति। तदर्थं श्रुतमोक्षफलव्यतिरेकेण तात्पर्यभूमिभूतं फलान्तरं संभवति? उत नेति। यदा * मुमुक्षुः ब्रह्मोपासीत * इति विध्युद्देशे श्रुतमोक्षफलव्यतिरेकेण तात्पर्यगोचरं फलान्तरं नास्ति, तदा श्रुतफलस्यैव प्रधानतयोपासननिषेधस्य तत्फले बलवदनिष्टानुबन्धित्वानवगमकतया केवलमशक्तस्य तत्राधिकाराभावमात्रसूचकत्वेनोपासनविधिः अनिषिद्धकाम्यविधिस्स्यात्। यदा विध्युद्देशे श्रुतफलव्यतिरेकेण तात्पर्यगोचरफलान्तरसंभवः, तदा, उपासननिषेधस्य तत्फले बलवदनिष्टानुबन्धित्वावगमकतया तद्विधिः अभिचारविधिवत्स्यात्।

पूर्वपक्षस्तु, उपायान्तरविधेः श्येनविधितुल्यत्वमनुपपन्नम्। तत्र पापात्मकहिंसायाः फलत्वात्। अत्र मोक्षस्य फलत्वात्। नहि मोक्षो नरकहेतुः? प्रमाणाभावात्, व्याहतेश्च। किंच तत्र, शास्त्रास्तिक्यजननं तात्पर्यगोचरफलमस्ति अत्र तु तन्नास्ति, मोक्षस्य निरतिशयत्वात्। नच निषेधबलात् तत्फलस्यानिष्टत्वकल्पनम्। कल्पकस्याशक्तं प्रति भक्तौ अनधिकारज्ञापकत्वेनान्यथासिद्धत्वात्। यथा, अग्निहोत्रादि निषेधः, सन्न्यासिनं प्रति अनधिकारसूचकः, नतु गृहस्थस्य बलवदनिष्टानुबन्धित्वसूचकः। नचोपासनस्य कर्तव्यताविधिः, [स्वरूपयाथात्म्यज्ञानवद्विषयः] स्वरूपज्ञानाधिकविषयः, तत्फलस्य अज्ञातस्य अज्ञाननिष्ठानु-

बन्धित्वसूचकः इति शक्यते वक्तुम् । स्वरूपज्ञानशून्यं प्रति वत्सलतरशास्त्रेण स्वरूपनाशस्य फलत्वेन विधानानुपपत्तेः । नच काम्याधिकारलक्षणस्वातन्त्र्यादाकृष्य शेषत्वे स्थापयितुं प्रवृत्तत्वात् न विधेः वात्सल्यहानिः इति वाच्यम् । वृश्चिकमुखात्पलायमानस्य [पुंसः] अशीविषमुखनिपतनन्यायेन पक्षे श्येनविधौ आस्तिक्यसिद्ध्यर्थं हिंसालक्षणफलेनोपच्छन्दनं युज्यते । शास्त्रास्तिक्यरूपमहाफलसिद्धौ तस्य प्रायश्चित्तादिनापनेतुं शक्यत्वस्य शास्त्रहृदयत्वात् । अत्र भोक्तृत्वस्य स्वरूपनाशत्वपक्षे शेषत्वसिद्ध्यर्थं तेनोपच्छन्दनं क्रियते इति वक्तुं न शक्यते । तस्य आत्मनाशस्वरूपस्य यावद्भावित्वेनापरिहरणीयत्वात् ।

नच काम्याधिकारनिवृत्त्या शेषत्वे प्राप्ते पारतन्त्र्यसिद्ध्यर्थं तदनन्तरमेव धर्मत्यागस्य विहिततया भोक्तृत्वलक्षणस्वरूपनाशप्राप्तिः । सर्वेषां शास्त्रहृदयपरिज्ञानासंभवेन तत्र केषांचित् अपरिहरणीयस्वरूपनाशापत्तेः । तथाच शास्त्रवात्सल्यभावो वा भविष्यदर्थापरिज्ञानं वा आपद्येतेति ।

अत्रोच्यते । * धर्मान्परित्यज्य * इति निषेधबलादेव भक्तिफलस्यानिष्टानुबन्धित्वमवगम्यते । नच त्यागविधेः अशक्तस्य अधिकाराभावज्ञापकत्वम् । दुश्शकं प्रति अशक्तेरधिकारत्वाभावस्य मानान्तरसिद्धतया विधिवैयर्थ्यात् । नच अग्न्याधानादिनिषेधस्य सन्न्यासिनोऽनधिकारत्वसूचकत्ववत् उपपत्तिः । तत्रानधिकारस्याप्राप्ततयातत्तात्पर्यकतोपपत्तेः । यद्वा, विरक्तेः कामित्वापेक्षयोत्कृष्टत्वेन कामिगतफलस्यानिष्टत्वसूचनोपपत्तेश्च । ततश्च, त्यागविधिसिद्धनिषेधबलेन भक्तिविध्युद्देशश्रुतफलस्यानिष्टानुबन्धित्वे सिद्धे, विधितात्पर्यं फलं, कामनाधिकारादुद्धृत्य शेषत्वेऽवस्थापनम्, इति गम्यते ।

नच भक्तिफलस्य यावदात्मभाविनः अनिष्टफलत्वे तेनोपच्छन्दनमयुक्तम्; योगेन तस्यापरिहरणीयत्वात्, इति वाच्यम् । उपच्छन्दार्थनिर्णयो द्वेधा घटते । बलवदनिष्टानुबन्धित्वात्, बलवदिष्टाननुबन्धाच्च । तत्र च उपासनफलस्यानिष्टानुबन्धाभावेऽपि, स्वतःकामित्वापेक्षया निरतिशयपुरुषार्थरूपस्य, पारतन्त्र्याविर्भावापेक्षया स्वल्पत्वात्, पारतन्त्र्यरूपबलवदिष्टानयाऽयोगाच्च, विधेः न तत्रात्यन्ततात्पर्यमिति गम्यते । विधिश्च कामिनमुद्धृत्य भगवद्भोगं प्रदर्श्य शेषत्वे स्थापयित्वा पश्चात् पारतन्त्र्यं स्थापयितुमुद्युक्तः । मध्ये उपासनफले दर्शिते विधितात्पर्यमजानन्तः तत्फल एव रमन्तु । तस्य कामित्वापेक्षया निरतिशयत्वात् । तात्पर्यं जानन्तः, पारतन्त्र्ये आगच्छन्ति, इति तात्पर्येण भक्तिमपि व्यदधात् । तस्मात् उपासनफलस्य निरतिशयानन्दरूपत्वेनानिष्टप्रसंगाभावेऽपि ततोप्युत्कृष्टफलाननुबन्धितया विधेस्तत्रात्यन्ततात्पर्याभावः । पारतन्त्र्ये एव तात्पर्यस्य पर्यवसानं च युज्यते इति श्येनविधितुल्यतोक्तौ न कोऽपि विरोधः इति ।

॥ भक्तिविधेः श्येनविधितुल्यत्वाधिकारः ॥४॥

---

### अथ प्रपत्तेः भक्तिद्वारकत्वाधिकारः ॥५॥

133. ननु इदं श्येनविधितुल्यत्वात् रक्षणमेव न भवति इति वक्तुं न शक्यते; शास्त्रस्य, वात्सल्यभावाज्ञत्वयोरन्यतरप्रसंगात् । किंतु पारतन्त्र्याभाववत् मुख्यरक्षणं न भवति, परन्तु गौणरक्षणम् इत्यभ्युपगन्तव्यम् ।

ततश्च गौणोपायत्वं भक्तेरस्ति इति, भगवतो निरपेक्षत्वं न सिद्ध्यति इत्याशङ्क्य गौणमोक्षसाधनमपि प्रपत्तिद्वारकमित्याह (इतुतान्) इति सङ्गतिस्फुटा । संशयस्तु भक्तिः साक्षान्मोक्षहेतुः ? उत प्रपत्तिव्यवधानेनेति तदर्थम्, भक्तेः प्रपत्तिशेषत्वं संभवति ? उत नेति । तदर्थम्, किंचित्कारत्वं क्वचित् दृष्टम्, उत नेति यदा न दृष्टम्, तदा भक्तेः प्रपत्तिशेषत्वाभावात् स्वातन्त्र्येणैव मोक्षासाधनत्वसिद्धिः । यदा किंचित्कारसंभवो दृष्टः तदा शेषत्वसंभवात् भक्तेः मोक्षोपायत्वं प्रपत्तिद्वारकमिति सिद्ध्यति ।

पूर्वपक्षस्तु । भक्तेः प्रपत्तिद्वारकत्वमनुपपन्नम् * मुमुक्षुः ब्रह्मोपासीत * इति अव्यवधानश्रुतेः । प्रपत्तेः अत्यन्तनिरपेक्षत्वेन भक्त्याहितकिंचित्कारानपेक्षणाच्च, * भक्त्या परमया वापि प्रपत्त्या वा महामुने * इत्याधिविरोधश्चेति ।

सिद्धान्तस्तु, * नास्त्यकृतः कृतेन * इत्यादि श्रुतिसध्रीचीनात् उपासकश्रीगजेन्द्रवृत्तान्तात् भक्तेः प्रपत्तिद्वारकत्वमवगम्यते । नच अव्यवधानश्रुतिविरोधः, * जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ! * इत्यादिवदुपपत्तेः । किंच किंचित्कारानपेक्षत्वविरोधः । प्रपत्त्यधिकारभूताहंकारनिवृत्तिपूर्वकशोकजनने विनियोगात् । नच विकल्पवचनविरोधः । कर्मयोगेन वा भक्तियोगेन वा इत्यादिवदुपपत्तेः ।

ननु, भक्तानामपि अन्ततो गत्वा प्रपन्नत्वे आवश्यके, प्रपत्तेश्च पारतन्त्र्याभिनिष्पत्तिरूपमुख्यमुक्तिप्रदत्वात् फलभेदसिद्धान्तो व्याकुप्येत ? इति चेत् । नैवम्; अशक्त्या स्वयत्नत्यागेन सिद्धोपायस्वीकारेऽपि स्वाभिमतफलस्याविलम्बेन सिद्ध्यर्थं किल सिद्धोपायः परिगृह्यते; अतः फलभेदसिद्धिरिति । प्रापकान्तराणां न सर्वान्प्रति उपायत्वम्, अपितु अज्ञान्प्रत्येव । तत्रापि अनिष्टाननुबन्धीष्टसाधनत्वम्, नतु मुख्येष्टसाधनत्वमित्येकः पक्षः तादृशमुख्यफलं प्रति उपायत्वं नास्ति; किंतु दत्तप्रतिदानरूपत्वमेवेति पक्षान्तरम् । तदपि नास्ति; प्रपत्त्यधिकारार्थत्वेन प्रपत्तिशेषत्वात् इति तुरीयः पक्षः इति ।

॥ इति प्रपत्तेः भक्तिद्वारकत्वाधिकारः ॥५॥

---

एतत्प्रकरणार्थसङ्ग्रहः ।

भक्तियोगाद्युपायस्स्यात् ज्ञानिनां तु विरोधतः । तत्तत्सुकृतमूलत्वात्, देहाद्युपाधिसंभवात् ॥
संसारिकप्रवृत्तित्वात् देहात्मभ्रममूलतः । देवतान्तरसंसर्गात् अप्राप्तत्वादसंभवात् ॥
तथा प्राप्तिविरुद्धत्वात् आचार्यैः परिग्रहात् । कालधर्मत्वराहित्यात् निषिद्धत्वादपायवत् ॥
तत्त्वदृक्दिव्यसूक्तेश्च भयशोकनिदानतः । अभियुक्तस्य वचनात् अपायस्साधनान्तरम् ॥
भक्तिस्तु व्याजमात्रं स्यात् अज्ञोप्यफलसाम्यतः । नायं नास्त्यकृतो नेति श्रुत्योपायनिषेधतः ॥
नवा व्याजत्वमप्यस्याः एष एवेति च श्रुतेः । ईश्वरेणैव दत्तत्वात् फलत्वाच्चैव निन्दनात् ॥

पितुर्गोदानतुल्यत्वात् उपायत्वेऽपि वा भवेत्। अभिचारेण तुल्यत्वात् निषेधाच्च विधानतः ॥

तत्त्वं स्वरूपमस्यास्तु प्रपत्तावधिकारता। दुष्करत्वेन शोकस्स्यात् गजेन्द्रस्येव सर्वतः ॥ इति ॥

[अष्टप्रकरणात्मके प्रथमपरिच्छेदे]

षष्ठप्रकरणं समाप्तम् ॥

कुरत्तूरम्मयन् तिरुवडिगळे शरणम्।

---

## ॥ अथ सप्तमप्रकरणप्रारम्भः ॥

### स्वगतस्वीकारानुपायत्वाधिकारः ॥१॥

134. उक्तं षष्ठे, भक्तेरनेकदोषदुष्टत्वादनुपायत्वेन भगवद्रक्षणस्य निरपेक्षत्वम्। सप्तमे, प्रपत्तेरनुपायतया तत्रापि निरपेक्षत्वमुच्यते। पूर्वाधिकारः प्रसंगात् संगतः। यदि शरणागतिः न दुष्टा तर्हि न्यासोऽपि तथा स्यात्। प्रपत्तित्वाविशेषात्, इत्यवान्तरसंगतिः।

ततः प्रथमं साधनप्रपत्तेः फलव्यभिचारात् असाधनत्वमुच्यते। संशयस्तु, न्यासस्थले भगवतो रक्षकत्वं सापेक्षम्? उत निरपेक्षमिति। तदर्थं स्वगतस्वीकारः साधनम्? उत नेति। तदर्थं तस्य फलव्यभिचारो नास्ति? उत, अस्तीति। * ओमित्यात्मानं युञ्जीत * मामेकं शरणं व्रज * इति विधिः नियतसाधनत्वाभिप्रायः उत प्रायिकत्वाभिप्रायः? तदर्थं भरतप्रपत्तौ व्यभिचारदर्शनम् स्वगतस्वीकारविधेः प्रायिकत्वाभिप्रायं कल्पयति? उत नेति। तदर्थं भरतप्रपत्तौ व्यभिचारः अङ्गवैकल्यप्रबलप्रतिबन्धकसद्भावादिना अन्यथासिद्धः? उत नान्यथासिद्धः? इति। यदा, फलव्यभिचारदर्शनमन्यथासिद्धम् तदा तस्य प्रपत्तिविधेः, फलसाधनत्वप्रायिकाभिप्रायकल्पकत्वाभावात् अव्यभिचारेण स्वगतस्वीकारस्थले भगवतो न निरपेक्षत्वसिद्धिः। यदा, भरतप्रपत्तौ व्यभिचारदर्शनमन्यथासिद्धम्। तदा तस्य प्रपत्तेः उक्ताभिप्रायकल्पकत्वात् व्यभिचारेण साधनत्वाभावात् तत्र भगवतो निरपेक्षत्वसिद्धिः। इति ॥

पूर्वपक्षस्तु; स्वगतस्वीकारस्य प्रायिकत्वोक्तिः अनुपपन्ना। * आत्मानं युञ्जीत * शरणं व्रज * इत्यादिविधिना मोक्षं प्रति नियतसाधनत्वाववोधनात्। अन्यथा, प्रपत्तिशास्त्रे अविश्वासात् तदप्रामाण्यापत्तेः। तुल्यन्यायेन भक्तिशास्त्रे कर्मकाण्डे च विधेः फलव्यभिचारशङ्कया वेदमात्राप्रामाण्यापत्तिः। नच भरतप्रपत्तौ व्यभिचारदर्शनात्तथात्वमिति वाच्यम्। तत्र अङ्गवैकल्यस्य वा प्रबलतरप्रतिबन्धकसद्भावस्य वा कल्पनीयत्वात् ॥ तस्मात्, व्यभिचारात् प्रपत्तिरनुपायः इत्यसङ्गतम्। इति ॥

सिद्धान्तस्तु। स्वगतस्वीकारो न साधनम्; फलव्यभिचारात्। स च भरतप्रपत्तौ दर्शनात्। नच तत्र अङ्गवैकल्यादिकं कल्प्यम्। सर्वज्ञत्वेन तदयोगात्। नच प्रतिबन्धकसद्भावः नित्यमुक्तत्वेन तदयोगात्। नच एवं सति वेदाप्रामण्यापत्तिः। काम्यसाधनेषु व्यभिचाराभावेऽपि भगवत्प्राप्तिसाधनेषु फलसंबन्धप्रायिकत्वस्य

कल्प्यत्वात् । नच स्मृत्या श्रुतिबाधः कल्प्यः । * नायमात्मा * नह्यध्रुवैः प्राप्यते * नास्त्यकृतः कृतेन * इत्यादिश्रुतेरपि सत्त्वात् । अतः उभयश्रुत्यविरोधेन साधनत्वं प्रायिकम् इति कल्प्यते । नच एवं सति निश्शङ्क-प्रवृत्त्यनुपपत्त्या अप्रामाण्यापत्तिः । यदा कदा चित् फलसंबन्धनियमेन प्रवृत्त्युपपत्तेः । * शिरसा याचतस्तस्य वचनं न कृतं मया * इत्युक्तौ पूर्वकृतप्रपत्तेः कालान्तरफलित्वं ज्ञायते । अत एव * नेहाभिक्रमनाशोऽस्ति * न जातु हीयते * इत्याद्युक्तिश्च । ततश्च ईश्वरस्य स्वतन्त्रयत्नान्वेयसाध्यत्वात् स्वगतस्वीकारः शरण्यहृदयानुसारित्वे, फलति, अन्यथा विफलति, इति व्यभिचारादहेतुरिति ॥

खड्गहस्तुः—

स्वीकारस्स्वगतोऽहेतुः व्यभिचारस्य दर्शनात् । [ श्रुतिस्मृतिपुराणेषु ] विधिः प्रायिकगोचरः ॥
तथाप्यस्य प्रवृत्तिस्स्यात् अत्यन्ताभावलोपतः । इति ॥

॥ इति स्वगतस्वीकारानुपायत्वाधिकारः ॥ १ ॥

---

## अथ साध्यभक्तिनिरूपणाधिकारः ॥ २ ॥

ननु ! भक्त्युपाये ये दोषा उक्ताः ते प्रपत्त्युपायेऽपि भवन्ति । साध्यभक्तित्वेन प्रपन्नेनापि भक्तेरनुष्ठेयत्वात् । इत्यत्राह (प्रपत्त्युपाय) इति । अत्र (प्रपत्त्युपाय) इति, शङ्ककवाक्यानुवादः । संगतिः स्फुटा ॥ संशयस्तु, भक्तिविषयोक्ता दोषाः प्रपत्तावपि प्रभवन्ति ? उत नेति ॥ प्रपत्तेरुत्तरवृत्त्यात्मिका साध्यभक्तिः वेदान्तविहितसद्विद्यादिरूपा ? उत अन्येति । तदर्थम्, तादृशभक्त्यन्तरसत्त्वे प्रमाणमस्ति ? उत नेति ॥ यदा नास्ति तदा सद्विद्यादेरेव साध्यभक्तिरेव साध्यभक्तित्वेन प्रपत्तावप्युक्तदोषापत्तिः । यदि अतिरिक्तभक्तिसत्त्वे प्रमाणमस्ति ? तदा तस्या एव प्रपत्तौ साध्यभक्तितया अन्वयात् न प्रपत्तौ भक्त्युक्तदोषान्वयः, इति ॥

पूर्वपक्षस्तु, भक्तिसद्भावे वेदान्तानामेव प्रमाणत्वात् तेषु च कर्माद्यङ्गकध्रुवानुस्मृतिरूपप्रत्यक्षतापन्न-भक्तिपर्यवसितनियतगुणविग्रहभूतिविषयत्रैवर्णिकाधिकारसद्विद्यादेरेव प्रतिपादनात् तदतिरिक्तभक्तिव्यक्तेः अप्रतिपादनाच्च सैव प्रपत्तावपि साध्यत्वेनाङ्गीकार्या ॥ नच स्मृतिपुराणादिषु * मन्मना भव मद्भक्तः * इत्यादिका अन्यापि भक्तिः प्रतिपाद्यते इति वाच्यम् । तेषामुपबृंहणत्वेन सद्विद्यादेरेव तत्र विशेषणात् । अन्यथा * नान्यः पन्थाः * इत्यादिश्रुतिविरोधाच्च । तस्मात् सद्विद्यादेरेव साध्यभक्तित्वेन प्रपत्त्यनुग्राहकत्वात्; तदुक्तदोषतौल्यमिति ॥

सिद्धान्तस्तु न तावत् प्रपत्तिस्वरूपे उक्तदोषसंभवः; आत्मयाथात्म्यज्ञाननिवृत्तिकार्यत्वेन तदयोगात् । तदुत्तरभाविनी साध्या भक्तिरपि न वेदान्तविहितसद्विद्यादिका, किन्तु सर्वाधिकारा द्रव्यादिसर्वनियमरहिता, सर्वाधिकारभक्त्यङ्कुरल ग्ना, अनन्यप्रयोजना, आशारूपा । नच ईदृशायां प्रमाणाभावः, * पत्रं पुष्पम् * अन्यत्पूर्णात् * इ त्यादिस्मृतिवचनस्य प्रमाणत्वात् । नच * पत्रं पुष्पम् * इत्यादेरपि वेदान्तोपबृंहणतया

सद्विद्याविषयत्वम् । * स्त्रियो वैश्यास्तथा शूद्रास्तेपि यान्ति परां गतिम् * इति सर्वाधिकारस्मरणविरोधात् । उपबृंहणं चेत् प्रत्यक्षश्रुतिविषयमेव इति न ह्यस्ति नियमः ? सर्वाधिकारसुशकभक्तिविशेषप्रतिपादकानुमानिक-श्रुतिमूलत्वस्यापि संभवात् । ननु, फलप्रदत्वौ[पयिक]पाधिकप्रीतिविशेषजननार्थं हि साध्यभक्त्यनुष्ठानम् ? सा च भक्तिः नियतद्रव्यप्रकारविशेषविशिष्टापरभक्त्यादिपर्यन्ततादृशप्रीतिजनिका प्रमाणसिद्धा । * दृष्टे परावरे क्षीयन्ते * इत्यादिश्रुतेः, इति चेन्न । ईश्वरस्य परिपूर्णत्वेन तादृशभक्तिगौरवानपेक्षणात् । * नचेच्छति * इत्युक्तेः तदपि गौरवं नापेक्ष्येत, इति न वाच्यम् । तत्र अनन्यप्रयोजनत्व[अ?]विरहात् । अन्यथा एवं विषयविभागाभावे भक्तिलाघवगौरवविधायकशास्त्रयोः विरोधापत्तेः । तस्मात् प्रपत्तिवत् तदुत्तरभक्तेरपि आत्म-याथात्म्यज्ञानकार्यत्वात्, सुकरत्वाच्च, न भक्तिविषयोक्तदोषावकाशः, इति ॥

सङ्ग्रहस्तु:—

प्रपत्त्यपेक्षिता भक्तिः न सद्विद्यादिका पुनः । स्मृत्यादिसिद्धा सर्वार्हा सुशकाऽन्याऽप्रयोजना ॥

पूर्णत्वात्पुरुषेशस्य भक्तेश्चानन्यभावतः । साधनान्तरभक्त्या या प्रीतिस्तत्रापि जायते ॥

॥ इति साध्यभक्तिनिरूपणाधिकारः ॥२॥

---

## अथ स्वगतस्वीकारापचारत्वनिरूपणाधिकारः ॥ ३ ॥

146. नन्वेवमपि अभिमतकालव्यभिचारेऽपि फलाव्यभिचारात्, उपायत्वेतितिष्ठत्येवेत्यत्राह (सर्वाप-राध) इति । सङ्गतिः स्फुटा । संशयस्तु, स्वगस्वीकारः उपायो भवति ? उत, नेति । तदर्थम्, अस्य, अपराधकोटिस्संभनि ? उत, नेति । तदर्थम्, भाष्यकाराद्यनुष्ठितक्षामणमुपपद्यते ? उत नेति । यदा, नोप-पद्यते, तदा, प्रायश्चित्तीयत्वादर्शनेन पापकोट्यघटितनयोपायत्वम् । यदा क्षामणं संगतम्, तदा प्रायश्चित्ती-यत्वेनापराधकोटिघटिततयानुपायत्वमिति ॥

पूर्वपक्षस्तु, स्वगतस्वीकारस्य अपराधत्वोक्तिरयुक्ता, अनिषिद्धत्वात्, तत्करणे प्रायश्चित्ता-विधानाच्च । प्रत्युत सर्वापराधप्रायश्चित्तत्वं प्रपत्तेः श्रूयते; * तस्मात् न्यासमेषां तपसामतिरिक्तमाहुः * इति । नच भाष्यकारानुष्ठितक्षामणात् अपचारत्वावगमः, उक्तबाधकबलेन तस्य अन्यतात्पर्यादिति ।

सिद्धान्तस्तु । स्वगतस्वीकारः आपचार एव; तदनुष्ठाय भाष्यकारेण प्रायश्चित्तस्यानुष्ठितत्वात् नच तदन्याभिप्रायम्; स्वारसिकत्वे बाधकाभावात् । लोके व्यभिचारिप्रार्थनादृष्टान्तबलेन तदुपपत्तेः । नच अनिषिद्धत्वं तथात्वे; * धर्मान्परित्यज्य * इति स्वगतस्वीकारस्यापि निषेधात् । * मन्मना भव * इति अव्य-वहितश्लोके स्वगतस्वीकारस्य विहितत्वेन धर्मशब्दासंकोचाच्च तन्निषेधोपपत्तेः । नच वेहितस्य निषेधायोगः । कर्मयोगादिवत् अनिष्टफलकत्वसूचनार्हत्वात् । नच श्रुतफलातिरिक्ततात्पर्यविषयफलासंभवः । अत्यन्तपारतन्त्र्ये स्थापनस्य शास्त्रहृदयत्वात् । अतः स्वगतस्वीकारस्यापि प्रापकान्तरतुल्ययोगक्षेमत्वात् अपायत्वं दुष्परिहरम् । [नच] तर्हि भाष्यकारेण षडङ्गप्रपत्त्यनुष्ठानासंभवात क्षामणानुपपत्तिः । केवल... कारिविशेषणभूतोपाय

प्रार्थनायाश्शरण्यहृदयानानुसारित्वे सति अपचारत्वसंभवे, साधनभूतगोप्तृत्वप्रार्थनायाः रक्षकहृदयाननुसारित्वे अपचारत्वं किंपुनर्न्यायसिद्धम्, इत्यभिप्रायेण विरक्तभाष्यकाराद्युदाहरणोपपत्तेः ॥

वस्तुतः शरण्यहृदयाननुसारे, शरणागतेरपि फलव्यभिचारः, अपराधकोठिघटितत्वं च समानम्; षडङ्गस्य तु साधनत्वात् कर्मयोगादितुल्यत्वम्, इत्यभिप्रायेण आह (कृपैयाले) इति तत्रापि रक्षकहृदयाननुसारे भवति न षडङ्गन्यासः फलति । तत्फलभूतं पारतन्त्र्यं शरणागतिफलभूतात्यन्तपारतन्त्र्यापेक्षया दुर्बलम् । साधनदशायां स्वस्वीकारातिरिक्तस्वयत्नत्यागस्य फलदशायां कैङ्कर्यनिष्ठायाश्च सत्त्वेऽपि स्वभोक्तृत्वपरित्यागात् । तस्य च केवलभोग्यत्वलक्षणपुरुषार्थकाष्ठान्वयविरहादनर्थत्वम्, इत्यर्थः ।

सङ्ग्रहस्तु :—

गोप्तृत्ववरणं, गोप्तृहृदयानानुसारि चेत् । अपराधस्य कोटौ स्यात् तद्वाग प्रार्थनाविधिः ॥

यदाऽतदनुसारि स्यात आत्मनाशः फलं भवेत् । प्रापकान्तरतुल्यत्वं षडङ्गस्य हि विद्यते ॥ इति ।

॥ इति स्वगतस्वीकारापचारनिरूपणाधिकारः ॥ ३ ॥

[ अष्टप्रकरणात्मके प्रथमपरिच्छेदे ]

सप्तमप्रकरणं समाप्तम् ॥

कुत्रत्तूरैय्यन् तिरुवडिगळे शरणम् ।

---

## ॥ अथ अष्टमप्रकरणप्रारम्भः ॥

### अथ परगतस्वीकारसमर्थनाधिकारः ॥ १ ॥

146. ननु, गोप्तृत्वशरणवरणयोः वरणीयचित्तानुसारित्वाभावे फलव्यभिचारः । अपचारकोटिनिवेशश्च । तच्चित्तानुसारित्वे शरणवरणस्य मुख्यपारतन्त्र्यफलकत्वं गोप्तृत्ववरणस्य अमुख्यपारतन्त्र्यफलकत्वम् । अतः स्वगतस्वीकारस्याप्रयोजकत्वात् परस्वीकार एव सर्वत्र प्रयोजकः । इत्युक्तम् ॥ [तन्न] परगतस्वीकारे प्रमाणाभवात् इत्याशङ्क्याह (इत्तर्थत्तै) इत्यादि । प्रथमोक्तपारतन्त्र्यात् चरमोक्तं पारतन्त्र्यं प्रबलमित्यर्थः ॥

अत्र संगतिः प्रासंगिकी । संशयस्तु; कृपाकृतस्वीकारस्य प्रयोजकत्वात परगतस्वीकारव्यतिरेकेण स्वातन्त्र्यकृतः परगतस्वीकारोऽस्ति ? उत, नेति । तदर्थम् * नायमात्मा * इति श्रुतिः तत्र प्रमाणं भवितुमर्हति ? उत, नेति । तदर्थम् * सर्वज्ञोऽपि हि * इत्यादिस्मृतिः श्रुतेस्तत्परतां प्रतिबध्नाति ? उत, नेति । तदर्थम्, गुहादिस्वीकारस्मृतेः प्रायिकत्वमवगमयति ? उत, नेति । तदर्थम्, ईश्वरस्य स्वातन्त्र्येण चेतनस्वीकारे पुरुषपुरस्करणे प्रमाणमस्ति ? उत, नेति । यदा प्रमाणमस्ति, तदा चेतनस्वीकारसंभवेन तस्य स्मृतेरपेक्षासापेक्षत्व-प्रायिकत्वकल्पनायोगात् स्मृत्यनुसारेण श्रुतावपि [स्वगत-?] कृतस्वीकार एव प्रतिपाद्यते इति भावः ॥ यदा, ईश्वरस्य चेतनस्वीकारे पुरुषकारपुरस्कारसद्भावे प्रमाणं नास्ति, तदा गुहादीनां स्वतन्त्र्येण स्वीकृतत्वसंभवात् तेन स्मृतिवचनस्य अपेक्षासापेक्षत्वप्रायिकत्वकल्पकत्वेन श्रुतेः स्वारसिकार्थपरत्वेबाधकाभावात् परगतस्वीकारसिद्धिरिति ॥

पूर्वपक्षस्तु। केवलस्वातन्त्र्यकृतपरगतस्वीकारः, अप्रामाणिकः। नच, * नायमात्मा * इत्यादि श्रुतिः प्रमाणम्। * यमेवैष वृणुते * इत्यत्र चेतनापेक्षाकण्ठोक्त्यभावेऽपि यच्छब्दाभिप्रेतत्वस्य कल्प्यत्वात्। अन्यथा भगवतो वैषम्यादिदोषापत्तिः। * सर्वज्ञोऽपि हि विश्वेशस्सदा कारुणिकोऽपि सन्। संसारतन्त्रवाहित्वात् रक्ष्यापेक्षां प्रतीक्षते * इत्यादि स्मृतिविरोधाच्च ॥ पुरुषापेक्षाविरहे स्वीकारस्य अपुरुषार्थत्वप्रसंगश्च। न च मारुतिगुहस्वीकारः अपेक्षानिरपेक्षो दृष्टः इति वाच्यम्। तत्राप्यपेक्षायाः कल्प्यत्वात्। अन्यथा मादिस्वीकारस्यैवानुपपत्तेः। अनादिकालमारभ्य कर्मानुगुणं दण्डयतः चेतनानां भीतानां वशीकरणानुपपत्तेः। न च ईश्वरः पुरुषकारं पुरस्कृत्य चेतनमङ्गीकरोति इति वाच्यम्। पुरुषकारशास्त्रस्य सर्वस्य पुरुषकारपुरस्कारस्य चेतनकर्तृकत्वपरतावगमात् ॥ अतः स्वापराधभीतेन पुरुषकारं पुरस्कृत्यापेक्षिते सति पश्चादुद्बुद्धः कृतस्सर्वेश्वरः चेतनं स्वीकरोति इति वक्तुमुचितम्; इति ॥

सिद्धान्तस्तु ॥ केवलस्वातन्त्र्यकृतः चेतनस्वीकारः भगवतस्संभवति। * यमेवैष वृणुते * इति वरणीयस्य अनियतव्यक्तित्वप्रतीतेः। न च ईश्वरः स्वातन्त्र्येण यं कं चन स्वीकरोति चेत् वैषम्यापत्तिरिति वाच्यम्; तादृशस्वातन्त्र्यस्य धर्मिग्राहकमानसिद्धत्वेन सिद्ध्यसिद्धिव्याघातात्। इतिहासश्रेष्ठश्रीरामायणवृत्तान्तोपबृंहितेन * नायमात्मा * इति श्रुतिवाक्येन धर्मिग्राहकमानेन निरपेक्षतया स्वातन्त्र्येण स्वीकारस्य सिद्धत्वात् ॥ ननु ध्रुवानुस्मृतेः भक्तिरूपत्वविधानतात्पर्ये मेधाशब्दस्य संबोधनं भक्तिरूपापन्नत्वस्यापि वाचकत्वात्। ध्रुवानुस्मृतेः भक्तिरूपापन्नत्वप्रवचनश्रुतशब्दयोः वैयर्थ्यापत्तेः। नहि श्रवणमननयोः भक्तिरूपत्वसाधनं यतः संभवति यदित्यत्र * अश्रुतस्य प्रियतमः इति विशेषणस्य कल्पनागौरवं च। 'यम्' इत्यत्रैवेश्वरप्रियविषयीकृतत्वे सिद्धे 'वृणुते' इति पदानर्थक्यं च ॥ न च एवम्, अस्य भक्तिरूपत्वविधायकत्वाभावे ध्रुवानुस्मृतेः भक्तिरूपत्वासिद्धिः इति वाच्यम्। विजिज्ञासितव्यः, निदिध्यासितव्यः. इत्यादि सन् प्रत्ययवाक्यादपि तत्सिद्धेः ॥ तस्मात् परभक्तिप्रपत्तिरूपरक्ष्यापेक्षाद्वयनैरपेक्ष्येणेश्वरस्य स्वातन्त्र्यकृतचेतनस्वीकारः अस्मिन्वाक्ये उच्यते। मेधाशब्दः भक्तिदशापन्नध्रुवानुस्मृतिपरः प्रवचन श्रुत शब्दाभ्यां श्रवणमननाभ्यां स्वात्मनि एवमेव इति शास्त्रार्थप्रत्यभिज्ञानरूपमध्यवसायगर्भं प्रपत्त्यात्मकमभिधीयते ॥

अथवा ब्रह्मणि प्रत्यक्षस्यासंभवात् श्रवणमननस्मरणानां संभावितानां ज्ञानावान्तरविशेषेण मननापेक्षत्वमुच्यते। न च एवं सति भाष्यकारैः भक्तिपरत्वेन योजना विरुद्ध्यते इति वाच्यम्। तेषां भक्तिशास्त्रप्रवर्तनाधिकृतत्वेन चरमश्लोकवत् तथा व्याख्यानोपपत्तेः। एवं च भक्तिप्रपत्तिरूपरक्ष्यापेक्षाप्रायिकत्वाभिप्रायम् * सर्वज्ञोऽपि हि * इत्यादिस्मृतिवचनम् ॥ न च चेतनापेक्षाभावे वरणस्यापुरुषार्थतापत्तिः। अत्र भगवत एव फलित्वेन चेतनस्य तदभावात् ॥

इति परगतस्वीकारसमर्थनाधिकारः ॥ १ ॥

---

151 ननु, एवमपि ईश्वरस्वातन्त्र्येण चेतन स्वीकारो न घटते; चेतनस्य भीरुत्वात इत्यवाह (इवन्) इत्यादि ॥

153 पुरुषकारपुरस्कारः उपपन्नश्चेत् स्वरूपहानिरित्याह [सिद्धियुमत्ताले इति]

159 ननु, भक्तिपारवश्यप्रपन्नेषु पराङ्कुशादिषु ईश्वरस्य पुरुषकारपुरस्कारः अप्रसिद्धः इत्यवाह (अधिकारि) इति ॥

स्वातन्त्र्येणेश्वरः कं चित् स्वीकरोति नचेच्छया ।
* नायमात्मा * इति वेदान्तात् रामायणविशेषणात ॥ १ ॥
तमभ्यभाष सौमित्रे!' इत्युक्तेरीश्वरस्य च ।
घटकानां पुरस्कारो ह्यस्ति जीवपरिग्रहे ॥ २ ॥
अतोऽशक्यत्वशैथिल्यशङ्का तत्र न युज्यते ।
धर्मिग्राहकसिद्धत्वात् स्वातन्त्र्यं नापि दूषणम् ॥ ३ ॥
प्रायिकत्वपरं रक्ष्या लोकास्मृत्यादिकं भवेत् ।
ईश्वरस्य फलित्वाद्वा पश्चाद्रक्ष्यव्यपेक्षणात् ॥ ४ ॥
अपुमर्थत्वशङ्कापि नावकाशं लभेत हि ॥ इति ॥

इति श्रीवचनभूषणमीमांसायां प्रपत्तिपरिच्छेदात्मके प्रथमपरिच्छेदे
अष्टमप्रकरणं समाप्तम् ॥

अथ वृत्तिपरिच्छेदात्मके द्वितीयपरिच्छेदे

## ॥ प्रथमप्रकरण प्रारंभः ॥

### अथ पारतन्त्र्यभोगविरोधित्वाधिकारः ॥ १ ॥

163 एवं भक्तिप्रपत्तिलक्षणयोः पुण्यपापयोः: स्वभोक्तृत्वलक्षणस्वातन्त्र्याभिनिष्पत्तिफलकत्वात् भगवद्भोगविरोधित्वेन त्याज्यत्वमुक्तम् ॥ तत्प्रसंगेन परगतस्वीकारफलभूतपारतन्त्र्याभिनिष्पत्तेरपि परानुभवविरोधित्वात् अपुरुपार्थत्वमाशङ्क्य सिद्धान्ते फलस्वरूपं शोधयति (पुण्यम्) इत्यादि ॥ संगतिः प्रासङ्गिकी। संशयस्तु, पारतन्त्र्यस्य भोगविरोधित्वं संभवति ? उत, नेति ॥ तदर्थम्, कर्मकृतं कादाचित्कानिष्टत्वं भोग्येषु संभवति ? उत नेति ॥ यदा न संभवति, तदा भोगविरोधित्वं न शोभते। यदा संभवति; तदा तस्य भोगविरोधित्वं संभवति। इति पूर्वोत्तरयोः फलफलिभावः ॥

पूर्वपक्षस्तु, पारतन्त्र्यस्येश्वरानभिमतत्वं नैव युज्यते; तन्निष्पत्तेः सौहार्दमारभ्येश्वरेणैव साधितत्वात्। न च, सर्वस्यापि कादाचित्कप्रियतया पारतन्त्र्यमपि कदाचित् तस्याप्रियं भवति, इति वाच्यम् ! कादाचित्कप्रियत्वस्य कर्मकृतत्वेन तदयोगात् ॥ नित्यात्मालङ्कारभूतस्य नित्यपारतन्त्र्यस्य ज्ञानानन्दादिवत नित्यभोग्यत्वादिति ॥

सिद्धान्तस्तु । अलङ्कारभूतहारादेः चाक्षुषप्रीतिहेतुत्वेऽपि :आलिङ्गनविरोधित्वात् अकर्मनिमित्तमेव प्रतिकूलत्वं दृष्टम् तद्वत् केवलपारतन्त्र्यस्यापि चेतनभोगविरोधित्वं दृष्टम् । कुसुमादेः सौरभ्यवत् भोक्तृत्वस्य चेतनस्वरूपभोग्यतावहत्वात् ।। तस्मात् केवलभोक्तृत्वमपि अपुरुषार्थः ।। केवलपारतन्त्र्यमपि अपुरुषार्थः । किं तु भोक्तृत्वे सति पारतन्त्र्यम् । न च विरोधो भोक्तृत्वे, अस्यापि तद्भोगार्थकरणरूपत्वात् इति ।।

इति पारतन्त्र्यभोगत्वविरोधित्वाधिकारः ॥

अथ परगतस्वीकारसमर्थनाधिकारः ॥२॥

164 एवं स्वमते इष्टप्राप्तेः शोधितत्वात् प्रसंगादनिष्टनिवृत्त्यंशमपि शोधयति (गुण) इति । अत्र प्रसक्तानुप्रसक्त्या संगतिः ।। संशयस्तु, पराङ्कुशादीनां विग्रहः ईश्वरभोग्यो न भवति ? उत भवतीति; तदर्थम् ※ अनश्नन्नन्योऽभिचाकशीति ※ इति चेतनकर्मानुगुणं परिणते सर्वत्र प्राकृते ईश्वरस्य भोगसारं भवति ? उत, नेति । तदर्थम्, तत्त्वदर्शिवचनम्, ज्ञानिदेहव्यतिरिक्तप्राकृतभोगनिषेधपरत्वं श्रुतेरवगमयति ? उत नेति । तदर्थम् पराङ्कुशादीनां देहस्थितिः कर्मायत्ता ? उत, ईश्वरायत्ता ? इति । तदर्थम्, तादृशनिरतिशयप्रीतिः ईश्वरस्य संभवति ? उत नेति ।। यदा न संभवति, तदा तच्छरीराणां ईश्वरेच्छास्थाप्यत्वात्, प्राप्यत्वाभावे कर्मनिमित्तत्वसंभवात्, तत्त्वदर्शिवचनम्, श्रुतेः ज्ञानिदेहव्यतिरिक्तप्राकृतभोगनिषेधपरत्वं नावगमयति, इति ज्ञानिविग्रहः ईश्वरस्य भोग्यो न भवति ।। यदा ज्ञानिषु ईश्वरस्य निरतिशयप्रीतिस्संभवति तदा, तच्छरीराणां ईश्वरेच्छास्थाप्यत्वात् कर्मनिमित्तत्वाभावेन तत्वदर्शिवचनम्, श्रुतेस्संकोचकम् इति ईश्वरस्य ज्ञानिविग्रहानुभवस्संभवति इति फलफलिभावः ।।

पूर्वपक्षस्तु; ज्ञानिविग्रहस्य ईश्वरभोग्यत्वमनुपपन्नम् ※ प्रियो हि ज्ञानिनोत्यर्थम् ※ इत्यादौ आत्मस्वरूपस्य प्रीतिविषयत्वोक्त्या मांसासृगादिमयदेहस्य भोग्यतानुपपत्तेः देहारम्भस्थित्योः कर्मकृतत्वेन चेतनः कर्मानुगुणं परिणते प्राकृते ईश्वरस्य भोगानपेक्षायाः ※ अनश्नन् ※ इत्यादिसिद्धत्वाच्च ।। न च तत्त्वदर्शिवचनात्तत्सिद्धिः । प्रत्यक्षश्रुतिबाधेन तद्वचनस्य भगवत्प्रीतिप्रशंसापरत्वात् । न चेश्वरायत्तत्वं तद्विग्रहस्य । आरम्भकप्रारब्धनाशे अन्येन स्थित्ययोगात् ।। न चेश्वरस्य सत्यसंकल्पत्वात् तद्विग्रहस्थापनोपपत्तिः । ज्ञानिसंबन्धिनि हेये देहेऽपि प्रीतिः पर्यवस्यति इत्यत्र मानाभावात् । तस्मादिदमनुपपन्नमिति ।।

सिद्धान्तस्तु; ज्ञानिविग्रहस्य भगवद्भोग्यत्वमुपपद्यत एव ※ पत्रं पुष्पं फलं तोयम् ※ इत्यादिभिः परम्परया ज्ञानिसंबन्धिनामपि प्राकृतद्रव्यविशेषाणां भगवद्भोग्यतायाः प्रतिपादितत्वेन साक्षात्संबन्धिनो विग्रहस्य तद्भोग्यतायाः कैमुत्यसिद्धत्वात् ।। अनुगृहीतं च श्रुतप्रकाशिकायाम् "पुण्यक्षेत्रादिषु भगवतः प्रीतिः स्वस्मिन् प्रीतिमत्पुरुषवरणार्था पत्रपुष्पादिषु तत्संबन्धनिबन्धनेव" इति ।। न चैवम् ※ अनश्नन् इत्यादिप्रमाणविरोधः । तेषां प्रमाणानां कर्मफलभोगनिषेधमात्रपरत्वात् । अन्यथा भगवतः सर्वकर्मसमाराध्यत्वभङ्गप्रसङ्गात् । एतेन प्राकृतद्रव्यस्य भगवद्भोग्यत्वासंभवशङ्कापि प्रत्युक्ता ।। ※ वपापरिमलोल्लासवासिताधरपल्लवम् ※ इति यागीय-

मांसादीनामपि भगवद्भोग्यतायास्संप्रतिपन्नत्वात् ॥ न च शास्त्रबलात् भगवतो वपादिभोक्तृत्वसिद्धावपि ज्ञानिविग्रहभोग्यत्वमप्रामाणिकमेवेति वाच्यम् ॥ बाधकविरहे सति पूर्वोक्तकैमुतिकन्यायस्यैव तत्र प्रमाणत्वात् ॥ न च ❀ विशुद्धदन्तवसनो निर्मलीकृतविग्रहः । शुद्धो दक्षः प्रसन्नात्मा यथालब्धैस्समर्चयेत् ❀ इत्यादिभिः बाह्याभ्यन्तरशुद्धिविशिष्टस्य भूतशुद्ध्यादिनिर्मलीकृतविग्रहविशिष्टस्यैव भगवदाराधनार्हत्वोक्तिबलेन प्राकृतज्ञानिविग्रहस्य भगवदनभिमतत्वसिद्ध्या तद्भोग्यत्वानुपपत्तिः इति वाच्यम् । तेषां शास्त्राणामत्यर्थप्रियत्वरहिताधिकारिमात्रविषयत्वात् ॥ लोके विषयप्रवणानां स्वाभिमतविषयौज्ज्वल्यकराभरणानभिमतेः, तदनौज्ज्वल्यकरमलाभिमतेश्चानुभविकतया भगवतो भक्तविषये तादृशाकारवैधुर्योक्तौ तस्य भगवत्प्रियतमत्वस्यैवासिद्धिप्रसंगात् ॥ न हि दोषे गुणबुद्ध्यभावे सति प्रीत्यतिशय उपपद्यते ? यथोक्तं शेषलक्षणश्रुतप्रकाशिकायाम् "संबन्धविशेषान्वितेषु प्रीतिः स्नेहः; यस्य विपाकाः अस्थानभयशङ्कित्वम्, दोषानवभासः दोषेषु गुणत्वबुद्धिः इत्यादयः" इति ॥

एतेन, दोषे गुणत्वबुद्धेः दोषरूपतया भगवति तदसंभवोक्तिः दूरोत्सारिता, स्नेहविपाकरूपायास्तस्या गुणन्तर्गतत्वेन भगवति तदभावे तस्य निखिलकल्याणगुणाकरत्वभङ्गप्रसंगात् ॥ न च, कामिनीकामुकयोः दोषभोग्यत्वपर्यन्तस्नेहदर्शनमात्रेण लोकविलक्षणयोः भगवद्भक्तयोरपि तद्वत्तावर्णनमनुपपन्नमिति शङ्क्यम् । ❀ या प्रीतिरविवेकानां विषयेष्वनपायिनी ❀ इति भगवद्भक्तयोः कामिनीकामुकपरस्परप्रीतितुल्यप्रीतिमत्तायाः प्रमाणसिद्धत्वात् । उकारेण तयोः भर्तृभार्याभावसंबन्धाभिधानात् ❀ पतिं विश्वस्य ❀ इत्यादिभिः तद्दृढीकाराच्चानुपपत्त्यभावात् । किं च जनकतनयाकृतस्य स्वमलापनयनस्य ❀ दीपो नेत्रातुरस्येव प्रतिकूलाऽसि मे दृढम् ❀ इति भगवद्रोपजनकत्वोक्त्या तद्बलेनापि मलरूपज्ञानिविग्रहस्य भगवद्भोग्यत्वसिद्धिर्दुर्वारैव ॥

न च भगवतः स्वदिव्यमहिषीविषये तादृशप्रावण्यसंभवेऽपि भक्तविषये तन्नसंभवति इति शङ्क्यम् । ❀ त्वयि किंचित्समापन्ने किं कार्यं सीतया मम ❀ देशे देशे कलत्राणि ❀ त्वां वा सीते सलक्ष्मणाम् ❀ इत्यादिना भक्तानां दिव्यमहिष्यपेक्षया निरतिशयप्रीतिपात्रत्वसिद्धेः । न चैवं भगवद्बुद्ध्या ज्ञानिविग्रहस्य भोग्यत्वसंभवेऽपि चेतनबुद्ध्या तस्य हेयत्वावश्यकत्वेन न प्रकृतार्थसिद्धिरिति वाच्यम् । चेतनबुद्ध्याऽपि भगवदिच्छाया एवानुवर्तनीयत्वेन विरोधाभावात् ॥

❀ अस्नाता द्रष्टुमिच्छामि भर्तारं राक्षसाधिप ❀ इति सीतावचनेन सर्वात्मना शेषिचित्तानुवर्तनावश्यंभावस्य दर्शितत्वात् ॥ अपि च श्रीद्रविडसामदशमशतके सप्तमदशके श्रीपराङ्कुशमुनिभिः स्वजिहासितमलमयदेहविषये भगवतो निरतिशयाभिनिवेशविशेषाणां सप्रपञ्चमनुगृहीतत्वेन तद्बलेनापि ज्ञानिविग्रहस्य भगवद्भोग्यत्वसिद्धिर्दुर्वारैव ॥ न च, तस्य ❀ अनश्नन्नन्यः ❀ इत्यादिप्रत्यक्षश्रुतिविरोधपरिहारायान्यथानयनमावश्यकमिति वाच्यम् ॥ ❀ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ❀ इत्यादिषु तस्य श्रुतिवचनस्य कर्मफलभोगमात्रपरताया दर्शितत्वेन तद्विरोधाभावात् । न च कर्मारब्धदेहभोगस्य कर्मफलभोगरूपत्वमवर्जनी-

यम्; तथा सकललीलाविभूतिमनुभवतां मुक्तानां कर्मफलानुभवप्रसंगात् ॥ ❀ उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ स्वमुद्दिश्य ❀ इति शेषित्वेन लीलाविभूतिभोक्तुर्भगवतः तत्प्रसंगाच्च ॥

अथास्तु वा ❀ अनश्नन्नन्यः ❀ इत्यादेः प्राकृतभोगसामान्यनिषेधवाचित्वम्। तथाऽपि तस्य निरुक्तद्रामिडसामवचनबलादेवान्यथा नेयत्वेन ज्ञानिविग्रहस्य भगवद्भोग्यत्वसिद्धिर्दुर्वारैव ॥ ज्ञानिविषयद्रामिडसामवचनस्य विशेषवचनरूपत्वेन प्रबलतया ❀ अनश्नन्नन्यः ❀ इति सामान्यनिषेधस्य ज्ञानिविग्रहव्यतिरिक्तविषयताया अवश्याश्रयणीयत्वात् ॥ सर्ववेदमूलभूतप्रणवमन्त्रशेषमन्त्ररत्नविवरणभूतद्रामिडसामवचनस्य भर्तृभार्याभावसंबन्धग्राहकप्रणवमध्यमाक्षरात्मकप्रबलप्रमाणानुगृहीतत्वेन प्रबलत्वाच्च ॥ ❀ बहु स्यां प्रजायेय ❀ करणं कारणं कर्ता विकर्ता ❀ व्यसनेषु मनुष्याणां भृशं भवति दुःखितः। उत्सवेषु च सर्वेषु पितेव परितुष्यति ॥ ❀ सं बाहुभ्यां नमति ❀ तद्विश्वमुपजीवति ❀ स एकाकी न रमेत ❀ इति प्राकृतजगद्विषये भगवतस्संश्लेषविशेषादिसुखदुःखताया बहुप्रमाणसिद्धत्वेन भूयसा न्यायेन ❀ अनश्नन ❀ इत्यादेरन्यथानयनावश्यंभावात् तथा संकोचसहस्य तस्यैवान्यथा नेयत्वाच्च ॥

ननु, द्रामिडसामनिरुक्तदशकोपान्त्यगाथायां भगवता पराङ्कुशेन बलात्कारेण मलमयस्वदेहात्मकदोषनिवृत्तिसंपादनस्य दर्शिततया तद्बलेन ज्ञानिविग्रहस्य वस्तुनो भोग्यत्वाभावसिद्ध्या तद्बलात् तद्भोग्यत्वसिद्धिवचनं विरुद्धमिति चेन्न। तत्र पराङ्कुशार्यैः स्वविग्रहस्य स्वेन सहैव परमपदप्रापणमात्रस्यैव निवारितत्वेन तद्भोगप्रतिषेधाभावात् ॥ न तावन्मात्रं कृतम्; किमिति चेत्, श्रूयतामवधानेन। एतत्पूर्वदशकप्रथमगाथायां हि परमपदप्रापणविषये भगवतः स्वरुचिमन्तरेण केवलं पराङ्कुशार्यनियमनानुविधानमेव कर्तव्यम्, इति व्यवसायो दर्शितः। तदभिज्ञेन च पराङ्कुशेन तद्व्यवसायानुसारेण भगवद्रुचिविशेषानुविधानं हित्वा स्वविग्रहविश्लेषपूर्वकं स्वस्य परमपदप्रापणं स्वेच्छयैव नियमितम्। अन्यथा हि केवलपराङ्कुशविधानानुविधानमेव मया कर्तव्यम्, इति भगवन्मनोरथो भग्नस्स्यात् ॥ इदमत्र व्याजमात्रम्। परमार्थतस्तु; भगवतः स्वविग्रहविषयकातिमात्रप्रावण्यस्य सकलेतरमुमुक्षुमुक्तनित्यदिव्यमहिषीवर्गाद्यन्तोपेक्षाविस्मरणाद्यापादकत्वेन महानर्थपर्यवसानमाशङ्क्य भगवद्विषयकप्रेमातिशायिना स्वस्वरूपविस्मरणपूर्वकं पराङ्कुशेन बलात्कृत्य स्वविग्रहवैराग्यं भगवति आपादितम्। इति न कोऽपि विरोधः ॥ नैतावता ज्ञानिविग्रहस्य भगवद्भोग्यत्वहानिः। न वा पराङ्कुशस्य दोषनिवृत्तिलक्षणदोषप्रसक्तिः। अद्यापि श्रीनगर्यां दिव्यमन्दिरान्तस्स्तम्भमूले श्रीपराङ्कुशचरमविग्रहस्यानुभूयमानत्वात्। श्रीरङ्गनाथे श्रीयोगिवाहदिव्यविग्रहस्य सदैवानुभूयमानत्वात्। योगिवाहेन स्वविग्रहनिवृत्तेः अप्रार्थितत्वाच्च। तस्मात् पराङ्कुशमुनिना भगवत्प्रेमातिशयप्रयुक्तास्थानभयशङ्कयैव स्वविग्रहप्रावण्यं भगवतो निवारितम्, इति तत्सूक्तिबलात् ज्ञानिविग्रहस्य भगवद्भोग्यत्वसिद्धिर्दुर्वारैव ॥ इदं च लोके भोगिजनानुभाव्योशीरपरिमळस्य मृद्विशिष्टोशीरपर्याप्तत्वेन समृत्तिकोशीरभोगवदाह्लादशीतनेत्राम्बुपुलकीकृतगात्रवत्स्वस्वरनेत्राङ्गविक्रियादियुक्तज्ञानिगतभगवदनुभाव्यभक्तिरूपापन्नज्ञानगन्धप्रवाहविकाराणां तद्विग्रहविशिष्टवेषनिष्ठत्वेन तस्य विग्रहविशिष्टवेषेणैवभगवदनुभाव्यतासिद्ध्या विग्रहस्यापि भगवदनुभाव्यत्वं दुरपह्नवमेव ॥

न च, सर्वज्ञस्य भगवतो विकारविशेषैर्विनाऽपि ज्ञानसाक्षात्कारसंभवात् विग्रहस्यानुभाव्यत्वासिद्धिः इति वाच्यम् । तथा सति नित्यमुक्तानां गुणप्रकाशकभगवद्विग्रहविशेषमन्तराऽपि भगवद्गुणसाक्षात्कारसंभवेन भगवद्विग्रहस्यानुभाव्यत्वाभावप्रसंगात् ॥ यदि च, भगवद्गुणकार्यस्मितावलोकनादीनां स्वयं भोग्यत्वेन तदाश्रय-भगवद्विग्रहस्यानुभाव्यत्वमिष्यते; तदा, ज्ञानिनिष्ठभगवदासक्त्यतिरेककारितकार्श्यवैवर्ण्यादीनां पूर्वोक्तविकारविशेषाणां च ※ द्रष्टव्यस्सर्वदेहिभिः ※ इत्युक्तरीत्या सर्वापेक्षया भोग्यतया सदानुभाव्यत्वेन भगवदपेक्षयाऽपि ज्ञानिविग्रहभोग्यत्वसिद्धिः दुरपह्नवैव ॥

अतश्च भक्तिपारवश्यप्रपन्नानां पराङ्कुशादीनाम् ※ आर्तानामाशुफलदा सकृदेव कृता ह्यसौ । साध्या भक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी ॥ ※ सर्वपापेभ्यो मोक्षयिष्यामि ※ इत्याद्युक्तरीत्या प्रथमत एव सर्वप्रारब्धनाशे सत्यपि तद्विग्रहानुवृत्तेः तद्विषयककेवलभगवदिच्छां विनाऽनुपपन्नत्वेन तद्बलेनापि ज्ञानिविग्रहस्य भगवदनुभाव्यत्वसिद्धिर्दुर्वारैव । न च आर्त्यधिकारपूर्त्यभावादेव पराङ्कुशादीनां विग्रहानुवृत्तिः इति वाच्यम् ॥ चिन्तयन्त्यादिषु क्षणमात्रेणार्त्यधिकारपूर्तिदर्शनेन पराङ्कुशादिषु तदर्थकालविलम्बस्यापि केवलभगवदिच्छां विनाऽनुपपन्नत्वात् ॥ न च, पराङ्कुशादीनां चिन्तयन्त्यपेक्षया मन्दाधिकारित्वं वक्तुं शक्यम् । ※उपमानमशेषाणम्※ इत्युक्तरीत्या तस्य सर्वाधिकत्वसिद्धान्तविरोधात् ।

किं पराङ्कुशादीनां आर्तिपूर्तिसामान्याभावात् देहानुवृत्तिर्विवक्षिता ? उत, (२) उपायाधिकारार्तिपूर्त्यभावाद्वा (३) आहोस्विदुपेयाधिकारार्तिपूर्त्यभावादेव वा ? नाद्यः, अनिसाहसत्वात् । श्रीपराङ्कुशमुखोद्गत-प्रथमप्रबन्धप्रथमगाथायामेव तस्य परमार्तत्वप्रतीत्या तद्विरोधाच्च ॥ नापि द्वितीयः पराङ्कुशादीनामप्युपेयाधिकारार्तिपूर्त्यभावेन, तदन्येषु तदभावस्य कैमुत्यसिद्धतया आर्तप्रपत्तेरेवासिद्धिप्रसंगात् ॥

भगवद्विश्लिष्टपराङ्कुशार्तनादेन तरवोऽप्यरुदन्; इति हि प्रसिद्धिः ॥ नापि तृतीयः; उपेयाधिकारभूतार्तिपूर्तेः प्राप्तिदशापूर्वभाविन्याः प्राप्तिप्रयोजकत्वेऽपि, प्रारब्धनिवृत्त्यप्रयोजकत्वेन तदभावस्य देहानुवृत्तिप्रयोजकत्वासंभवात् ॥

वरणदशापूर्वभाव्युपायाधिकारार्तिपूर्तिविशिष्टवरणलक्षणार्तप्रपत्तिफलभूता हि देहारंभकप्रारब्धनिवृत्तिः ? न चास्याः प्राप्तिदशाऽव्यवहितपूर्वभाव्युपायाधिकारार्तिपूर्तिकार्यत्वमुपपद्यते ॥ उपेयाधिकारार्तिपूर्तिश्च परमभक्तिपरिनिष्पत्तिरूपा ॥ सा च, उपासकानामर्चिरादिना देशविशेषप्राप्त्यनन्तरभाविनी, इति ※ परं जैमिनिर्मुख्यत्वात् ※ इति सूत्रभाष्यश्रुतप्रकाशिकयोः प्रदर्शितम् ॥ पराङ्कुशदिव्यसूरेस्तु भगवत्कटाक्षमाहात्म्यात् द्रामिडसामचरमगाथायामेवोपेयाधिकारार्तिपूर्तिलक्षणा परमभक्तिपरिनिष्पत्तिर्जातेति संप्रदायः ॥

प्रारब्धनिवृत्तिस्तु उपासकानामुत्क्रमणपूर्वभाविनी इति ※ भोगेन त्वितरे क्षपयित्वा ※ इत्यत्र दर्शितम् ॥

न चैवं श्रीरङ्गादिदिव्यदेशानां भगवदासक्तिवैधुर्यप्रसंगः। तेषामतिदुर्लभभगवत्प्राप्ययोगिवाहदिव्यविग्रहोपकारकत्वानुसन्धानजनितप्रीत्यतिशयात्, स्वप्राप्यज्ञानिप्रियत्वानुसन्धानजनितप्रीत्यतिशयात् ज्ञानिसिद्धिक्षेत्रत्वेनोत्तरोत्तरज्ञानिसिद्धिप्रत्याशाबलाच्च, श्रीरङ्गादिषु विशेषतो भगवत्सान्निध्योपपत्तेः। तत् सिद्धम्, ज्ञानिविग्रहो भगवदत्यन्तभोग्य एवेति ॥

सङ्ग्रहस्तु :—

ईश्वरस्य न भोग्यस्स्यात् प्राकृतो ज्ञानिविग्रहः। ॐ अनश्नन्नन्यः ॐ इत्यादिविरोधादिति चेन्न तत् ॥
ॐ अनश्नन्नन्य, इत्यादि यत्कर्मफलगोचरम्। यथा वपादिभोक्तृत्वं सीतामालिन्यकामिना ॥
ज्ञानिविग्रहभोक्तृत्वमुपपन्नं तथा हरेः। पुलकानन्दबाष्पादिज्ञानकार्यकरं वपुः ॥
उशीरमृत्तिकान्यायात् सतां भोग्यं श्रियःपतेः। श्रीमद्द्रामिडसामादिवचनैस्तत्त्वदर्शिनाम् ॥
परमात्मशरीराणां स्थित्या चैतन्न स्थिरीकृतम्। प्राकृतेष्वत्र देशेषु ज्ञानी ह्यभ्याससिद्धये ॥
हरेरादरतोऽप्येतत् कैमुत्यन्यायसिद्धये ॥ इति ॥

177. पूर्वं स्वरुच्या क्रियमाणयोः गुणापादनदोषनिवृत्त्योः भगवदनिष्टत्वेन दोषत्वस्थापनात् स्वाभिरुचितप्रतिबन्धकनिवृत्तिपूर्वकस्वरूपाविर्भावलक्षणमोक्षसाधनानुष्ठानस्य वस्तुतो भगवदनिष्टसाधनानुष्ठानरूपत्वात् तस्य पापत्वं दर्शितम् ॥

अथ, स्वरुचिमूलकानिष्टनिवृत्तीष्टप्राप्त्यर्थस्वव्यापारस्य स्वरूपविरुद्धत्वाप्राप्तविरसत्वस्थापनेन साधनान्तराणां स्वरूपप्राप्तस्वाभाविकसरसपुरुषार्थानुपायत्वलक्षणमानर्थक्यं प्रसाध्यते ॥

तत्र संशयः— किं स्वगतस्वीकारपर्यन्तसाधनान्तराणां स्वरूपाप्राप्तत्वादिदोषदुष्टत्वम्, आनर्थक्यं च संभवति? नवा, इति। तदर्थम् (तन्नाल् वरुम् नन्मै) इत्यादि कुरुकेशाचार्यवचनम् तत्र प्रमाणं भवितुमर्हति? उत, नेति। तदर्थम्, तस्य यथाश्रुतार्थपरत्वं संभवति? उत, नेति। यदा, न संभवति तदा कुरुकेशार्यवचनस्य तत्र प्रामाण्यायोगात् स्वगतस्वीकारपर्यन्तसाधनान्तराणां स्वरूपाप्राप्तत्वादिकम् अप्रामाणिकत्वान्न संभवति ॥ यदा कुरुकेशार्यवचनस्य यथाश्रुतार्थपरत्वसंभवः, तदा, तस्यैव स्वगतस्वीकारपर्यन्तसाधनान्तराणां स्वरूपाप्राप्तत्वादिषु प्रमाणत्वात् तेषां तथात्वं संभवत्येवेति पूर्वोत्तरपक्षयोः फलफलिभावः ॥

तत्र पूर्वः पक्षः; स्वगतस्वीकारादीनां स्वरूपाप्राप्तत्वादिकं न संभवति। तेषां ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ इति आत्मस्वरूपानुरूपत्वात्। भगवदाराधनात्मकत्वेन स्वाभाविकत्वात्। मोक्षफलकत्वेन अत्यन्तरसत्वाच्च। न च (तन्नाल् वरुम् नन्मै विलैप्पाल् पोले, अवनाल् वरुम् नन्मै मुलैप्पाल् पोले) इति कुरुकेशाचार्यवचनात् तत्तथात्वसिद्धिः ॥ तद्वचनस्य स्वानुष्ठीयमानस्वगतस्वीकारपर्यन्तमोक्षसाधनेषु स्वतन्त्रस्वाधीनताबुद्धिनिवृत्तिपूर्वकभगवदधीनताबुद्धिविधानमात्रपरत्वात् ॥ अन्यथा स्वगतस्वीकारपर्यन्तसाधनविधायकशास्त्रविरोधेन तद्वचनस्याप्रामाण्यापत्तेः। किं च पानप्रवृत्तिरूपस्तनन्धयव्यापारसापेक्षस्तन्यदृष्टान्तेन दार्ष्टान्तिके प्रपन्नस्य-

न चैवं श्रीरङ्गादिदिव्यदेशानां भगवदासक्तिवैधुर्यप्रसंगः। तेषामतिदुर्लभभगवत्प्राप्ययोगिवाहदिव्य-विग्रहोपकारकत्वानुसन्धानजनितप्रीत्यतिशयात्, स्वप्राप्यज्ञानिप्रियत्वानुसन्धानजनितप्रीत्यतिशयात् ज्ञानिसिद्धि-क्षेत्रत्वेनोत्तरोत्तरज्ञानिसिद्धिप्रत्याशावत्वाच्च, श्रीरङ्गादिषु विशेषतो भगवत्सान्निध्योपपत्तेः। तत् सिद्धम्, ज्ञानिविग्रहो भगवदत्यन्तभोग्य एवेति ॥

सङ्ग्रहस्तु :—

ईश्वरस्य न भोग्यस्स्यात् प्राकृतो ज्ञानिविग्रहः। ॐ अनश्नन्नन्यः ॐ इत्यादिविरोधादिति चेन्न तत् ॥
ॐ अनश्नन्नन्य, इत्यादि यत्कर्मफलगोचरम्। यथा वपादिभोक्तृत्वं सीतामालिन्यकामिना ॥
ज्ञानिविग्रहभोक्तृत्वमुपपन्नं तथा हरेः। पुलकानन्दबाष्पादिज्ञानकार्यकरं वपुः ॥
उशीरमृत्तिकान्यायात् सतां भोग्यं श्रियःपतेः। श्रीमद्द्रामिडसामादिवचनैस्तत्त्वदर्शिनाम् ॥
परमान्तशरीराणां स्थित्या चैतत्स्थिरीकृतम्। प्राकृतेष्वत्र देशेषु ज्ञानी ह्यध्यासमिद्धये ॥
हरेरादरतोऽप्येतत् कैमुत्यन्यायसिद्धये ॥ इति ॥

177. पूर्वं स्वरुच्या क्रियमाणयोः गुणापादनदोषनिवृत्त्योः भगवदनिष्टत्वेन दोषत्वस्थापनात् स्वाभि-रुचितप्रतिबन्धकनिवृत्तिपूर्वकस्वरूपाविर्भावलक्षणमोक्षसाधनानुष्ठानस्य वस्तुतो भगवदनिष्टसाधनानुष्ठानरूपत्वात् तस्य पापत्वं दर्शितम् ॥

अथ, स्वरुचिमूलकानिष्टनिवृत्तीष्टप्राप्त्यर्थस्वव्यापारस्य स्वरूपविरुद्धत्वाप्राप्तविरसत्वस्थापनेन साध-नान्तराणां स्वरूपप्राप्तस्वाभाविकसरसपुरुषार्थानुपायत्वलक्षणमानर्थक्यं प्रसाध्यते ॥

तत्र संशयः— किं स्वगतस्वीकारपर्यन्तसाधनान्तराणां स्वरूपाप्राप्तत्वादिदोषदुष्टत्वम्, आनर्थक्यं च संभवति? नवा, इति। तदर्थम् (तन्नाल् वरुम् नन्मै) इत्यादि कुरुकेशाचार्यवचनम् तत्र प्रमाणं भवितुमर्हति? उत, नेति। तदर्थम्, तस्य यथाश्रुतार्थपरत्वं संभवति? उत, नेति। यदा, न संभवति तदा कुरुकेशार्यवचनस्य तत्र प्रामाण्यायोगात् स्वगतस्वीकारपर्यन्तसाधनान्तराणां स्वरूपाप्राप्तत्वादिकम् अप्रामाणिकत्वान्न संभवति ॥ यदा कुरुकेशार्यवचनस्य यथाश्रुतार्थपरत्वसंभवः, तदा, तस्यैव स्वगतस्वीकारपर्यन्तसाधनान्तराणां स्वरूपा-प्राप्तत्वादिषु प्रमाणत्वात् तेषां तथात्वं संभवत्येवेति पूर्वोत्तरपक्षयोः फलफलिभावः ॥

तत्र पूर्वः पक्षः; स्वगतस्वीकारादीनां स्वरूपाप्राप्तत्वादिकं न संभवति। तेषां ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ इति आत्मस्वरूपानुरूपत्वात्। भगवदाराधनात्मकत्वेन स्वाभाविकत्वात्। मोक्षफलकत्वेन अत्यन्तरसत्वाच्च। न च (तन्नाल् वरुम् नन्मै विलैप्पाल् पोले, अवनाल् वरुम् नन्मै मुलैप्पाल् पोले) इति कुरुकेशाचार्यवचनात् तत्तथात्वसिद्धिः ॥ तद्वचनस्य स्वानुष्ठीयमानस्वगतस्वीकारपर्यन्तमोक्षसाधनेषु स्वतन्त्रस्वाधीनताबुद्धिनिवृत्ति-पूर्वकभगवदधीनताबुद्धिविधानमात्रपरत्वात् ॥ अन्यथा स्वगतस्वीकारपर्यन्तसाधनविधायकशास्त्रविरोधेन तद्वच-नस्याप्रामाण्यापत्तेः। किं च पानप्रवृत्तिरूपस्तनन्धयव्यापारसापेक्षस्तन्यदृष्टान्तेन दार्ष्टान्तिके प्रकृतायत्त-

संजीवनव्यापारे स्वगतस्वीकारादिरूपचेतनव्यापारावश्यकत्वलाभेन तेन तन्नैरपेक्ष्यसिद्धिवचनं बाधितम् ॥ तस्मात् साधनान्तराणां स्वरूपाप्राप्तत्वादिकमप्रामाणिकमेवेति ॥

अत्रोच्यते ॥ स्वगतस्वीकारपर्यन्तसाधनान्तराणां स्वरूपाप्राप्तत्वादिकमुपपद्यत एव श्रीकुरुकेशाचार्यवचने साधुत्वेन प्रतीयमानस्वकर्तृकव्यापारसामान्यस्य क्रीतक्षीरतौल्याभिधानेन तत्तथात्वसिद्धेः । क्रीतक्षीरं हि स्तनन्धयानां स्वरूपाप्राप्तम्, नापि स्वाभाविकम् । क्रयोपाधिकत्वात् । नापि मातृस्तन्यवत् सरसम् । किं तु विजातीयत्वात् विरसमेव । तथा च तादृशक्रीतक्षीरदृष्टान्तबलेन दार्ष्टान्तिके स्वगतस्वीकारपर्यन्तसाधनान्तरे भगवदत्यन्तपारतन्त्र्यलक्षणस्वरूपाप्राप्तत्वम् प्राचीनसुकृतमूलकत्वलक्षणम् सोपाधिकत्वम् परार्थानुभवकैङ्कर्यादिरूपरसशून्यत्वलक्षणम् विरसत्वं च लभ्यत इति तत्तथात्वसिद्धेः दुरपह्नवत्वात् ॥

न चैवं साधनान्तरविधायकशास्त्रविरोधः, ॐ नरस्य बुद्धिदौर्बल्यात् साधानान्तरमिष्यते । त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॐ इति शास्त्रेणैवोपायान्तरशास्त्राणां सिद्धोपायशास्त्रस्य च विषयविभागस्य कृतत्वेन साधनान्तरशास्त्राणामज्ञमात्रविषयत्वात् ॥

एतेन, कुरुकेशाचार्यवचनस्यापार्थकल्पनमपि निर्मूलितम् ॥ स्वेनागतं सत्त्वं क्रीतक्षीरतुल्यम् ॥ तेनागतं सत्त्वं स्तन्यतुल्यम् इति हि कुरुकेशाचार्यवचनार्थः । तत्र, तेन स्वेन, इति करणे तृतीया करणत्वं, नाम असाधारणकरणत्वात्मकप्रधानकारणत्वमेव तथा च, स्वप्रधानकारणकं सत्त्वसामान्यं क्रीतक्षीरवत् हेयम् । भगवत्प्रधानकं सत्त्वसामान्यं स्तनन्धयस्य मातृस्तन्यवत् सकलचेतनोपादेयं भवति, इति कुरुकेशाचार्यसूक्तेः स्वारसिकोऽर्थः पर्यवसितः । अत्र सत्त्वं नाम साधुभावः साधुः, इति प्रतीतिप्रयोजकधर्मः, इति यावत् ॥ तथा च, स्वगतस्वीकारपर्यन्तसाधानान्तरानुष्ठातृविषये भगवतः कर्मानुगुणफलप्रदातृत्वेनाप्रधानकारणतया साधनानुष्ठातृचेतनस्यैव प्रधानकारणत्वात् स्वगतस्वीकारपर्यन्तसाधनानुष्ठानतत्फलस्वार्थानुभवादिरूपाः सर्वे धर्माः, स्वेनैवागतसत्त्वान्तर्गतत्वात् क्रीतक्षीरवत् दोषदुष्टतया त्याज्या एव ॥ परगतस्वीकारफलीभूतस्वगतस्वीकारतत्कार्यपरार्थानुभवादिस्थले चेतनस्य प्रयोजकत्वेनाप्रधानतया भगवत एव प्रधानकारणत्वात् परगतस्वीकारफलस्वगतस्वीकारादयः सर्वेऽपि तेनैवागतसत्त्वान्तर्गतत्वात् स्तनन्धयस्य मातृस्तन्यवत् गुणोत्तरत्वात् सर्वेषामुपादेया एवेति स्वरसत एव सिद्ध्यति ॥

तथा च, एवं स्वरससिद्धस्यार्थस्य परित्यागेन तत्सूक्तेः अभिप्रायान्तरकल्पनममूलकमेव - किं च कुरुकेशार्यसूक्तेः स्वानुष्ठीयमानस्वगतस्वीकारादिसाधनान्तरं भगवतैवागतम्, इति बुद्धिविशेषविधिपरत्वं वदन् वादी प्रष्टव्यः ॥ किं साधनान्तरानुष्ठानादिसाधुव्यापाराणामनादिसुकृतफलत्वेन भगवत्प्रवर्तितत्वबुद्धिः अत्र विधेयत्वेन विवक्षिता ? उत निर्हेतुकमेव भगवत्प्रवर्तितत्वबुद्धिर्वा ? नाद्यः; असाधुकर्मणामपि कर्मफलत्वेन भगवत्प्रवर्तितत्वाविशेषेण साधुकर्ममात्रस्य भगवदधीनत्वबुद्धिविधानानुपपत्तेः ॥ विषमसृष्टिसामान्यस्य कर्मसापेक्ष भगवदधीनतायाः ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात् ॐ इत्यादिसिद्धत्वेन साधुकर्ममात्रे तस्य पुनर्विशिष्य

विधानानुपपत्तेः । नापि द्वितीयः, भगवतो वैषम्यनैर्घृण्यापत्तेः । अपि च, श्रीकुरुकेशाचार्यसूक्तौ प्रथमखण्डेन किमुच्यते ? इति वक्तव्यम् ।

न्यासोपासनादीनां स्वहेतुकत्वबुद्धिः निषिध्यते इति चेन्न विकल्पासहत्वात्; किं विद्यमानस्य स्वहेतुकत्वस्य बुद्धिः निषिध्यते ? उताविद्यमानस्य ? नाद्यः, विद्यमानस्य बुद्धेः निषेधायोगात् । यथा वस्तुवेदिनः तद्बुद्धित्यागस्याशक्यत्वाच्च ॥ नापि द्वितीयः; अविद्यमानस्य बुद्धेरप्रसक्ततया तन्निषेधायोगात् । अनभ्युपगमाच्च ॥ अथ स्वहेतुकत्वाभावबुद्धिः विधीयते चेत्; तथा सति, मिथ्याज्ञानादपवर्गप्रसङ्गः, वस्तुतः स्वहेतुकेषु स्वहेतुकत्वभावबुद्धेः दुष्टिरूपत्वात् ॥ 'अथ स्वतन्त्रस्वहेतुकत्वाभावबुद्धिर्विधीयते' इति न साधीयः स्वतन्त्रस्य स्वस्य अप्रसिद्धत्वात् ॥ स्वतन्त्रस्वहेतुकत्वभ्रमत्यागो विधीयते इत्यपि असमञ्जसम् । तत्त्वपरशास्त्रेण भगवद्व्यतिरिक्तस्य सर्वस्यापि स्वातन्त्र्यभ्रमस्य समूलोन्मूलितत्वेनाप्रसक्तप्रतिषेधापातात्, शब्दस्य तदभिधानासामर्थ्याच्च ॥

( तन्नाल् वरुम् ) इत्यनेन सहेतुकसाधुकर्मसामान्यमुपादाय तस्य क्रीतक्षीरतौल्यं हि कण्ठतोऽभिधीयते ? न चात्र (तन्नाल् वरुम्) इत्यस्य स्वातन्त्र्यभ्रमप्रयुक्तत्वविशिष्टे लक्षणा तथा सति श्रुतहानाश्रुतकल्पनयोः प्रसङ्गात् । (तन्नाल्) इति स्वात्मवाचकस्य स्वशब्दस्य यथावस्थितपरतन्त्रात्मस्वरूपवाचकस्य शक्यार्थत्यागे स्वस्वातन्त्र्यभ्रमरूपलक्ष्यार्थस्वीकारे च नियामकाभावात् । स्वस्वातन्त्र्यभ्रमप्रयुक्तस्य साधुकर्मत्वासंभवेन उत्तरपदार्थान्वयबाधप्रसंगाच्च ॥ तन्नाल् वरुम् तीमै, इति हि तदानीं वक्तव्यम् ? स्वातन्त्र्यभ्रमप्रयुक्तव्यापाराणां साधुकर्मत्वेन प्रतीयमानलक्षणं साधुत्वमेव नन्मै, इत्यनेन विवक्षितमिति चेत् तत्रापि श्रुतहानाश्रुतकल्पनयोः प्रसङ्गः ॥ अथास्मिन् पक्षे क्रीतक्षीरदृष्टान्तोऽप्यसंगतस्स्यात् । भ्रमप्रयुक्तव्यापाराणां विषतुल्यत्वेन क्षीरतुल्यत्वायोगात् ॥ अत एव हि ❀ श्रुतिपथविपरीतं क्ष्वेलकल्पम् ❀ इति तामसादीनां क्ष्वेलकल्पत्वमुच्यते; तस्मात् कुरुकेशाचार्यसूक्तौ पूर्वपक्षविवक्षिता पूर्वखण्डोक्ता योजना दुरुपपादैव ॥ अथ उत्तरखण्डे वा किमुच्यते इति वक्तव्यम् । स्तन्यतुल्यास्सर्वेऽपि न्यासोपासनादिसाधुव्यापाराः भगवन्मूलकाः इति बुद्धिर्विधीयते इति चेन्न ॥ उद्देश्यविधेयभावव्यत्यासप्रसङ्गात् ॥ 'मुलैप्पाल् पोल् नन्मै अवनाल् वरुम्' इति हि तदानीं वक्तव्यम् ? न हि तथोक्तम् ? अथात्र भगवन्मूलकसाधुव्यापारावच्छेदेन स्तन्यतुल्यत्वमेव विधीयते, तथाऽपि न्यासोपासादीनां सर्वेषां भगवन्मूलकसाधुव्यापारत्वादेव स्तन्यवत्प्राप्तत्वं, निरुपाधिकत्वादिकं लभ्यते इति न किञ्चित् सङ्कटमिति चेन्न ॥ काम्यकर्मणामपि उपादेयत्वप्रसङ्गात् ॥ तेषामपि भगवन्मूलकसाधुकर्मत्वाविशेषात् ॥

अथ काम्यकर्मविषये भगवतोऽनुमन्तृमात्रत्वेन प्रवर्तकत्वाभावात् न तेषां भगवन्मूलकत्वमिति चेत्, भ्रान्तोऽसि भगवतः सर्वत्र कर्मानुगुणप्रवर्तकतायाः त्वयैवाङ्गीकृतत्वात् ॥ तस्मात् खण्डद्वयस्यापि पूर्वपक्ष्यभिमतयोजना दुरुपपादैव अतो यथोक्त एवार्थः ॥ अत्र पूर्वखण्डः ❀ नायमात्मा बलहीनेन ❀ इत्यादिश्रुतिमूलकः उत्तरखण्डश्च, ❀ नायमात्मा प्रवचनेन ❀ इत्यादिश्रुतिमूलकः तत्र पूर्वखण्डमूलभूतश्रुतौ ❀ नायमात्मा बलहीनेन

लभ्यः, न च प्रमादात् तपसोऽवाप्यलिङ्गात् ※ इति कर्मज्ञानभक्तिन्यासयोगानाम् ※ 'नायमात्मा इत्युक्तपरगत स्वीकारफलानुपायत्वमुक्त्वा ※ एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम ※ इति स्वयत्नपराणां स्वयमुपस्थितस्य स्वीकार एव इति' इति श्रुतप्रकाशिकानुगृहीतरीत्या फलान्तरमुच्यते ॥

अयमर्थः ॥ अत्र, 'बलहीन' शब्दः कर्मयोगपरः । ※ प्लवा ह्येते अदृढा यज्ञरूपाः ※ इत्युक्तेः प्रमादशब्दः ज्ञानयोगपरः, श्रीगीतायां तस्य प्रमादबहुत्वोपपादनात् तपस्, शब्दः भक्तियोगपरः अलिङ्गशब्दः त्यागसन्न्यासादिशब्दवाच्यवर्णाश्रमधर्मादिनिरपेक्षन्यासयोगपरः । तथाच, कर्मयोगेन ज्ञानयोगेन भक्तियोगेन न्यासयोगेन च अयमात्मा न लभ्यः इति पूर्ववाक्यार्थः अयमात्मा इति परगतस्वीकारप्राप्यत्वेन ※ यमेवैषः ※ इत्यादि पूर्ववाक्यप्रतिपादितस्वासाधारणविग्रहविशिष्टः परमात्मा परामृश्यते तथा च परगतस्वीकारप्राप्याकार-विशिष्टः परमात्मा कर्मादिन्यासपर्यन्तोपायान्तरैरलभ्यः इत्युक्तं भवति ॥

अथ कर्माद्युपायान्तरैः किं वा लभ्यते इत्यपेक्षायामाह, ※ एतैरुपायैः ※ इत्यादिना । ※ यस्तु विद्वान् शास्त्रजन्यज्ञानवान्, यतते - स्वभोगार्थं स्वयत्नं कुरुते, तस्य - स्वयत्ननिष्ठस्य, एष आत्मा - प्रत्यगात्म-स्वरूपम्, एतैरुपायैः कर्मादिन्यासपर्यन्तैः स्वानुष्ठितोपायैः ब्रह्मधाम - वैकुण्ठम्, विशते - स्वयमेव प्राप्नोति, इत्यर्थः । तथा च परगतस्वीकारप्राप्ययथावस्थितभगवत्प्राप्तेः न्यासपर्यन्तोपायान्तरसाध्यत्वात् स्वयत्ननिष्ठा-स्सालोक्यादिरूपं फलान्तरमेव प्राप्नुवन्ति इत्युक्तं भवति ॥ तदिदमुच्यते (तन्नाल् वरुम् तन्मै विलैप्पाल् पोले) इति ॥ ※ यतते यस्तु विद्वान् ※ इत्येतदभिप्रेत्य तन्नाल् इत्युक्तम् । ※ एतैरुपायैर्विशते ब्रह्मधाम ※ इत्युक्तमुपायान्तरम्, सालोक्यरूप मुपायान्तरं चाभिप्रेत्य, वरुम् तन्मै, इत्यनुगृहीतम् ॥ ※ नायमात्मा बलहीनेन लभ्यः ※ इत्याद्युक्तम् यथावस्थितभगवत्प्राप्तिवैधुर्यरूपं वैरस्यम् ※ एतैरुपायैर्विशते ※ इत्युक्तं सोपाधिकत्वम् ※ यस्तु यतते ※ इत्युक्तं स्वरूपाप्राप्तस्वयत्नान्वयं चाभिप्रेत्य (विलैप्पाल् पोले) इत्यनुगृहीतम् ॥

अथ उत्तरखण्डमूलभूतश्रुतेरयमर्थः ॥ ※ अयमात्मा - यथावस्थितभोग्यभोगोपकरणभोगस्थानादिपरि-पूर्णः परमपुरुषः, प्रवचनेन न लभ्यः मननेन न लभ्यः, मेधया-न्यसोपासादिरूपया च, न लभ्यः, बहुना श्रुतेन - नानाशास्त्रश्रवणेनापि, न लभ्यः इत्यर्थः ॥ पुनः केनायं लभ्यते इत्यपेक्षायां परगतस्वीकारेणैव लभ्यते इत्याह ※ यमेवैषः इत्यादिना ॥ एषः स्वयं प्राप्यभूत एव परमात्मा, यमेव वृणुते ※ नासौ पुरुषकारेण न चाप्यन्येन हेतुना केवलं स्वेच्छयैवाहं प्रेक्षे कं चित् कत् कदा चन ※ इति श्रीलक्ष्मीतन्त्रोक्तरीत्या निरंकुशस्वातन्त्र्यात् स्वेच्छया दृङ्मनस्संगादिपूर्वकं यमेव स्वप्राप्यत्वेन प्रार्थयेत्, तेनैवायं यथावस्थिताकारविशिष्टः परमात्मा प्राप्य इत्यर्थः ॥

अथ परगतस्वीकारफलस्यासाधारणं विशेषमाह ※ तस्यैष आत्मा विवृणुते तनुं स्वाम् ※ इति परगत-स्वीकारविषयीकृताधिकारिविषय एव परमपुरुषः स्वासाधारणं दिव्यविग्रहं यथावस्थितवेषेण ※ परो वा व्यूहो वा ※ दृष्टं श्रीरङ्गधामनि ※ इत्याद्यनुगृहीतरीत्या प्रकटीकुर्यात् ॥ अन्येषां तु हंसहयग्रीवादिमुखान्तरेणैव स्वात्मानं

दर्शयेत् इत्यर्थः । इदं च, यथावस्थितदिव्यविग्रहप्रकटीकरणं परगतस्वीकारविषयीकृताधिकारिकर्तृकमङ्गलाशासनलभार्थम् । परार्थानुभवकैङ्कर्यादिभोगार्थं च, तथाच अत्र ॐ यमेवैष वृणुते ॐ इति निरंकुशस्वतन्त्रभगवत्प्रार्थनामभिप्रेत्य (अवतारे) इत्यनुगृहीतम् ।। ॐ तेन लभ्यः विवृणुते तनुं स्वाम् ॐ इत्यभिप्रेत्य वरुम तन्मै, इत्यनुगृहीतम् । चेतनस्य परगतस्वीकारविषयत्वादेः पारतन्त्र्यानुरूपतया स्वरूपप्राप्तत्वम् । नायमात्मा प्रवचनेन लभ्यः ॐ इति उपायान्तरसाध्यतया निरुपाधिकत्वम् । ॐ तस्यैष आत्मा विवृणुते तनुं स्वाम् ॐ इत्यादिना यथावस्थितदिव्यविग्रहानुभवदिव्यात्मस्वरूपप्राप्त्यादिमत्वेन सरसत्वं चाभिप्रेत्य, परगतस्वीकारफलानां स्तन्यतुल्यत्वमनुगृहीतम्; इति कुरुकेशाचार्यसूक्तेः प्रबलप्रमाणमूलकत्वात्; तदन्यथाकरणमशक्यमेव, इति तद्बलात् न्यासपर्यन्तोपायान्तराणां स्वरूपाप्राप्तत्वादिदोषदुष्टत्वं परमपुरुषार्थलक्षणमोक्षकामापेक्षया स्वापेक्षितसाधनत्वाभावेन नैरर्थक्यं च सिद्ध्यत्येव ।।

यच्चोक्तम्, न्यासपर्यन्तसाधनान्तराणां ॐ कर्ता शास्त्रार्थवत्वात् ॐ इति स्वरूपानुरूपत्वम् तदप्यनुपपन्नम् नमः पदेन कर्तृत्वनिषेधेन साधनकर्तृत्वस्य स्वरूपान्तर्गतत्वायोगात् । तथा चोक्तं पाद्मोत्तरे ।। तस्मात्तु नमसा चात्र स्वातन्त्र्यं प्रतिषिध्यते भगवत्परतन्त्रोऽसौ तदायत्तात्मजीवनः । तस्मात्साधनकर्तृत्वं चेतनस्य न विद्यते ।। ईश्वरस्यैव सङ्कल्पात् वर्तते सचराचरम् । तस्मात्स्वसामर्थ्यविधिं त्यजेत्सर्वमशेषतः ।। इत्यादि ।। साधनान्तराणां भगवदाराधनरूपत्वात् निरुपाधिकत्वमित्यनुपपन्नम् । अभिचारादीनामपि निरुपाधिकत्वप्रसङ्गात् । तेषामपि शास्त्रार्थत्वायोगात् । एवं मोक्षफलकत्वात् सरसत्ववचनमप्यनुपपन्नम् ॐ तदीच्छन्त्यल्पमतयो मोक्षं सुखविवर्जितम् ॐ इत्युक्तकैवल्यादिसाधनानामपि सरसत्वप्रसङ्गात् ।। प्रकृते स्वरसविरसशब्दाभ्यां परमपुरुषार्थवत्त्वतदभावयोरेव विवक्षितत्वेन न्यासपर्यन्तसाधनान्तराणां मोक्षसामान्यसाधनत्वेऽपि परमपुरुषार्थलक्षणमोक्षसाधनतायाः ॐ नायमात्मा ॐ इत्यादिनिषिद्धत्वेन तेषां तादृशसरसत्वासिद्धेश्च ।।

अथ परगतस्वीकारादीनां स्तन्यदृष्टान्तेन स्तन्यस्य स्तनन्धयकर्तृकपानव्यापारसापेक्षत्ववत् परगतस्वीकारदेरपि चेतनयत्नसापेक्षत्वसिद्ध्या चेतनयत्नसम्भावसिद्धिः इत्यनुपपन्नम् ।। स्तन्यपानरूपस्तनन्धयव्यारस्य केवलरागप्राप्ततया भोगरूपत्वेन तादृशव्यापारसापेक्षतादास्सिद्धान्तोऽपि इष्टत्वात् । तावता तार्ष्टान्तिके वैधव्यापाररूपसाधनान्तरसापेक्षत्वासिद्धेः । सिद्धान्ते परगतस्वीकारफलीभूततदनुनिष्पादिस्वगतस्वीकारस्य अभ्युपगतत्वेन तस्यैव स्तनन्धयस्तन्यदायिजननीव्यापारफलीभूततदनुनिष्पादिस्तनन्धयकर्तृकस्तन्यपानव्यापारस्थानीयतया, तदतिरेकिसाधनव्यापारसापेक्षत्वासिद्धेः । तस्मात्, कुरुकेशार्यसूक्तिसिद्धं साधनान्तरक्रीतक्षीरतौल्यं, तदप्राप्तत्वादिकं साधयत्येव इति न्यासादीनां स्वस्वरूपापेक्षयां बलवदनिष्टानुबन्धाभावः दुरुद्धर एव" इति ।

सङ्ग्रहश्च—

शास्त्रोपपत्तिबाधाभ्यां कुरुकेशार्यभाषितम् । स्वार्थे क्रीतपयस्साम्यं कथंचिन्नेयमन्यथा ।।

इति चेत्तन्नशास्त्रेषु स्वयत्नपरयत्नयोः । विभज्य दर्शिता यस्मात् अधिकारिफलादयः ।।

क्रीतक्षीरं यथा मात्रा हीनस्यैव भवेन् शिशोः । तथा नाथावृतानां स्युः न्यासादिस्वप्रवृत्तयः ॥
'एतैरुपायैर्यतते' 'यमेवैष' इति श्रुती । स्वयत्नपरयत्नौ च विभज्य वदतस्स्फुटम् ॥
साधनान्तरकर्तृत्वं नमसा यन्निषिध्यते । ततश्चागन्तुकत्वादि न्यासादीनां दुरुद्धरम् ॥
मात्रा वृतेन शिशुना यद्वत् स्तन्यं निपीयते । तथेशवृतजीवस्य फलप्रपदनादयः ॥
"तेनैव लभ्यस्तस्यैष आत्मा विवृणुते तनूम् ।" इत्युक्त्या यततां नैव ब्रह्मणा सह भोजनम् ॥
अतो न्यासादियत्नानां विरसत्वादियोगतः । क्रीतक्षीरपयस्साम्यं आर्योक्तं दुरपह्नवम् ॥

इति श्रीवचनभूषणमीमांसाभाष्ये द्वितीये परिच्छेदे
द्वितीयं प्रकरणं समाप्तम् ॥

---

## ॥ तृतीयप्रकरण प्रारंभः ॥

इत्थं पूर्वाधिकरणाभ्यां न्यासादि स्वार्थयत्नानां भगवदपेक्षया बलवदनिष्टानुबन्धित्वम्, स्वापेक्षया बलवदनिष्टाननुबन्धित्वं च प्रतिपादितम् । अथ अस्मिन् अधिकरणे न्यासोपासनादि स्वरक्षणव्यापाराणां स्वस्वरूपनाशापादकतया स्वापेक्षयैव साक्षात् बलवदनिष्टानुबन्धित्वं प्रसाध्यते । (अवनैयोऴियत्तान तनक्कु तन्मै तेडुकैयावदु) इत्यादिना।पूर्वाधिकरणयोः स्वप्रवृत्त्युद्दिष्टानां गुणदोषनिवृत्तितद्धेतूनां भगवदनिष्टानुबन्ध-स्वबलवदनिष्टाननुबन्धयोः स्थापनमुखेन पुरुषार्थशोधनपूर्वकं तादृशस्वातिशयोद्देशानर्हत्वलक्षणं 'प्रपद्ये' इति क्रियाक्षिप्त-अधिकारिविशेषणं प्रदर्शितम् । अत्र तु, 'स्वातिशयोद्देश्यकस्वप्रवृत्तेः स्वापेक्षया बलवदनिष्टानुबन्धित्वस्थापनमुखेन स्वातिशयोद्देश्यकस्वप्रवृत्त्यनर्हत्वलक्षणं तादृशाधिकारिविशेषणं प्रतिपाद्यते" इत्युक्तम् । पुरुषार्थविचारसङ्गतिर्बोध्या। अत्र संशयः- 'किं न्यासोपासादिस्वरक्षणार्थस्वव्यापाराणां स्वस्वरूपविनाशात्मकबलवदनिष्टानुबन्धित्वं संभवति ? उत न ? इति । तदर्थं, भगवन्तमन्तरेण स्वेनैव स्वस्य रक्ष्यरक्षकभावः स्तनन्धयप्रजाया मातृविश्लेषणपूर्वकसौनिकहस्तन्यासतुल्यः ? न वा ? इति तदर्थं स्वस्य स्वविनाशकत्वं संभवति वा ? न वा इति । तदर्थं 'अहङ्कारविषयप्रावण्ययोः स्वविनाशात्मकत्वं संभवति ? उत न इति । यदा न संभवति, तदा तस्य स्वविनाशकत्वासंभवात् स्वरक्षणान्वयस्य स्तनन्धयप्रजासौनिकहस्तदानतौल्यं न संभवत्येव' इति न्यासोपासनादिस्वरक्षणार्थप्रवृत्तीनां स्वस्वरूपनाशात्मकबलवदनिष्टानुबन्धितायाः अप्रामाणिकत्वात् । स्वरक्षणोद्देश्यकस्वप्रवृत्त्यनर्हत्वलक्षणं अधिकारिविशेणं न सिध्यति । यदा अहङ्कारविषयप्रावण्ययोः स्वविनाशात्मकत्वं संभवति, तदा, "स्वस्य स्वविनाशात्मकत्वसंभवात्, स्वविनाशकस्यैव स्वस्य स्वेन साकं रक्ष्यरक्षकभावः स्तनन्धयसूनिहस्तन्यायतुल्य एव" इति स्वस्य तादृशन्यासोपासनादिस्वरक्षणार्थस्वव्यापारानर्हत्वलक्षणं अधिकारिविशेषणं उपपद्यत एव इति सिध्यति इति पूर्वोत्तरपक्षयोः फलफलिभावः । तत्र पूर्वः पक्षः—चेतनस्य न्यासोपासनादिस्वरक्षणार्थव्यापारानर्हत्वं

न संभवति ; लोके बहूनां स्वरक्षणान्वयदर्शनेन तद्बलेनैव तद्योग्यतायास्सिद्धत्वात् । न हि योग्यतामन्तरेण फलोपधानसंभवः । न च "स्वापेक्षयैव स्वस्य रक्ष्यत्वेन अन्वयः, स्वविनाशरूपानर्थपर्यवसायी ; स्वरक्षणप्राप्तभगवदसन्निधानविशिष्टत्वविनाशकस्यान्वयरूपत्वात् । मातापितृसन्निधानरहितसूनिहस्तस्तनन्धयन्यासवत् इत्यनुमानबलात् स्वरक्षणान्वयस्य बलवदनिष्टानुबन्धित्वसिद्ध्या चेतनानां स्वरक्षणान्वयानर्हत्वोपपत्तिः—इति वाच्यम् । भगवत्प्रसादनात्मकन्यासादिव्यापाराणां मातापितृशिश्रूषास्थानीयत्वेन हेत्वसिद्धेः । न्यसोपासनादिसाधनानुष्ठातृविषये प्राप्तशेषिणो भगवत एव रक्षकतायाः "फलमत उपपत्तेः" इत्यादि सिद्धत्वेन तत्र प्राप्तरक्षकभगवदसन्निधानवैशिष्ट्यस्यासिद्धत्वात् ।

एवम् 'उद्धरेदात्मनात्मानं नात्मानमवसादयेत् । आत्मैव ह्यात्मनो बन्धुः ' इति गीतावचने स्वस्यैव स्वोज्जीवनकर्तृताया उक्तत्वेन स्वरक्षणान्वयस्य विनाशकान्वयरूपत्वं च असिद्धम् । प्रत्युत 'नृदेहमाद्यं प्रतिलभ्य दुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् । मयाऽनुकूलेन नभस्वतेरितं पुमान भवाब्धिं न तरेत्स आत्महा ॥' इति, 'न्यासोपासनादिधर्मानन्वयस्यैवात्मनाशहेतुत्वं प्रमाणसिद्धम्' इति तदन्वयस्य आत्मनाशपर्यवसानानुमानं शास्त्रबाधितमेव। न च, 'अनादिकालमारभ्य संसरतश्चेतनस्य नियमेन स्वबन्धाभिवर्धकत्वस्यैव दर्शनेन स्वस्य विनाशकत्वसिद्धिः' इति वाच्यम् । अतीतजन्मवृत्तान्तानां असर्वज्ञदुर्विज्ञेयत्वात् । न च 'याने एन्नैयरियकिलादे' इत्यादि द्रामिडसामद्वितीयशतकनवमदशकनवमगाथाबलेन स्वस्वरूपसामान्यस्य स्वविनाशकत्वसिद्धिः इति वाच्यम् । तस्याः जीवस्वरूपसामन्यविषयकत्वाभावात् । श्रीपरांकुशमुनेः स्वनैच्यानुसन्धानमात्ररूपत्वाच्च । अपि च प्रत्यगात्मस्वरूपस्य नित्यतया न्यासादीनां तद्विनाशकत्वं बाधितम् । न च 'अहङ्कारविषयप्रावण्ययोरेव आत्मनाशशब्दार्थत्वात् न दोषः' इति वाच्यम् ; नाशशब्दप्रवृत्तिनिमित्तरहितयोः तयोः नाशशब्दार्थत्वायोगात् । न्यासोपासनादिमोक्षसाधनप्रवृत्तिषु अहङ्कारविषयप्रावण्यगन्धाप्रसक्त्या, प्रकृतार्थासिद्धेश्च । तस्मात् न्यासादीनां स्वस्वरूपविनाशात्मकबलवदनिष्टानुबन्धासिद्धेः स्वातिशयार्थस्वप्रवृत्त्यनर्हत्वलक्षणं अधिकारिविशेषणं असिद्धमेव" इति ।

अत्रोच्यते—"चेतनस्य स्वरक्षणान्वयानर्हत्वं उपपद्यत एव ; "तापत्रयातुरैः अमृतत्वाय स एव जिज्ञास्यः" इति श्रीभाष्यश्रुतप्रकाशिकानुगृहीतरीत्या भगवदन्यस्य रक्षणव्यापारायोगात् , स्वस्यैव स्वरक्षकत्वे कर्मकर्तृत्वयोः विरोधाच्च, स्वस्वरूपस्य स्वरक्षणार्हत्वासिद्धेः । न च 'लोके बहूनां न्यासोपासनादि स्वरक्षणार्थव्यापारान्वयदर्शनेन स्वस्वरूपस्य तदर्हत्वं सिध्यति , इति वाच्यम् । तथासति , ब्राह्मणादिषु अतिक्रान्तमर्यादानां केषांचित् अपेयपानादिदर्शनेन तेषां तदर्हत्वसिद्धेः प्रसङ्गात् । यदि च 'ब्राह्मणस्य मद्यपानाद्यनर्हत्वं नाम बलवदनिष्टानुबन्धिमद्यपानाद्यनर्हत्वमेव। तच्च मद्यपानादिनिषेधविधिप्रतिसंबन्धित्वरूपम्। तथा च मद्यपानाद्यनर्हम्' इति प्रामाणिकव्यवहारोपपत्तिः इत्युच्येत; तदा प्रकृतेऽपि 'सर्वधर्मान् परित्यज्य' 'त्यज धर्मं अधर्मं च' इत्यादिनिषेधविधिप्रतिसंबन्धित्वरूपं बलवदनिष्टानुबन्धिन्यासोपासनादिप्रवृत्तिकत्वात्मकं स्वस्वरूपस्य स्वरक्षणान्वयानर्हत्वमपि उपपद्यत एव' इति

पश्यतु भवान् । किं च भगवत्समवधानविरहविशिष्टत्वविनाशकस्यान्वयरूपत्वलिंगक-अनुमानबलेनापि स्वरक्षणान्वयस्य स्वविनाशपर्यवसानलक्षणबलवदनिष्टानुबन्धसिद्धिः उपपद्यत एव । न च न्यासोपासनादीनां भगवन्-प्रसादनात्मकत्वेन भगवत्समवधानविशिष्टत्वात् हेत्वसिद्धिदोषः । 'त्यज धर्मं अधर्मं च' 'सर्वं धर्मान् परित्यज्य' इति अधर्मवत् न्यासोपसनादिधर्माणामपि निषिद्धत्वादेव भगवन्निग्रहहेतुत्वमिध्या तेषां प्रसादनत्वायोगात् । एतेन न्यासादिसाधनान्तराणां विधिबलात् प्रसादनत्वसिद्धिः' इति निरस्तम् । तथा सति श्येनादीनामपि भगवन्-कैङ्कर्यरूपत्वप्रसङ्गात् । यदि च श्येनादि विधीनां 'शठचित्तशास्त्रवशतोपायोऽभिचारश्रुतिः' इत्यर्थान्तरतात्पर्यकत्वेन श्येनादितात्पर्यकत्वाभावात् तेषां केवलप्रसादनरूपत्वाभाव इष्येत, तदा न्यासोपासनादिविधीनामपि स्वरूपविश्वासपारतन्त्र्याद्यर्थान्तरतात्पर्यकतायाः 'सर्वधर्मान् परित्यज्य' इति निषेधबलादेव सिद्धतया, न्यासादीनामपि केवलप्रसादनत्वासिद्धिः समाना । तेन साधनांतरस्थले 'फलमत उपपत्तेः' इति भगवत एव फलप्रदत्वेन प्राप्तरक्षकभगवन्-समवधानविशिष्टतया तद्विरहरूपहेतुविशेषणासिद्धिः' इति प्रत्युक्तम् । साधनांतरानुष्ठातृविषये भगवतो यथाकर्मफलदायित्वेन अपेक्षकतया रक्षकत्वोक्त्ययोगात् । नहि यथाकर्मफलदायित्वमेव रक्षकत्वम् । तस्य पापफलसाधारणत्वात् । नापि साधनानुगुण-अभिमतफलप्रदत्वं रक्षकत्वम् । क्रयानुगुणपण्यप्रदेषु रक्षकत्वव्यवहारादर्शनात् । नापि अदृष्टद्वारकसाधनानुगुणफलप्रदत्वरूपं तत् । मातापितृप्रभृतीनां रक्षकत्वभङ्गप्रसङ्गात् । तस्मात् निर्हेतुकपुरुषार्थप्रदत्वमेव रक्षकत्वम् । इति न्यासोपासनादिस्थले भगवतः तादृशरक्षकत्वायोगात् तत्र प्राप्तरक्षकभगवदसमवधानमुपपद्यत एव । अपि च, शणवल्कलान्वयस्य ब्रह्मास्त्रविघटकत्ववत् , न्यासादिसाधनांतरस्य सिद्धोपायविघटकत्वात् साधनांतरणा भगवदसमवधानवैशिष्ट्यं दुरपह्नवमेव । न च साधनांतराणां सिद्धोपायविघटकत्वासिद्धिशङ्का, आयोध्यकतृणपिपीलिकादिसंरक्षकस्य सिद्धोपायस्य दशरथविषये समधर्मेण विघटकत्वदर्शनात् । नहि दशरथस्य अंतकाले वा परमपदप्राप्तिश्श्रूयते । एवं 'सर्वधर्मान् परित्यज्य' इत्यत्र दृष्टसंभवन्याय तद्धक्तधातुश्रुत्या सर्वधर्मपरित्यागस्य प्रतिबन्धकाभावविधयैव सिद्धोपायस्वीकारनिष्पादकतायाः प्रतिपादितत्वेन धर्माणां सिद्धोपायविघटकत्वं दुरपह्नवमेव । एवं 'उपायापायसंयोगे निष्ठया हीयतेऽनया' इति न्यासादिसाधनान्तरान्वयस्य सिद्धोपायनिष्ठाभञ्जकत्वोक्त्यापि तत्तथात्वसिद्धिर्दुर्वारा, तस्मात् न्यासोपासनादिसाधनान्तराणां निरुपाधिकत्वरक्षकत्वाकारेण भगवदन्वयलक्षण भगवत् - समवधानविरहवैशिष्ट्यं उपपद्यत एव । एवं स्वस्यैव स्वरक्ष्यतयाऽन्वयस्य विनाशकान्वयरूपत्वमप्यविरुद्धम् । 'उद्धरेदात्मनात्मानम्' इत्यादिकं श्रुतवतः अर्जुनस्य शोकान्वयदर्शनेन तद्बलेनैव स्वस्य स्वविनाशकतासिद्धेः । अत एव हि 'सर्वधर्मान् परित्यज्य' इति पूर्वोपदिष्टोपायानां प्रतिषेध उपपद्यते । तर्हि किमर्थं पूर्वं स्वविनाशकस्यैव स्वोद्धर्तृतया उपदेशः इति चेत्; 'पार्थस्य हृदयशोधनार्थमेव' इति ब्रूमः । नच, स्वतः सर्वज्ञस्य हृदयशोधनानुपपत्तिः । लोके सदाचार्यपदनिर्वाहकान् प्रति 'परीक्ष्य विविधोपायैः' इत्युक्तशिष्यहृदयपरीक्षणज्ञापनार्थमेव भगवता तदनुष्ठानोपपत्तेः ।

एतेन 'नृदेहमाद्यम्' इत्यादिकमपि प्रत्युक्तम् ❀ संसारार्णवमग्नानां विषयाक्रान्तचेतसाम् । विष्णुपोतं विना नान्यत् किंचिदस्ति परायणम् ॥ ❀ तमेवैकं जानथात्मानम् अन्या वाचो विमुञ्चथ ❀ अमृतस्यैष सेतुः ❀ त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि । निमित्तं कुशलस्यास्ति ❀ इत्यादिना भगवद्व्यतिरिक्तसंसारनिस्तरणोपायसद्भावप्रतिषेधकबहुप्रमाणबलेन नृदेहमित्यादेरपि केवलहृदयशोधनार्थत्वलाभात् । न हि संसारसागरान्तर्निमग्नान् प्रति तन्निमज्जनहेतुभूतस्यैव देहस्य तन्निवर्तनासाधारणकारणत्वं संभवति । तस्मात् नृदेहमित्यादेः भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिनिवृत्तिहेतुभूतसदाचार्यसमाश्रयणदृष्टकारणीभूतशरीरप्रशंसादिमात्रपरतयैव अन्यथानेयत्वात् तद्बलेन हेत्वसिद्ध्युक्तिरनुपपन्नैव । किञ्च अनादिकालात्प्रभृति सृष्ट्यवतारादिभिः भगवत्कृतानां चेतनोज्जीवनयत्नानां चेतनकर्तृकस्वयत्नबलेनैव विफलीकरणदर्शनेन तद्बलेन चेतनस्य स्वापेक्षया विनाशकत्वसिद्धिः दुर्वारैव ।

न च अतीतजन्मवृत्तान्तानामसर्वज्ञदुर्विज्ञेयतया तदसिद्धिः । संसारानुवृत्तिरूपकार्यबलेनैव तत्कल्पनोपपत्तेः । नच संसारानुवृत्तेः ईश्वरकार्यत्वं शंकितुमपि शक्यम् । चेतनोज्जीवनैकदीक्षितस्य परमदयालोस्संसारवर्धकत्वायोगात् ❀ निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि । प्रधानकारणीभूता यतो वै सृज्यशक्तयः ❀ वैषम्य नैर्घृण्ये न सापेक्षत्वात् ❀ अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यथा क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा। संसारतापानखिलान् अवाप्नोत्यतिसन्ततान् ❀ इत्यादिभिः चेतनकर्मणामेव तद्बन्धप्रधानकारणत्वोक्त्या भगवतः कारणत्वोक्तेः अत्यन्तविरुद्धत्वात् । नच चेतनकर्मणामपि भगवल्लीलोपकरणभूतप्रकृतिसंबन्धकार्यत्वेन भगवत्कार्यत्वं दुरुद्धरमिति वाच्यम् । स्थूलावस्थप्रकृतिविशेषसंबन्धानामपि बीजांकुरन्यायेन कर्मप्रवाहकार्यत्वेन भगवत्कार्यत्वायोगात् ॥ ❀ आदावीश्वरदत्तयैव पुरुषस्स्वातन्त्र्यशक्त्या स्वयं तत्तज्ज्ञानचिकीर्षाप्रयत्नान्युत्पादयन् वर्तते ❀ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ❀ इत्याद्युक्तरीत्या कर्मविशेषाणां प्राथमिकस्वतन्त्रचेतनेच्छैकमूलकतया तत्र स्थूलसूक्ष्मप्रकृतिसंबन्धादीनामसाधारणकारणत्वायोगाच्च । करणकलेबरादिकं हि, ❀ विचित्रा देहसंपत्तिरीश्वराय निवेदितुम् । पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता ❀ अचिद्विशेषितान् प्रलयसीमनि संसरतः करणकळेबरैः घटयितुं दयमानमनाः ❀ इत्युक्तरीत्या कारुणिकेन भगवता चेतनोज्जिजीविषयैव दत्तम् ॥ नचैवं ❀ लोकवत्तु लीलाकैवल्यम् इति सूत्रविरोधः, चेतनोज्जीवनव्यापाराणां भगवल्लीलान्तर्भावाभिप्रायेणैव तदुपपत्तेः । अन्यदुपक्रान्तमन्यदापतितमितिन्यायेन चेतनोज्जीवनार्थसृष्ट्यवतारादिभगवद्व्यापाराणां चेतनकर्तृकविपरीतपरम्परया वैपरीत्यपर्यवसानेन भगवतो विस्मयावहतया तादृशपर्यवसानाभिप्रायेण वा ❀ लोकवत्तु लीलाकैवल्यमित्यस्योपपत्तेः । अन्यथा ❀ भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे । देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ? इति मांडूक्यवचने जगत्सृष्टेः केवललीलार्थत्वादिकं परमतत्वेनोपन्यस्य परिपूर्णस्वभावकार्यपरोपकारार्थतायाः स्वमतत्वेनोक्ततया तद्विरोधात् । अवतारितं च तद्वाक्यं कूरनारायणादिमुनिभिः—"तर्हि परिपूर्णस्य सृष्टिः किमर्था ? इत्यतः लोकानुग्रहार्थम् स्वभावः इति वक्तृमतान्तराण्याह

भोगार्थमिति" इति । एवं * जन्माद्यस्य यत इति सूत्रभाष्ये "परमकारुणिकात्परस्मात्पुंसः सृष्टिस्थितिप्रलयाः प्रवर्तन्ते" इत्यत्र श्रुतप्रकाशिकायां "परमकारुणिकत्वं च जिज्ञास्यत्वकारणत्वोपयोगि । प्रलयदशायामसत्कल्पं चेतनजातं निरीक्ष्य दयया हि सृष्टिः । संश्रितसौलभ्यं च दययैव । यथा * माता पिता भ्राता निवासश्शरणं सुहृत् गतिर्नारायण इति, इति । नचैवं * न प्रयोजनवत्त्वात् * इत्याद्यधिकरणभाष्यसूक्तिविरोधः। तदधिकरणपूर्वपक्षभाष्ये—अवाप्तसमस्तकामस्य परार्थता हि परानुग्रह एव ? इति, "नच ईदृशगर्भजन्मजरामरणनरकादिनानाविधानन्तदुःखबहुलं जगत् करुणावान् सृजति" इत्युक्तस्य सृष्टेःपरार्थतापक्षदोषस्य * वैषम्यनैर्घृण्ये न सापेक्षत्वात् * इति सूत्रेणैव परिहृतत्वेन लीलार्थवत्परार्थस्यापि भाष्यविवक्षितत्वोपपत्त्या विरोधाभावात् । तस्मात् भगवतः जगत्सर्गादिव्यापाराणां चेतनोज्जीवनार्थकृषिरूपत्वात्, तद्वैफल्यस्य वैषम्यानां च चेतनयत्नफलत्वाच्च चेतनस्य स्वरूपनाशकत्वं भगवत एव निरुपाधिकरक्षकत्वं च शास्त्रबलात्सिद्धमेव । इति न्यासोपासनादिस्वयत्नान्वयस्यापि स्वरूपनाशपर्यवसानमुपपद्यत एव। * चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन * इति पारमैकान्त्यकाष्ठाभूतज्ञानित्वस्यापि सुकृतफलत्वावगमात्, सुकृतस्य चेतनयत्नसाध्यत्वात्, तादृशसुकृतविशेषसंपादकस्य च चेतनस्य स्वविनाशकत्वोक्तिर्बाधिता इतिचेत् मैवम् । चतुर्विधाधिकार्यन्तर्गतस्य ज्ञानिनः साधनभक्तिनिष्ठत्वपक्षे तन्निष्ठायाः पारमैकान्त्यकाष्ठारूपत्वायोगात् । * श्लोकत्रयोदितज्ञानिनं मां कुरुष्व * इत्यादि श्रीगद्यसूक्तिप्रदर्शितरीत्या * फलभक्तिनिष्ठत्वपक्षेपि तद्विषये सुकृतिनः इत्युक्तसुकृतशब्दस्य * ईश्वरस्य च सौहार्दं यदृच्छासुकृतं ततः * इत्यादिविशेषवचनसिद्धयादृच्छिकादिसुकृतपरत्वेन तस्य भगवत्सौहार्दैकमूलकतया तस्य चेतनबुद्धिपूर्वकत्वायोगात् ।। ननु * सा काष्ठा सा परागतिः * इत्यादिषु प्रपत्तिवशीकृतस्यैव भगवतः चेतनोज्जीवनहेतुत्वोक्त्या तद्वशीकारकर्तुश्चेतनस्य स्वोज्जीवनहेतुत्वं दुरपह्नवमिति चेन्न । अपराधानामालयस्य अत्यन्तपरतन्त्रस्य चेतनस्य दण्डधरनिरंकुशस्वतन्त्रभगवद्वशीकरणकर्तृत्वासंभवात् । नचैवं * तस्य च वशीकरणं तच्छरणागतिः * इति श्रीभाष्यसूक्तिविरोधः ; तत्र शरणागतिशब्दस्य भगवत्प्रवृत्तिविरोधिस्वप्रातिकूल्याभिसंधिविराममात्रपरत्वात् । प्राप्तशेषिणो भगवतः स्वशेषभूतविषये स्वप्राप्त्यनुसन्धानेनैव पित्रादेः पुत्रादिष्विव वात्सल्यतन्त्रिततया तद्वशीकरणस्य विरोधिनिवृत्तिव्यतिरेकेण हेत्वन्तरानपेक्षणात् । अत एव हि * तं ह देवमात्मबुद्धिप्रसादमित्युच्यते । आत्मबुध्या प्रसादः यस्य सः—आत्मबुद्धिप्रसादः प्राप्तशेषित्वरूपस्वस्वरूपज्ञानमात्राधीनप्रसादवान् इत्यर्थः। अथवा आत्मबुध्या स्वशेषभूतजीवात्मस्वरूपज्ञानेनैव प्रसादो यस्य इति वा विग्रहवाक्यार्थः * पितेव पुत्रस्य * इत्यादि स्मृतेः । * नीचोच्चयोस्स्वभावोऽयं इति चेतनानां नैच्यस्य स्वाभाविकत्वदर्शनपूर्वकं प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन् * इति तादृशस्वरूपान्तर्गतनैचस्य भगवत्प्रह्वीभावकारणत्वेन 'नमयति इति नमः' इति व्युत्पत्तिसिद्धनमश्शब्दार्थत्वोक्तेश्च । * अतो वा नम उद्दिष्टं यत् तं नमयति स्वयमित्यत्र यस्मात्कारणात् स्वरूपान्तर्गतं नैच्यं स्वयमेव तं परमपुरुषं 'नमयति' अतःकारणात् नैच्यमेव वा नमउद्दिष्टं इत्युच्यते । अतः भगवद्वशीकारस्य करणान्तरनिरपेक्षत्वेन प्रतिबन्धका-

भावमात्रस्य तत्रापेक्षिततया ※ तस्य च वशीकरणं तच्छरणारविन्दशरणागतिः ※ इत्यत्र भगवत्प्रवृत्तिविरोधि-स्वप्रवृत्तिनिवृत्तिमात्रमेव शरणागतिशब्दविवक्षितम्। तद्विरोधी च स्वस्वातन्त्र्याभिसंधिः । ※ त्वम्मेऽहम्मे ※ इत्यादिषु प्रसिद्धम्। तन्निवृत्तिश्च भगवच्छेषत्वसंवाद एव। तथाच अनुगृहीतम् अनुमानिकाधिकरणश्रुतप्रकाशिकायाम् 'शास्त्रे आत्मनि महतः आत्मनः जीवस्य नियमनं नाम तच्छेषताप्रतिपत्तिः। सैवं परस्यापि वशीकरणं भवति" इति। नचैवमपि प्रातिकूल्याभिसंधित्यागात्मकभगवद्वशीकरणे चेतनस्यैव कर्तृत्वेन चेतनोज्जीवनहेतुत्वं दुरपह्नवम् इति वाच्यम्। येन त्यजसि तत् त्यज ※ मृग्यमध्यस्थवत्त्वम् ※ जितं ते पुण्डरीकाक्ष ※ अलवलमै तविर्तव ஃकन् ※ अदुवुमवनदिन्नरुळे ※ वरद तव खलु प्रसादादृते शरणमिति वचोऽपि मे नोदियात् ※ निदानं तत्रापि स्वयमखिलनिर्माणनिपुणः ※ इत्यादिप्रमाणबलेन शेषत्वसंवादादीनामपि स्वसौन्दर्याविष्कारादिरूपभगवत्कृषिफलत्वेन चेतनयत्नसाध्यत्वाभावात्। तस्मात्सर्वात्मना भगवत एव रक्षकत्वात् स्वस्य स्वविनाशमात्रहेतुत्वाच्च स्वस्यैव स्वरक्षकत्वान्वयो विनाशरूपा-नर्थपर्यवसाय्येव । अत एव ※ याने येन्नै अरियकिलादे ※ इत्यादि श्रीपरांकुशदिव्यसूक्त्याऽपि स्वस्य स्वविनाशकत्वसिद्धिर्दुर्वारा ※ बहूनि मे व्यतीतानि जन्मानि ※ इत्युक्तरीत्या स्वावतारसत्वप्रवर्तनशास्त्रप्रवर्तन-करणकळेबरदानादिना भगवता चेतनोज्जीवनार्थं निरन्तरकृषिसन्ततिकरणेपि चेतनस्य स्वशेषत्वसंवादालाभस्य चेतनपापैकमूलकत्वेन चेतनस्य स्वविनाशकत्वसिद्धेः निष्प्रत्यूहत्वात् ।

नच नित्यस्य आत्मस्वरूपस्य नाशायोगात् स्वस्य स्वविनाशकत्वमनुपपन्नमिति वाच्यम्। सत्कार्य-वादिनां सिद्धान्ते नित्यत्वनाशित्वयोरविरोधात् अत एव हि ※ अचेतना परार्था च नित्या सततविक्रियेत्युच्यते । तथाच सिद्धान्ते विरुद्धावस्थान्वयस्यैव नाशशब्दार्थत्वेन स्वभावान्यथाभाववतः चेतनस्य तादृशावस्थान्वयसं-भवत्येवेत्यनुपपत्त्यभावात् । नचैवमपि न्यासोपासनाद्यनुष्ठानदशायां स्वरूपस्य उज्वलत्वेन विरुद्धावस्थान्वया-भावात् साधनान्तरान्वयस्य स्वरूपनाशकत्वं दुरुपपादमेवेति वाच्यम्; न्यासोपासनादीनां मदिराबिन्दुमिश्र-शातकुंभमयकुंभगततीर्थसलिलवत् अहङ्कारमिश्रतया दोषदुष्टतायाः पूर्वाचार्यसूक्तिसिद्धत्वेन तदनुष्ठातॄणां शेषत्व-विरुद्धस्वातन्त्र्यावस्थान्वयसत्त्वेन स्वरूपनाशस्य दुर्वारत्वात् । अत एव हि ※ असन्नेव ※ इत्यादिषु असत्त्वेन ब्रह्म जानतामसत्त्वमेवोच्यते । न्यासोपासादिनिष्ठा हि ब्रम्हणोब्रह्मत्वादिविशिष्टवेषेण स्वप्रवृत्तिसाध्यतां मन्यन्ते। इदमेव हि असत्त्वेन ब्रह्मणो वेदनं नाम । नच ※ असद्ब्रह्मेतिवेदचेत् ※ इत्यत्र ब्रह्म वेद इति यत् तत् असच्चेत् इत्यर्थवर्णनं युक्तम् । श्रुतिस्वारस्यविरोधात् । "अस्तीत्येवोपलब्धव्यः तत्त्वभावेनचोभयोः । अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥" इत्यादिश्रुत्यन्तरैकार्थप्रतीतिविरोधाच्च । अभावप्रतियोगित्वेन ब्रह्म जानतामपि सत्त्व-प्रसङ्गाच्च । असत्त्वेन ब्रह्म जानतामसत्त्वप्राप्त्युक्तेः यथाक्रतुन्यायगर्भत्वप्रतीत्या तद्विरोधाच्च । तस्मात् सत्त्वा-सत्त्वयोर्विद्यमानपदार्थधर्मत्वात्, तत्र च सत्त्वस्य स्वासाधारणसर्वाकाराभिनिष्पत्तिरूपत्वात् । असत्त्वस्य च तादृशाकारवैकल्यरूपत्वाच्च असत्त्वेन ब्रह्मवेदनं नाम स्वन्यासोपासनाद्यभिनिष्पाद्यवात्सल्यकारुण्यादिगुणगत-ब्रह्मत्वसत्त्वेन रूपेण ब्रह्मज्ञानमेव । एवंविधज्ञानशालिनां न्यासोपासनादिस्वप्रवृत्तिबलेन ब्रह्मदयादिनिष्पादनपूर्वक-

मुख्यब्रह्मवशीकरणसामर्थ्यलक्षणस्वातन्त्र्याभिमानशालित्वादेव 'असन्नेव स भवति ' इत्यसत्त्वमुच्यते । 'असन्नेव' इत्यत्र एवकारस्य इवार्थकत्वाश्रयणेन असच्छब्दस्य शशशृङ्गादिपरत्वाश्रयणेन च शशशृङ्गादितुल्यत्वम 'असन्नेव' इत्यनेनोच्यते इति पक्षे तु दृष्टान्ताप्रसिद्धिः । असच्छब्दस्य अचित्परत्वाश्रयणे विशेषज्ञानाभावस्यैव इवशब्दार्थसादृश्योपपादकसाधारणधर्मत्वेन विवक्षणीयतया फलपर्यवसानं तुल्यमेव । तस्मात् 'असन्नेव' इत्यादिना सत्त्वेन ब्रह्म जानताम् स्वस्वरूपाविर्भावात्मकस्वेनरूपेणाभिनिष्पत्तिलक्षणसत्ताप्राप्तिः । असत्त्वेन ब्रह्म जानतां तादृशस्वस्वरूपाभिनिष्पत्तिवैकल्यलक्षणाप्राप्तिश्चोच्यते इत्येव स्वरसतः प्रतीयते । एवं सत्त्वेन ब्रह्मज्ञानस्य यथावज्ज्ञानरूपत्वेन श्रेष्ठत्वात् । असत्त्वेन ब्रह्मज्ञानस्य अयथावज्ज्ञानरूपत्वेन अपकृष्टत्वाच्च । महासिद्धान्तभाष्ये ब्रह्मविषयज्ञानसद्भावासद्भावाभ्यां आत्मनाशं आत्मसत्तां च वदति इत्यनच्छ्रुत्यर्थोऽनुगृहीतः । अत्रासद्भावः अयथावद्विषयकत्वलक्षणमपकृष्टत्वम् । सद्भावश्च यथावद्विषयकत्वलक्षणमुत्कृष्टत्वमिति वेदितव्यम् । ब्रह्म वेद इति यत् तत् असत्त्वेन इत्युक्तम् ' असत्त्वम् अस्तित्वेन् इत्युक्तं सत्त्वं च पूर्वोक्तं अयथावद्यथावद्विषयकत्वमेवेति बोध्यम् । अन्यथा असत्त्वेन अस्तित्वेन इत्यनयोः वैयर्थ्यस्य दुरुद्धरत्वात् । इत्थं च फलपर्यवसानं तुल्यमेव । इयांस्तु विशेषः । यथाश्रुतयोजनायामनध्याहारेणैव विवक्षितार्थलाभाल्लाघवम् ; 'ब्रह्म वेद' इति यत् तदसत्त्वेन्' इत्यादि योजनायां स्वारस्यभङ्गात् । यत्तच्छब्दयोः द्विवारमध्याहारप्रसङ्गाच्च । विवक्षितार्थालाभो बोधविलम्बः गौरवं चेति । तस्मात् 'असन्नेव' इत्यादेः यथोक्तार्थकत्वस्यैव न्याय्यत्वात् तद्बलात् फलप्रदानोपयिककृपादिविशिष्टवेषेण न्यासोपासनादिस्वप्रयत्नसाध्यत्वेन रूपेण ब्रह्म जानतां साधनान्तरनिष्ठाना स्वस्वरूपविनाशकत्वसिद्धिः दुरपह्नवैव ।

नच सर्वकर्मसमाराध्यस्य भगवतः प्रीणनविशिष्टवेषेण सर्वकर्मसाध्यतायाः प्रामाणिकत्वेन स्वप्रवृत्तिसाध्यत्वेन ब्रह्मज्ञानं यथावद्विषयकमेव इति वाच्यम् । * नमक्रतुं पश्यति * येनाक्षरं पुरुषं वेदसत्यं * असंभवन्तु तस्य मनोऽनुपपत्तेः * इत्यादिषु ब्रह्मणः स्वरूपान्यथाभावेन वा चेतनयत्नसाध्यतायाः प्रतिषिद्धत्वेन तस्यसाध्यत्वायोगात् । साध्यत्वे ब्रह्मणः अनित्यत्वप्रसङ्गाच्च । कथं पुनः सर्वकर्मसमाराध्यत्वमितिचेत् भगवतो नित्यसिद्धात् शेषित्वविशिष्टात् सौलभ्यादेवेति ब्रूमः । नैतावता न्यासोपासनादिसाधनव्यापाराणां ब्रह्मसाधनत्वम् । साधनत्वेन अनुष्ठीयमाणानां तेषां स्वफलार्थतया भगवदनन्यार्हशेषवृत्तित्वरूपभगवदाराधनत्वायोगात् । * येप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः * इत्युक्तदेवतान्तराराधनात्मकदोषरूपचेतनव्यापारेष्वपि * तेपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमिति भगवतः सहजसौहार्देनैव स्वाराधनत्वारोपणदर्शनेन भगवतः सर्वकर्मसमाराध्यतया निरुपाधिकनित्यवात्सल्यमात्रप्रयोजकत्वात् । एवं गोब्राह्मणादिहिंसार्थभगवन्मन्दिरादिप्रदक्षिणादिषु घुणाक्षरन्यायसिद्धेष्वपि भगवतः केवलवात्सल्येनैव सुकृतत्वारोपस्य अज्ञानसुकृतादिप्रतिपादकशास्त्रसिद्धत्वेन तन्न्यायेनैव साधनान्तरस्थलेऽपि दोषांशानादरपूर्वकभगवत्प्रीतेः केवलवात्सल्यादिकार्यत्वसिद्धया चेतनयत्नानां तत्रान्यथा सिद्धत्वेन कारणत्वा-योगात् । तस्मात् ब्रह्महिंसादीनां अज्ञानसुकृतत्वात्मना भगवदाराधनत्ववत् स्वातन्त्र्यगर्भन्यासोपासनाद्यात्मकाविधिपूर्वकं-

व्यापाराणामपि भगवदाराधनात्मकतायाः भगवद्वात्सल्यैकमूलकतया तेषां वात्सल्यादिविशिष्टवेषेण भगवत्साधकत्वज्ञानं भगवत्साध्यत्वज्ञानं च भ्रान्तिरेव । तथाच दयावात्सल्यादिविशिष्टवेषेण भगवन्तं स्वयत्नसाध्यत्वेन जानतां न्यासोपासनादिसाधनान्तरनिष्ठानां ❀ असन्नेव ❀ इत्यादिश्रुत्युक्तरीत्या स्वस्वरूपाविनाशकत्वोक्तिर्दुर्वारैव। एवं न्यासोपासनयोः भावनात्रयान्तर्गतब्रह्मभावनारूपत्वेन ❀ अधिकारबोधयुक्तेषु विद्यते भावभावना इति अधिकारबोधावच्छिन्नत्वात् । मत्फलसाधनत्वात् मदर्थमिदं कर्म इत्याकारकाधिकारिबोधस्य च ❀ अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु इति ब्राह्मणोऽहं मनुष्योऽहं इत्यादिरूपकर्ममूलकदेहात्माभिमानरूपविशेषज्ञानावच्छिन्नत्वाच्च अहङ्कारविषयप्रावण्यगर्भतया तद्बलेनापि तयोः स्वस्वरूपनाशकत्वं दुरपह्नवमेव । "अत्र हि देहात्माभिमानस्वतन्त्रात्माभिमानयोः मध्ये देहात्माभिमानरूपाहङ्कारस्य अधिकारबोधावच्छेदकत्वात् । स्वतन्त्राभिमानस्यच स्वतन्त्रः कर्ता इत्युक्तरीत्या भावनाकर्तृभूतअधिकारिस्वरूपान्तर्गतत्वात् ।। विषयप्रावण्यलक्षणममकारस्य मत्फलसाधनत्वान्मदर्थमिदं कर्म इत्यधिकारबोधान्तर्गतत्वाच्च । न्यासोपासननिष्ठयोः स्वात्मात्मीयैतदुभयविषयकममकारशालितया ❀ द्व्यक्षरस्तु भवेन्मृत्युः ❀ ममेति द्व्यक्षरो मृत्युः ❀ इत्याद्युक्तस्वरूपनाशपर्यवसायित्वं दुरुद्धरमेव ।

नच निरुक्ताहङ्कारममकारयोः मोक्षसाधननिष्पादकतया स्वरूपनाशकत्वासंभवश्शङ्क्यः । अयथोपासने प्राप्तिरपि अयथाभूतास्यात् इति आत्मोपासनाधिकरणभाष्यानुगृहीतरीत्या अयथावस्थितभगवत्प्राप्त्यादिलक्षणमोक्षसाधननिष्पादकत्वादेव न्यासाद्यन्तर्गत-अहङ्कारममकारयोः स्वरूपनाशात्मकतया वज्रलेपत्वात् । अयथावस्थितप्राप्तिर्नाम स्वार्थानुभवस्वार्थकैङ्कर्यादिप्रतिसंबन्धित्ववेषेण भगवत्प्राप्तिरेव । साचभगवदनन्यार्हशेषत्वादिलक्षणयथावस्थितचेतनस्वरूपावस्थान्वयरूपत्वात् स्वस्वरूपनाशात्मिकैव अतएव हि स्वात्मसन्तोषकारिणामात्यन्तिकस्वरूपनाशः पूर्वाचार्यैरुद्घुष्यते । न्यासोपासनादिस्वयत्नपराणां सर्वेषां ❀ शास्त्रफलं प्रयोक्तरि ❀ इतिन्यायेन स्वार्थपरतया स्वात्मसन्तोषकारित्वमविशिष्टम् । तत्रकेवलस्वात्मरूपमात्रं स्वार्थमनुभवति । साधनभक्तिनिष्ठश्च परमपुरुषानुभवविशिष्टं स्वस्वरूपं स्वार्थमनुभवति । न्यासनिष्ठस्तु कैङ्कर्यपर्यन्तानुभवविशिष्टं स्वस्वरूपं स्वार्थमनुभवति इति एतावानेव विशेषः । अतः न्यासोपासननिष्ठानामपि केवलवदेव अहङ्कारविषयप्रावण्याभ्यां स्वस्वरूपनाशकत्वमक्षतमेव ।

नच त्रैवर्गिकान्तर्गतकाम्यप्रावण्यस्यैव विषयप्रावण्यशब्दार्थतया न्यासोपासननिष्ठयोः तदन्वयो दुरुपपाद इति वाच्यम्; विषयशब्दस्य स्रक्चन्दनाङ्गनालिङ्गादिस्वभोग्यमात्रपरत्वेन तस्य प्राकृताप्राकृतसर्वविषयसाधारणतया त्रैवर्गिकमात्रपरत्वे मानाभावात् । नच अप्राकृतलोके स्रक्चन्दनाद्यनुभवाभावश्शङ्क्यः । ❀ जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा स यदि स्त्रीलोककामो भवति सङ्कल्पदेवास्य स्त्रियस्समुत्तिष्ठन्ते ❀ इत्यादिना तत्रापि तेषां श्रूयमाणत्वात् । न्यासादिनिष्ठानामल्पास्थिरफलत्वबुद्ध्यैव हि त्रैवर्गिकवैराग्यमुक्तम् । नत्वनन्यभोग्यत्वरूपस्वरूपप्राप्ततया । येन तेषामपरिच्छिन्ननित्यस्वर्गानुभवात्मके जक्षणादावनन्वयस्स्यात् । अत एव हि ❀ निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् । भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ।। ❀

अधिगतात्पस्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलापस्य अनन्त-स्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी ※ इति साधकानां स्वोदरपूरणार्थमेव ब्रह्मविचारप्रवृत्तिः इत्युच्यते तस्मात् "न्यासोपासननिष्ठानामपि साधन-दशायां तत्तुल्यायात् फलदशायां च विषयप्रावण्यस्यापि सत्त्वेन अहङ्कारममकारान्वयसत्त्वात् अनन्यभोग्यत्व-स्वरूपनाशो दुर्वार एव इति तादृशन्यासोपासनादिदु:खेन स्वस्यैव स्वरक्ष्यत्वेनान्वयस्य सूनिहस्तस्तनंधय-न्यासवत् स्वविनाशपर्यवसायित्वमुपपद्यत एव । इति साधनान्तराणां न्यासापेक्षया बलवदनिष्टानुबन्धित्वात् तादृशसाधनानुष्ठानानर्हत्वलक्षणं "प्रपद्ये" इत्युक्तमाक्षिप्ताधिकारिविशेषणमुपपद्यत एव इति सङ्ग्रहश्च ।

'भगवत्प्रीणनार्थत्वात् मोक्षार्थिषु विधानतः । स्वनाशकत्वं न्यासादेः अयुक्तमितिचेन्न तत् ।।

आत्मघ्नतैकशीलत्वात् असद्ब्रह्मेतिवेदनात् । तथाधिकारबोधादप्यहङ्कारादियोगतः ।।

स्वात्मसन्तोपकारित्वात् अयथा प्राप्तियोगतः । स्वनाशकत्वं न्यासदिनिष्ठानां दुरपह्नवम्' इति ।

पूर्वाधिकरणे वरणाधिकारिणः स्वविनाशकस्वरक्षणान्वयकत्वलक्षणसाधनान्तरानर्हत्वं "प्रपद्ये" इत्युक्त-माक्षिप्ताधिकारिविशेषणमुक्तम् । अथात्र न्यासोपासनादीनां स्वनाशपर्यवसानप्रयोजकतया उक्तयोः अहङ्कार-विषयप्रावण्ययोः वरणसाधारणत्वेन स्वविनाशपर्यवसानप्रयोजकत्वासंभवात् चेतनस्य पूर्वोक्तं न्यासाद्यनर्हत्वं न संभवति इत्याक्षिप्य तत्तथात्वं व्यवस्थाप्यते इति सङ्गतिः । तत्र संशयः साधनान्तरानर्हत्वरूपं वरणाधिकारि-विशेषणं संभवति वा ? न वा ? इति । तदर्थम् अहङ्कारविषयप्रावण्ययोः स्वस्वरूपनाशकत्वमस्ति ? न वा ? इति तदर्थम् तयोः वरणाधिकारिसाधारण्यम् अस्ति ? न वा ? इति 'यदा वरणाधिकारिसाधारण्यं स्यात् तदा तयोः स्वस्वरूपनाशकत्वायोगात् साधनान्तराणां स्वस्वरूपनाशकत्वं न संभवति' इति साधनान्तरानर्हत्वस्य वरणाधिकारिविशेषणत्वमसिद्धं स्यात् । यदा च तयोः वरणाधिकारिसाधारण्यं न स्यात्, तदा तयोः स्वरूप-नाशकत्वसंभवात् स्वरूपनाशकसाधनान्तरकत्वलक्षणं वरणाधिकारिविशेषणमुपपद्यत एव इति पूर्वोत्तरपक्षयोः फल-फलिभावः । अत्र पूर्वपक्षः—स्वस्वरूपविनाशकस्वरक्षणान्वयकत्वलक्षणसाधनान्तरानर्हत्वं वरणाधिकारिविशेषण-मित्यनुपपन्नम् साधनान्तराणां स्वरूपनाशपर्यवसानप्रयोजकतया उक्तयोः अहङ्कारविषयप्रावण्ययोः वरणाधि-कारिसाधारण्यत्वेन अभिचरिततया साक्षाद्वा परम्परया वा स्वरूपनाशहेतुत्वायोगात् । नच नमश्शब्दशिक्षित-स्वरूपस्यैव वरणाधिकारित्वात् तस्याहङ्कारममकारान्वयोऽसिद्धः इति वाच्यम् । तथा सति उपायोपेय-प्रार्थनात्मकस्य वरणस्यैवासिद्धिप्रसङ्गात् । नहि स्वातन्त्र्यशून्यस्य वरणे कर्तृत्वं संभवति । नवा फलप्रावण्यरहितस्य फलप्रार्थनातदुपायप्रार्थनयोः प्रसक्तिस्स्यात् एतेन ※ न कामकलुषं चित्तम् ※ न हि मे जीवितेनार्थः ※ एस्मा-वीद्वृत्तिरमुम् ※ इत्यादिना वरणस्याहङ्कारममकारसामान्यराहित्यं सिद्धम् इति प्रत्युक्तम् । अत एव च अहङ्कारस्य-अग्निस्पर्शवत् साक्षदाश्रयनाशकत्ववचनमपि प्रत्युक्तम् ।। किञ्च-विहितविषयप्रावण्यतद्धेतुभूतवर्णाश्रमाद्यभि-मानवतामर्जुनादीनां ※ मामेकं शरणं व्रज ※ इति वरणाधिकारदर्शनेन विषयप्रावण्यादेः स्वरूपनाशकत्वमपि अनुपपन्नम् । एतेन ※ विषस्य विषयाणां च दूरमत्यन्तमन्तरम् ※ इत्यादिप्रमाणबलात् विषयप्रावण्यसामान्यस्य

साक्षात्स्वरूपनाशकत्वमित्यपि परास्तम्; योग्यतानुसारात् तस्य निषिद्धविषयमात्रपरतायाः अवश्याश्रयणीयत्वात् । नच "अनन्यभोग्यत्वरूपचेतनस्वरूपनाशकत्वांशे विहितविषयप्रावण्यस्यापि योग्यतासत्त्वात् तस्यापि नाशकत्वमवर्जनीयमिति वाच्यम् ॥ ॐ ऋतावुपे यात् ॐ इत्याद्याश्रमधर्मादीनाम् ॐ अविप्लवाय धर्माणां पालनाय कुलस्य च ॐ इत्यादिविशेषविधिबलात् कैङ्कर्यान्तर्गतत्वेन तत्प्रावण्यस्य अनन्यभोग्यत्व भञ्जकत्वायोगात् । अन्यथा ज्ञानादिकानामपि लोके विहितविषयप्रवृत्तिदर्शनेन तद्विरोधस्य दुष्परिहरत्वात् नच अहङ्कारविषयप्रावण्ययोः साक्षात् स्वरूपनाशकत्वासंभवेऽपि स्वकार्यद्वारा तथात्वं दुस्त्यजम् ॥ इति वाच्यम् । तत्कार्यविशेषाणामपि ब्रम्हविद्यामाहात्म्यादेवाश्लेषविनाशविषयत्वेन स्वरूपनाशकत्वायोगात् । नच ब्रम्हविदपचाररूपकार्यविशेषस्य अश्लेषविनाशविषयतया तद्द्वारा तयोः नाशकत्वं दुर्वारमेव इति वाच्यम् ॥ वरणेपि तत्संभवेन तस्य न्यासोपासनमात्रसाधारण्यायोगात् । लोके भागवतविरोधिनां तत्क्षणविनिपातादर्शनेन भागवतापचारस्वरूपनाशकत्वपरवचनानां अवश्यपरिहरणीयत्वमात्रतात्पर्यकतायाः अवश्याश्रयणीयत्वाच्च ॥ एतेन ॐ अवमानक्रिया तेषां संहरत्यखिलम् जगत् ॐ इत्यादिप्रमाणोदाहरणमपि प्रत्युक्तम् ॥

तस्मात् अहङ्कारविषयप्रावण्यसामान्यस्यसाक्षात् परम्परया वा स्वरूपनाशकत्वनियमायोगात् योगे वा तस्य न्यासोपासनमात्रसाधारण्यायोगाच्च स्वरूपविनाशकन्यासोपासनादिस्वरक्षणान्वयकत्वलक्षणसाधनान्तरानर्हत्वस्य वरणाधिकारिविशेषणत्वमनुपपन्नमेवेति ॥

अत्रोच्यते (अहङ्कारम् अग्निस्पर्शम् पोले) इत्यादि । अहङ्कारविषयप्रावण्ययोः स्वस्वरूपनाशकत्वात् तद्गर्भसाधनान्तरानर्हत्वस्य वरणाधिकारिविशेषणत्वमुपपद्यत एव ॐ ममेति व्यक्षरो मृत्युः ॐ इति वचनबलेनैव तयोः स्वरूपनाशकत्वस्य सिद्धत्वात् । न च विषयप्रावण्यस्य अहङ्कारसत्ताधीनसत्ताकत्वात् अहङ्कारस्य स्वाश्रयभूतस्वरूपसत्ताधीनसत्ताकत्वाच्च तयोः स्वस्वरूपविनाशकत्वमनुपपन्नमिति वाच्यम् । अग्निस्पर्शक्रिपस्पर्शयोरिव तयोरप्याश्रयनाशकत्वोपपत्तेः न च ॐ अहं सर्वं करिष्यामि ॐ मम सहजकैङ्कर्यविधयः ॐ इत्यादिषु यथाऽवस्थितस्वरूपनिष्ठानामपि विषयविशेषे तत्सद्भावदर्शनेन तयोः स्वरूपनाशकतायाः निषिद्धविषयसंबन्धायत्तत्वस्यावश्याश्रयणीयतया अहङ्कारविषयप्रावण्यसामान्यस्य स्वरूपनाशकत्वमनुपपन्नमिति वाच्यम् । यथावत् स्वरूपविषयकाहङ्कारतन्मूलकोद्देश्यविषयप्रावण्ययोः स्वरूपानुकूलत्वेऽपि भगवदनन्यार्हशेषत्वविरोधिस्वातिशयाधानार्हत्वलक्षणस्वस्वातन्त्र्याभिमानात्मकाहङ्कारस्य तन्मूलकस्वार्थानुभवादिनिषिद्धविषयप्रावण्यस्य च स्वरूप नाशकत्वनियमानपायात् । न च स्वार्थानुभवादीनां निषेधासिद्धिरिशङ्कया । मन्त्ररत्नोत्तरखंडनमश्शब्दे तेषां कंठतो निषिद्धत्वात् । न चैवमपि न्यासोपासनादिस्थले तादृशनिषिद्धाहङ्कारविषयप्रावण्यसद्भावे प्रामाण्याभावात् ॐ तेषां स्वरूपनाशकत्वासिद्धिरिशङ्कया । न्यासोपासनयोः भावनात्रयान्तर्गतब्रम्हभावनारूपत्वेनाहङ्कारगर्भाधिकारिबोधवैशिष्ट्यात् । ॐ शास्त्रफलं प्रयोक्तरि ॐ इति न्यायेन स्वार्थं प्रत्येव हेतुत्वाच्च तयोः निषिद्धाहङ्कारविषयप्रावण्यस्य वैशिष्ट्यस्य पूर्वमेवोक्तत्वात् । न च वरणस्थलेऽपि उपायोपेयप्रार्थनाकर्तृत्वबलात्

स्वातन्त्र्यादिसिद्धया तुल्यदोषत्वं शङ्क्यम् यजमानवरणविषयीकृतऋत्विक्तृष्ठिकर्तृत्ववत् भगवद्वरणविषयीकृतवरणाधिकारिकर्तृतायाः प्रयोज्यकर्तृतारूपत्वेन तस्य स्वातन्त्र्यगन्धासहत्वात् । वरणस्यानुपायत्वेनाधिकारिबोधाद्यसंभवात् । अत एव ※ शास्त्रफलं प्रयोक्तरि ※ इति न्यायाविषयत्वेन न्यासादिवत् स्वार्थताहेतुत्वाद्यसंभवाच्च ॥

भगवदनन्यार्हशेषवृत्तिज्ञानेच्छाकृतीनां स्वस्वरूपस्य स्वरूपाविर्भावमात्ररूपतया तदन्तर्गतस्य मन्त्ररत्नोत्तरखण्डोक्तफलप्रार्थनस्य यावदात्मभाविफलान्तर्गतत्वेन निरुपाधिकतया तस्य शेषत्वविरुद्धस्वातन्त्र्यगन्धासहत्वात् ।

एवमेव मन्त्ररत्नपूर्वखण्डप्रतिपाद्योपायत्वप्रार्थनस्यापि भगवदेकशरणत्वात्मकानन्यशरणत्वफलोपधानात्मत्वेन स्वरूपाविर्भावमात्ररूपतया तस्याप्यहङ्कारप्रसङ्गासहत्वाच्च ॥ न च इच्छां प्रति स्वार्थताज्ञानस्य कारणतायाः लोकसिद्धत्वेन मन्त्ररत्नखण्डद्वयोक्तप्रार्थनयोरपि स्वार्थत्वं दुरपह्नवमेवेति वाच्यम् उत्तरखंडनमःपदेनैव स्वार्थतासामान्यनिवृत्तेः प्रार्थ्यमानत्वेन तयोः स्वार्थताकल्पनस्य तद्विरुद्धत्वात् । न च नमःशब्दोक्तप्रार्थनायाः देहात्माभिमानतन्मूलकनिषिद्धविषयप्रावण्यादिमात्रपरत्वं शङ्क्यम् । संकोचे मानाभावात् । ※ न च सीता त्वया हीना न चाहमपि राघव ※ इति भगवत्संश्लेषैकजीवनेन सौमित्रिणा, ※ जहि मां निर्विशङ्कस्त्वं प्रतिज्ञामनुपालय ※ इति भगवदतिशयार्थं स्वविनाशस्यापि प्रार्थितत्वेन प्रार्थना चेत् स्वार्थैवेति नियमासंभवाच्च । अत एव स्वरूपज्ञानफलीभूतप्रार्थनासामान्यस्य केवलपरार्थतासिद्धेश्च । एवम् ※ न कामकलुषं चित्तं मम ते पादयोः स्थितम् । कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ※ इति खिलऋक् जितन्तावचने पूर्वार्धेन मन्त्ररत्नपूर्वखंडोक्तभगवच्चरणारविन्दशरणागतिरूपसिद्धोपायनिष्ठायाः मोक्षपर्यन्तस्य फलकामनाप्रयुक्तत्वलक्षणकामकालुष्यप्रतिषेधपूर्वकं ※ मम ते ※ इति केवलप्राप्त्यनुसन्धानकार्यतायाः प्रतिपादनात् तदुत्तरार्धेन मन्त्ररत्नोत्तरखंडोक्तप्रार्थनायाः स्वार्थतागन्धविधुरकेवलपरार्थ्यमात्रविषयकत्वप्रदर्शनपूर्वकं स्वस्वरूपदुःखावहसुर-नर-तिर्यक् स्थावरात्मकसर्वविधप्राकृतजन्मनामपि केवलपरार्थतयैव प्रार्थितत्वाच्च । मन्त्ररत्नोक्तप्रार्थनयोः स्वार्थताबुद्धिप्रयुक्तत्वोक्तेः तद्विरुद्धत्वाच्च । नच मन्त्ररत्नप्रार्थनाविषयोपायोपेययोः निरतिशयभोग्यतया प्रार्थनायां स्वार्थताया दुस्त्यजत्वं शङ्क्यम् । विषयगतनिरतिशयभोग्यतायाः स्वार्थतामूलोन्मूलनकरत्वस्य ※ जितं ते पुंडरीकाक्ष ! नमस्ते ※ इत्यादिसिद्धत्वेन विषयभोग्यतातिशयस्य स्वार्थतापादकत्वोक्तेस्तद्विरुद्धत्वात् ॥

न चैवं लौकिकानुभवविरोधः । लोकेऽपि गुणोत्तराप्राप्तविषयसत्ता [क्त ?] नां तद्गुणजिततया स्वसत्ताविनाशनेनापि तदतिशयाधानस्य सुप्रसिद्धत्वात् । अत्रापि ※ ते पादयोः स्थितम् ※ इति कामकालुष्याभावप्रयोजकतया भगवच्चरणारविन्दभोग्यतातिशयस्योक्तत्वेन तद्भोग्यतायाः स्वार्थताहेतुत्वोक्तेः तद्विरुद्धत्वाच्च । किं च ※ रामे प्रमादं मा कार्षीः ※ भरतेन तदानघः ※ इत्यादिना विषयभोग्यतानिबन्धनलावण्यस्यापि कैङ्कर्यविरोधितया नमश्शब्दान्तर्भावस्य सिद्धत्वेन द्वयोक्तप्रार्थनयोः विषयभोग्यताबलेन स्वार्थताकल्पनस्य नमःशब्दविरुद्धत्वाच्च ॥ ननु ※ न कामकलुषम् ※ इत्यादिजितान्तावचने ※ न कामकलुषम् ※ इति न काममामान्य-

निषेधः । किं तु निषिद्धविषयकामनामात्रनिषेधएव; 'कलुष' पदस्वारस्यात् । उत्तरत्र ꣸ कामये वैष्णवत्वं तु ꣸ इति भगवद्दास्यकामनोक्तिस्वारस्याच्च ꣸ सर्वजन्मसु ꣸ इत्यनेनापि न प्राकृतजन्मप्रार्थनम्, इत्युच्यते । किं तु प्रारब्धफलस्यावश्यानुभाव्यतया संभावितप्रारब्धफलजन्मानुवादमात्रपरं तत्, इति, यदि प्रारब्धकर्मवशात् जन्मानिभवेयुः तदा तेषु वैष्णवानुवृत्तिरेव प्रार्थ्यते तस्मात् अस्य वचनस्य पूर्वोक्तार्थकत्वमनुपपन्नमिति चेत्, नैवम् । प्राप्तशेषिभगवत्पादारविन्दव्यवस्थितस्य मुमुक्षुचित्तस्य ꣸ स्थितेरविन्दे मकरन्दनिर्भरे ꣸ इत्याद्यनुगृहीत-रीत्या निषिद्धविषयप्रावण्यस्यात्यन्ताप्रसक्तत्वेन तत्प्रतिषेधायोगात् । स्वार्थत्वेन भगवदनुभवादिकामनायाः भगवदनन्यार्हशेषत्वविरुद्धत्वेन नमश्शब्दनिषिद्धतया, काम, शब्देन स्वार्थानुभवादिकामनोक्तौ, कलुषपद-स्वारस्यभङ्गाभावात् । उत्तरत्र ꣸ कामये वैष्णवत्वम् ꣸ इत्यादौ वैष्णवत्वशब्देन स्रक्चन्दनादिवत् विष्णवर्थत्वोक्त्या केवलशब्देन स्वार्थत्वनिषेधाच्च, केवलपारार्थ्यकामनोक्त्या तदनुसारेणापि ꣸ न कामकलुषम् ꣸ इत्यत्र स्वार्थगर्भ-कामनाया एव स्वरसतो निषेधप्रतीतेः शरणागतानां दृप्तानामपि जन्मान्तराप्रसक्त्या, ꣸ सर्वजन्मसु ꣸ इत्यस्या नुवादपरत्वासंभवात् । ꣸ अहृतसहजदास्याः सूरयः स्रस्तबन्धा विमलचरमदेहा इत्यमी रङ्गधाम्नि । महितमनुज-तिर्यक्स्थावरत्वाः श्रयन्ते ꣸ इति नित्यानामपि केवलभगवदतिशयाधानार्थं तिर्यक्स्थावरादिभावदर्शनेन तदनु-सारेण ꣸ सर्वजन्मसु केवलम् ꣸ इत्यत्र सर्वेषां जन्मनां भगवद्दास्यार्थतया प्रार्थनाया एव स्वरसतः प्रतीतेः ॥ ꣸ अहं कदंबो भूयासम् ꣸ कुन्दो वा यमुनातटे ꣸ रथ्याशुनामन्यतमो भवेयम् ꣸ इत्यादिषु तत्प्रार्थनाया कण्ठोक्तत्वाच्च । ꣸ न कामकलुषम् ꣸ इत्यादेः यथोक्तार्थपरत्व एव स्वारस्यात् । न च केवलपरार्थस्य प्रार्थना न संभवति इति शंक्यम् । लोके गुणजितानां विषयप्रवणानां केवलपरार्थप्रार्थनादर्शनेन विरोधाभावात् । स्वातन्त्र्याभिमानिनां स्वार्थपरत्ववत् स्वपरार्थाभिज्ञानां केवलपारार्थ्यपरतायाः एवोचितत्वाच्च ॥

एतेन वरणाधिकारिणां अहङ्कारममकारशून्यत्वे, तान् प्रति परार्थानुभवकैङ्कर्ययोः पुरुषार्थत्वं दुरुप-पादमित्यपास्तम् । अहङ्कारममकारविधुराणां स्वार्थत्वेन किञ्चिदर्थविषयकेच्छाया अनुपपन्नत्वेपि केवल परार्थ-त्वेनैव अनुभवादिविषयक इच्छाया अबाधितत्वात् । अत एव हि स्वदुःखकरस्यापि भगवद्विश्लेषस्य भगवदति शयार्थं सौमित्रिणा प्रार्थनमुपपद्यते । तस्मात् ꣸ न कामकलुषम् ꣸ इत्यादिना मन्त्ररत्नखण्डद्वयोक्तप्रार्थनयोः स्वार्थतागन्धराहित्यसिद्धिर्दुर्वारैव ।

एवं ꣸ न हि मे जीवितेनार्थो नैवार्थैर्नच भूषणैः ꣸ इत्यादिसीतावचनैः भगवद्भागवतकिञ्चित्कारानुप-युक्तदेहधारणादीनां नैरर्थक्येन त्याज्यतोक्त्या तद्बलेनापि मन्त्ररत्नोक्तप्रार्थनयोः केवलपरार्थताबुद्धिपूर्वकत्व-सिद्धेरव्याहतत्वाच्च ।

ननु ꣸ न हि मे जीवितेनार्थः ꣸ इत्यादिवचने ꣸ वसन्त्या राक्षसीमध्ये विना रामं महारथम् ꣸ इत्युत्तरार्धेन पतिविश्लिष्टराक्षसीमध्यजीवनस्य दुःखरूपतया तादृशजीवनादेरेव त्याज्यत्वप्रतीत्या तद्वचनस्य निरुक्तार्थपरत्वमनुपपन्नमिति चेन्न । असञ्जातविरोधितया प्रबन्धेन पूर्वार्धेन जीवितादीनां स्वार्थतासामान्यस्य

कंठतो निषिद्धत्वात्। जीवितादिस्वार्थतारहित्यप्रमाणप्रसिद्धिपरेण, हि शब्देन, मूलमन्त्र मन्त्ररत्नादिगत नमश्शब्दादिरूपप्रबलप्रमाणप्रसिद्धिप्रतिपादनाच्च। जीवितादीनां स्वार्थतासामान्याभावस्य सुप्रतिष्ठितत्वेन तदुत्तरार्धेन तत्संकोचायोगात्। उत्तरार्धस्य पूर्वार्धोक्तजीवितादिस्वार्थतासामान्याभावस्योपपादकतयैव [स्वा] सार्थत्वे संभवति तद्बाधकत्वायोगाच्च। स्वार्थत्वं हि नाम स्वेच्छाविषयत्वम्। तच्च द्विविधम्। स्वातिशय-तत्प्रयोजकत्वादिज्ञानाधीनेच्छाविषयत्वम्, परातिशय-तत्प्रयोजकत्वादिज्ञानाधीनेच्छाविषयत्वं चेति। तत्र प्रथमः स्वार्थत्वाभावः भगवदनन्यार्हशेषत्वपारतन्त्र्यादिप्रतिपादकबहुप्रमाणप्रसिद्धः। तत्प्रसिद्धिश्चात्र, हि शब्देन संगृहीतः। द्वितीयः स्वार्थत्वाभावश्च अत्र भगवद्भागवतसान्निध्याभावरूप उपपत्तिसिद्धः। साऽप्युपपत्तिः, हि शब्दान्तर्गतैव। उपपत्त्यन्वितप्रसिद्धेरपि प्रसिद्धित्वेन रूपेण हि शब्दद्योत्यत्वात्। तथा चोत्तरार्धेन तादृशद्वितीयस्वार्थत्वाभावोपपादकोपपत्तिरेव प्रतिपाद्यते। तत्र ※ वसन्त्या राक्षसीमध्ये ※ इत्यनेन भागवतकिञ्चित्कारोपयुक्ततत्सन्निधानविरहो विवक्षितः ※ विना रामं महारथम् ※ इत्यनेन भगवत्किञ्चित्कारोपयुक्ततत्सान्निध्याभावः प्रतिपादितः। न च राक्षसीगणस्य त्रिजटाभिमाननिष्ठत्वेन चरमपर्वनिष्ठभागवतसमवायात्मकत्वेन भागवतसान्निध्याभावोक्तिः बाधितेति वाच्यम्। तथा सति राक्षसीचित्रवधोद्युक्तस्य मारुतेः स्वरूपनाशप्रसङ्गात्। तत्प्रवृत्तेः अज्ञानकृतत्वान्न दोष इति चेन्न। शिंशुपावृक्षाग्रे स्थित्वा त्रिजटोपदेशादिकमध्यक्षितवतः तत्तज्ञानासंभवात्। मारुत्यज्ञानविषये भवादृशानामभिज्ञानायोगाच्च। मैथिलीकर्तृकराक्षसीरक्षणरूपकार्यबलादेव तत्तथात्वं ज्ञायते इति चेन्न। तद्रक्षणानन्तरं राक्षसीजनपादनिपातादिना स्वापराधक्षामणादर्शनेन तद्रक्षणस्य राक्षसीजनभागवतत्वे कल्पकत्वोक्त्ययोगात्। तादृशराक्षसीजनवैधव्यकारिणः भगवतश्च असमीक्ष्यकारित्वप्रसङ्गात्। राक्षसीनां ※ न संशयोऽस्ति तद्भक्तपरिचर्यारतात्मनाम् ※ तेनैव ते प्रयास्यन्ति ※ इत्याद्युक्ताप्रतिहतशक्तिकचरमोपायनिष्ठत्वे सीताकर्तृकतद्रक्षणस्य ※ लघुतरा रामस्य गोष्ठी कृता ※ इति जघन्याधिकारिरक्षकभगवद्गोष्ठीलघूकृतिहेतुत्वोक्त्ययोगात् ※ तथैवार्द्रापराधाः ※ इत्याद्रापराधानुवृत्त्ययोगाच्च। न हि चरमपर्वनिष्ठानां बुद्धिपूर्वकापराधानुवृत्तिः संभवति ? न चैवमपि त्रिजटाया भागवतत्त्वस्याक्षतत्वेन तत्सन्निहितायाः सीतायाः भागवतासन्निधानोक्तिर्बाधिता, इति वाच्यम्। तदितरराक्षसीकर्तृकप्रतिरोधबलेनैव तत्सन्निधानस्याप्यकार्यकारितायाः ※ वसन्त्या राक्षसीमध्ये ※ इत्यनेन विवक्षितत्वात्। न हि एकाक्षी एककर्ण्यादयः सीतायाः त्रिजटया सह ※ बोधयन्तः परस्परम् ※ इत्यादिरीत्या वृत्तकीर्तनादिकं वा सहन्ते ? तस्मात् अस्य श्लोकस्यायमेवार्थः; मत्संबन्धिजीवितार्थभूषणादिजन्यम् अर्थशब्दप्रतिपाद्येच्छाविषयसामान्यं नास्त्येव, इति पूर्वार्धे प्रतिज्ञातस्यार्थस्य हिशब्देन प्रमाणप्रसिद्धौ हेतू संगृहीतौ। जीवितादीनां स्वार्थजननस्वरूपयोग्यत्वाभावः, परार्थजननसामग्र्यन्तराभावश्च। तत्र पूर्वहेतोः संप्रतिपन्नत्वेन उपपादननिरपेक्षत्वात् उत्तरहेतुमात्रमुत्तरार्धेनोपपद्यते; तत्र राक्षसीमध्ये इत्यनेन भागवतसमवधानाभावः, समवहितभागवतकिंचित्कारप्रतिबन्धकसमवधानं चाभिप्रेतमिति। ननु निरुक्तश्लोके पतिविश्लिष्टशत्रुमध्यवासदशायां जीवितानां स्वार्थतानिषेध-

स्वारस्यात् तदन्यदशायां तेषां स्वार्थत्वं प्रतीयते इति चेन्न । अर्थसामान्यस्यैवात्र प्रतिषेधात् । न ह्यत्र मे जीवितेन मदर्थो नास्ति इत्यादिरूपेण प्रतिषेधः श्रूयते ? किं तु मे जीवितेनार्थो नास्ति इत्यादिनार्थसामान्यमेव प्रतिषिध्यते । मे इत्यस्य षष्ठ्यन्तास्मच्छब्दस्य जीवितादिशब्दैरेवान्वयात् ।

तथा च पतिविश्लिष्टशत्रुमध्यवासदशायां स्वजीवितादिजन्यप्रयोजनसामान्यनिषेधात् तदन्यदशायां प्रयोजनसामान्यमेव सिद्ध्यति, न तु स्वप्रयोजनम्। न च प्रयोजनसामान्यसिद्धौ सत्यां स्वापेक्षयैव प्रयोजनत्वस्य वक्तव्यत्वेन तस्य स्वप्रयोजनत्वसिद्धिर्दुर्वारैवेति वाच्यम् । प्रकृते 'अर्थ' शब्दोक्तस्य प्रयोजनत्वस्य अर्थ्यते इत्यर्थः इति व्युत्पत्त्या प्रार्थनाविषयत्वमात्ररूपत्वेन पूर्वोक्तरीत्या केवलपरार्थेऽपि स्वापेक्षया प्रार्थनीयत्वसत्त्वेनानुपपत्त्यभावात् । न चैवमपि प्रतिबन्धकनिवृत्तिपूर्वकपतिसंश्लेषदशायां प्रयोजनसामान्यसद्भावसिद्धौ स्वप्रयोजनस्यापि सिद्धिसंभवात् तन्निषेधः प्रकृते न सिद्ध्यत्येवेति वाच्यम् । ❋ न हि मे जीवितेनार्थः ❋ इत्यत्र हिशब्देन मूलमन्त्रमन्त्ररत्नादिनमश्शब्दादिरूपप्रमाणप्रसिद्धिप्रतिपादनेन तद्बलेनैव स्वप्रयोजनसामान्यनिषेधसिद्धेः। न चैवमपि अस्य वचनस्य प्रोषितभर्तृकस्त्रीधर्ममात्रपरत्वेन प्रकृतार्थाप्रामाण्यं दुर्वारमिति शङ्क्यम् । ❋ लङ्कारुद्धविदेहराजतनयान्यायेन लालप्यते ❋ इति सङ्कल्पसूर्योदयरीत्या परिशुद्धात्मस्वरूपस्य वैदेहीसधर्मतया तस्य वचनस्य प्रकृतार्थप्रामाण्योपपत्तेः । श्रीद्राविडसामचतुर्थशतकाष्टमदशके भगवता पराङ्कुशमुनिना ❋ मणिमामै कुरैविलमे ❋ इत्यादिना एतद्वचनार्थस्य परिशुद्धात्मस्वरूपनिष्ठतायाः प्रकाशितत्वाच्च । एतेन निरुक्तवचने जीवात्मसत्तानैरर्थक्याकथनेन जीवात्मस्वरूपस्य स्वार्थत्वमस्तीति शङ्का परास्ता । अत्र दशमगाथायाम् ❋ उयिरिनाल् कुरैविलमे ❋ इति जीवात्मसत्तानैरर्थक्यस्यापि प्रतिपादितत्वात् ।

किं च ❋ न देहं न प्राणान् ❋ इत्यादिश्लोके श्रीमद्यामुनमुनिभिः स्वार्थसामान्यस्य केवलपारार्थ्यलक्षणस्वस्वरूप विरोधित्वेन असह्यताभिधानपूर्वकं तन्निवृत्तिप्रार्थनेन तद्बलादपि वरणस्थले अहङ्कारादिसामान्याभावसिद्ध्या अहङ्कारविषयप्रावण्ययोः न्यासोपासनादिनिष्ठासाधारण्येन स्वरूपनाशकत्वमुपपद्यत एव । ननु ❋ न देहम् ❋ इत्यादिश्लोके भगवच्छेषत्वानुपयुक्तानामेव निवृत्तिप्रार्थनया, तदुपयुक्तानां स्वार्थानामनिषेधः प्रतीयते इति चेन्न । ❋ परगतातिशयाधानेच्छया उपादेयत्वमेव यस्यस्वरूपं स शेषः ❋ इति शेषत्वस्य अन्यातिशयाधानव्यवच्छेदकावधारणघटिततया स्वार्थतायाः तद्विरुद्धत्वेन स्वार्थतयोपदीयमानानां भगवच्छेषत्वोपयुक्तत्वासंभवादेव तेषामन्तर्भावाभावेन निषेधसिद्धेः ॥ न च यजमानादिगतयागादिशेषत्वस्य आकारान्तरेण स्वशेषत्वसहतया तन्न्यायेन भगवच्छेषत्वस्यापि स्वशेषत्वाविरोधः शङ्क्यः । यागस्थले यागार्थताविरहितरूपान्तरसत्त्वेन तेन रूपेण स्वशेषत्वसंभवेऽपि भगवच्छेषत्वस्य केवलान्वयितया तद्रहितरूपान्तराभावेन तदनुपपत्तेः ।

प्रणवे मध्यमाक्षरेणानन्यार्हत्वोक्त्या नमःपदे तद्विवरणाच्च । भगवच्छेषभूतानां प्रकारान्तरेण स्वशेषत्व शङ्काया अपि विशिष्य निषिद्धत्वेन प्रकृते यागयजमानादिन्यायानवताराच्च ॥

न च उकारनमःपदयोः प्रत्यक्षविरोधात् दौर्बल्यम्, आत्मस्वरूपस्यातीन्द्रियत्वेन तद्विषये शास्त्रस्यैव प्राबल्यात् । अत एव लोकदृष्टान्यशेषतासामान्यस्य कर्मोपाधिकतायाः कल्पनीयत्वाच्च । एतेन देवतान्तरशेषत्वादि-ग्राहकशास्त्रविरोधोऽपि प्रत्युक्तः । प्रबलप्रमाणभूतप्रणवनमःपदाद्यनुरोधेनैव तेषामपि नेयत्वात् । अत एव च स्वार्थानु-भवादिसाधनविधायकशास्त्रबलादेव प्रणवनमःपदादिसंकोचः किं न स्यात् ? इति शङ्कापि परास्ता । प्रणव-मन्त्रशेषादीनां सर्ववेदमूलत्वेन प्रबलतया तद्विवरणभूतानां वेदादीनां तदनुरोधेन नेयत्वात् । श्रुतिस्वारस्यविरुद्धे स्मृतीनामिव प्रणवस्वारस्यविरुद्धार्थे वेदानां तात्पर्यायोगात् । तस्मात् स्वार्थताया भगवच्छेषत्वविरुद्धतया देहादि-मोक्षपर्यन्तस्वार्थसामान्यस्य भगवच्छेषत्वबहिर्भावसिद्धिर्दुर्वारैव । ननु लोके सार्वभौम शुकक्षीरस्वादनयथेच्छाविह-रणादीनां शुकबुद्ध्या स्वार्थानामेव सतां सार्वभौमगतानन्दातिशयाधायकत्ववत् ※ जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ※ इत्यादिमुक्तव्यापाराणां स्वार्थत्वे सत्यपि परार्थत्वमुपपद्यते इति चेन्मैवम्;

यागयजमानयोरिव सार्वभौमशुकयोरपि शेषशेषिभावस्य अन्यशेषत्वसहत्वेन तत्तथात्वसंभवेऽपि चेतनेश्वर-योश्शेषशेषिभावस्य अनन्यार्हताविशिष्टत्वेन प्रकृते तदयोगात् । अत एव हि प्रकृते केवलं ※ शेषत्वविभवाद्बहिर्भूतम् ※ इत्यनुक्त्वा ※ नव शेषत्वविभवाद्बहिर्भूतम् ※ इत्येवोच्यते । अनन्यार्हतावैशिष्ट्यमेव हि इतरशेषत्वापेक्षया भगवच्छेषत्वस्य व्यावृत्तिः । नचैवं स्वस्वरूपादीनां स्वापेक्षयाऽप्यानन्दरूपताया अवर्जनीयत्वेन भगवच्छेषत्वा-भावः प्रसज्यत इति वाच्यम् । शेषलक्षणघटकस्यातिशयस्य स्वत इच्छाविषयत्वरूपेणैव निविष्टतया स्वापेक्षया तादृशातिशयस्यैव शेषत्वलक्षणघटकैवकारव्युदसनीयतया विरोधाभावात् । नह्यानुषङ्गिकस्वस्वरूपाद्यानन्दानाम् उद्देश्यत्वलक्षणमिच्छाविषयत्वमस्ति येन तेषां प्रधानगतोद्देश्यतालक्षणं स्वत इच्छाविषयत्वं संभाव्येत । नचैवं सति लीलाविभूतेर्भगवच्छेषत्वाभावप्रसङ्गः; सर्वेषां बद्धानां स्वातिशयाधानेच्छयोपादानसत्त्वादिति वाच्यम् । लीलारसरूपभगवद्गतातिशयस्य स्वस्वरूपविरुद्धधर्मान्वयैक्यनिष्पाद्यत्वेन तत्र स्वातिशयाधानस्य परातिशया-धानार्थत्वेन विरोधाभावात् । अत एव हि ※ पुंसा पण्यवधूविडम्बिवपुषा धूर्तानिवायामयन् ※ इत्यादिकमनु-गृहीतम् । नच स्वार्थानुभवादीनामपि एवमेव भगवदतिशयाधानार्थकत्वस्य संभवात् भगवच्छेषत्वबहिर्भावशङ्कयः । तथासति अविद्याकर्मवासनारुचिप्रभृतीनामपि प्रकृतभगवच्छेषत्वविभवबहिर्भावाभावप्रसङ्गात् । नच ※ शेषत्व-विभवाद्बहिर्भूतम् ※ इत्यत्र असंकोचपरेण विभवशब्देन शेषत्वविरुद्धधर्मान्वयलक्षणस्वरूपसंकोचसामान्यनिवृ-त्त्युक्त्या लीलारसहेतुभूतानामविद्यादीनां तदभावेन प्रकृतशेषत्वविभवबहिर्भाव उपपद्यत एवेति वाच्यम् । तुल्य-न्यायेन स्वार्थानुभवादीनामपि तद्बहिर्भावसिद्धेः निष्प्रत्यूहत्वात्; तेषामपि स्वार्थत्वलक्षणस्वरूपविरुद्धधर्मा-न्वयात्मकसंकोचसहकृतत्वाविशेषात् । नचैवं सति स्वार्थानुभवादीनां मोक्षान्तर्भावासिद्धिप्रसङ्गः; प्रकृतिसंबन्ध-निवृत्तिमात्रस्यैव मुक्तिशब्दार्थत्वेन विरोधाभावात् । ※ स्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते ※ इति भाष्यं तु परमपुरुषार्थलक्षणमोक्षमात्रविषयम्; नतु मोक्षसामान्यविषयम् । अत एव हि ※ त्वं न्यञ्चद्भि-रुदञ्चद्भिः कर्मसूत्रोपपादितैः । हरे विहरसि क्रीडाकन्तुकैरिव जन्तुभिः ※ इत्यत्र स्वयत्नजनितोदञ्चनात्मक-

मुक्त्यन्तराणां भगवल्लीलारसाधायकत्ववचनमुपपद्यते । तस्मात् न्यासोपासनादिजन्यजघन्यमोक्षान्तर्गतस्वार्थानुभवादीनां लीलाविभूत्यन्तर्गतस्वर्गाद्यनुभवादिवत् स्वार्थतालक्षणस्वरूपविरुद्धधर्मान्वयाविशेषात् तेषां प्रकृतशेषत्वविभवबहिर्भावः उपपद्यत एव । तथा च ❀ तव शेषत्वविभवाद्बहिर्भूतम् ❀ इत्यस्यायमर्थः । तवेत्यनेन यागयजमानादिसाधारणशेषशेषिभावव्यावर्तनानन्यार्हत्वं बोध्यते । शेषत्वशब्देन तत्फलोपधानरूपा शेषवृत्तिर्विवक्षिता । विभवशब्देन शेषत्वविरुद्धधर्मान्वयलक्षणसंकोचराहित्यमभिप्रेतम् । इत्थंच, अनन्यार्हत्वविशिष्टस्यासंकुचितं फलोपधानं तवशेषत्वविभवादित्यनेनोक्तं भवति । शेषत्वविभवाद्बहिर्भूतमित्यनेन तादात्म्य-स्वभावप्रयोजकाभावप्रतियोगितानवच्छेदकधर्मानवच्छिन्नत्व एतदन्यतरसंबन्धेन शेषत्वविभवविशिष्टान्यतमत्वमभिप्रेतम् । एवं च स्वार्थदेहप्रभृतिनान्यत्किमपीत्युक्तस्वार्थानुभवकैङ्कर्यपर्यन्तानां सर्वेषां भगवच्छेषत्वविभवतादात्म्याभावात् भगवच्छेषत्वविभवाभावप्रयोजकाभावप्रतियोगितानवच्छेदकस्वार्थत्वाद्यवच्छिन्नत्वेन तदनवच्छिन्नत्वाभावाच्च निरुक्तान्यतरसंबन्धेन शेषत्वविभवविशिष्टान्यतया भगवच्छेषत्वविभवाद्बहिर्भूतत्वेन तन्निवृत्तिप्रार्थनाशिरस्कस्य वरणस्य अहङ्कारविषयप्रावण्यगन्धराहित्यस्वार्थानुभवादिफलकसाधनान्तराणाम् अहङ्कारविषयप्रावण्याभ्यां स्वस्वरूप नाशकत्वं च ❀ न देहम् ❀ इत्यादिपरमाचार्यसूक्तिबलात् सिध्यत्येव ।

एवं द्राविडसामद्वितीयशतकनवमदशकप्रथमगाथायाम् ❀ एम्मा वीट्टुत्तिरमुम् शेप्पम् ❀ इति परमपुरुषार्थलक्षणमोक्षेऽपि स्वार्थताबुद्धेः, मन्त्ररत्ननमःपदघटकविरोधिस्वरूपपरषष्ठ्यन्तमकारार्थान्तर्गतत्वेन अत्यन्त परिहरणीयतया भगवता पराङ्कुशमुनिनैव प्रदर्शिततया तद्बलेनापि वरणे अहङ्कारममकारगन्धाभावः, स्वार्थानुभवादिफलकोपासनन्यासादीनामहङ्काराद्यन्वयश्च सिध्यत्येव । ननु ❀ एम्मा वीट्टु त्तिरमुम् ❀ इत्यादौ वीडु-मोक्षः, मावीडु-महामोक्षः, एम्मावीडु- सर्वथा महामोक्षःइति मोक्षविशेषाणांव्यावर्त्यासंभवेन केवलमोक्षस्वरूपशिक्षणमात्रतया अवश्यवक्तव्यतया ❀ तिरमुम् शेप्पम् ❀ इत्यादिना तादृशमोक्षगन्धप्रसङ्गत्यागपूर्वकदिव्यचरणारविन्दप्राप्तिप्रार्थनस्यापि मोक्षान्तर्गतदिव्यविग्रहानुभवप्रशंसामुखेन मोक्षस्वरूपशिक्षणार्थतया एव न्याय्यत्वात् तद्बलेन मोक्षविशेषाणामहङ्कारगर्भतया त्याज्यत्वसिद्धिवचनमप्रामाणिकमिति चेन्नैवम् । मोक्षशब्देन त्रिवर्गव्यावृत्तेः, महामोक्षशब्देन संकुचितमोक्षरूपकैवल्यादिसालोक्यव्यावृत्तेः, सर्वप्रकारमहत्त्ववचनेन सर्वोत्कृष्टसूरिदृश्यस्थानप्राप्तिलक्षणसामीप्यसायुज्ययोः प्रतीत्या सारूप्यादिमात्रलक्षणमोक्षव्यावृत्तेश्च स्वरसतः प्रतीत्या विशेषणानां व्यावर्तकतया अक्षतत्वात् । न च ❀ लोकेषु विष्णोर्निवसन्ति केचित् समीपमिच्छन्ति च केचिदन्ये । अन्येऽपि रूपं सदृशं भजन्ते सायुज्यमन्ये सतु मोक्ष उक्तः ॥ ❀ इति वचने सालोक्यादीनां त्रयाणां लोकेषु विष्णोरिति बहुवचनान्तलोकशब्देन प्राकृतलोकावच्छिन्नत्वसिद्धेः, ❀ सतु मोक्ष उक्तः ❀ इति सायुज्यमात्रस्य मोक्षशब्दार्थत्वोक्तेश्च सायुज्यव्यतिरिक्तानां मुक्तित्वासंभवात् तेषां मोक्षशब्देनैव व्यावृत्तिसिद्धया महत्त्वादिविशेषणानामव्यावर्तकत्वमेवेति वाच्यम् । बहुवचनान्तलोकशब्दस्य ❀ ब्रह्मलोकान् गमयति इत्यत्रेव, अप्राकृतलोकबाहुल्यपरतया वा ❀ अदितिः पाशान् ❀ इतिवत् बहुवचनस्य अविवक्षितार्थकतया वा, श्रीवैकुण्ठैकपरत्वे संभवति प्राकृत-

लोकपरत्वोक्तेर्निर्मूलितत्वात् । अनुगृहीतं च ❋ परं जैमिनिः ❋ इत्यादिभाष्ये ❋ अर्थस्यैकत्वे निश्चिते बहुवचनस्य अदितिः पाशानितिवदुपपत्तेः परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसङ्कल्पस्य स्वेच्छापरिकल्पिताः स्वासाधारणाः अप्राकृताश्च लोकाः नात्यन्ताय न सन्ति, श्रुतिस्मृतीतिहास पुराणप्रामाण्यात् ❋ इति । महानारायणे च श्रीवैकुण्ठान्तर्गताः महाविष्णुलोकाः मुक्तप्राप्यत्वेन प्रपञ्चिताः । अथ ❋ सतु मोक्षः ❋ इत्यनेन सायुज्यमात्रस्य मुक्तित्वमुच्यत इत्यनुपपन्नम् । ❋ मोक्षं सालोक्यसामीप्यं सारूप्यं वा न कामये । इच्छाम्यहं महाभाग सायुज्यं तव सुव्रत ॥ ❋ इति खिलऋग्वचने सालोक्यादीनां मोक्षत्वकण्ठोक्त्या तद्विरोधात् । सतु मोक्षः इत्यत्र तुकारेण सालोक्यादित्रयवैलक्षण्याभिधानात् स विलक्षणो मोक्ष उक्त इति सायुज्यस्य विलक्षणमोक्षत्वेनैव उक्तिप्रतीत्या तस्य सायुज्योत्कर्षमात्रपरत्वेन सालोक्याद्यमुक्ति-परत्वेन ग्राहकत्वायोगाच्च । तदेवम्, एम्मावीडु इति सर्वप्रकारमहत्त्वेन मोक्षविशेषणस्य मोक्षान्तरव्यावर्तनार्थत्वात्, निरमुम शेषम् इत्यादेरपि दोषदुष्टमोक्षान्तरव्यावृत्तिपरत्वमेव न्याय्यम् । तत्र एम्मावीडु इति सर्वप्रकार-विलक्षणमहामोक्षं सायुज्यमुपादाय तद्विषये निरमुम् शेषमिति चेतनस्य प्रतिग्रहीतृत्वेन भगवतो दातृत्वेन च प्रसङ्गार्हतायाः प्रतिषिद्धतया चेतनयत्नफलत्वेन ❋ शास्त्रफलं प्रयोक्तरि ❋ इति न्यायेन चेतनभोग्यतया भगव-द्दीयमानस्य न्यासोपासनजनितसायुज्यविशेषस्य स्वस्वरूपविरुद्धत्वं लभ्यते । तथाच, यथा मोक्षत्वाभावात् त्रिवर्गस्य त्याज्यत्वम्, यथाच महामोक्षत्वाभावात् कैवल्यस्य त्याज्यत्वम्, यथा वा सर्वप्रकारविलक्षणमहा-मोक्षत्वाभावात् सालोक्यसारूप्यसामीप्यानां त्याज्यत्वम्; तथैव स्वरूपानुरूपसर्वप्रकारविलक्षणमहामोक्षत्वा-भावात् साधनान्तरजनितसायुज्यमोक्षस्यापि त्याज्यत्वमविशिष्टमेवेत्युक्तं भवति ॥

एतावानेव ग्रन्थ उपलभ्यते ।

॥ शुभमस्तु ॥

श्री वचनभूषणमीमांसाभाष्ये
उपलब्धांशस्समाप्तः ॥

## सविनयं विज्ञापनम् ।

सुप्रसिद्धमिदं ग्रन्थरत्नं कुन्नत्तूरय्यन् समाख्यैराचार्यवर्यैरनुगृहीतमिति प्रसिद्धिप्राचुर्यमवलम्ब्य अस्माभिस्तथैव मुद्रणमकारि । निपुणनिरूपकमहाभागास्तु पेरिय शुद्धसत्त्वम् अण्णन् इति द्राविडव्यपदेशभाजन-कौशिकश्रीनिवासार्यतनयानाम् एरुम्बिल्कन्दाडैअण्णनिति द्राविडनामकवरददेशिकसमाख्यानां कृतिरिति, कुन्नत्तूरय्यन् स्वामिनां तु एतत्प्रचारप्रवणतामात्रमेवेति च सोपपत्तिकमाचक्षते । निर्णये महान्तः प्रमाणम् ॥

इति. श्रीकाञ्ची. प्र. अण्णङ्गराचार्यः ॥